# राजस्थान पुरातन ग्रन्थमाला

राजस्थानराज्य द्वारा प्रकाशित

सामान्यत अखिलभारतीय तथा विशेषतः राजस्थानदेशीय पुरातनकालीन

संस्कृत, प्राकृत, अपभ्रंश, राजस्थानी, हिन्दी आदि भाषानिबद्ध

विविधवाङ्मयप्रकाशिनी विशिष्टग्रन्थावली

•

प्रधान-सम्पादक

फतहसिंह, एम. ए, डी. लिट्.

ग्रन्थाङ्क ११०

•


आचार्यश्रीसरयूप्रसादद्विवेदप्रणीतम्

# आगमरहस्यम्

( उत्तरार्द्धम् )

•


प्रकाशक

राजस्थान-राज्याज्ञानुसार

निदेशक राजस्थान प्राच्यविद्या प्रतिष्ठान

जोधपुर ( राजस्थान )

१९६९ ई०

•

वि० स० २०२६

भारतराष्ट्रीयशकाब्द १८९१

मुद्रक.—श्री राधेश्याम शर्मा, श्री शंकर आर्ट प्रिण्टर्स, जयपुर।

# प्रधान-सम्पादकीय



आचार्य श्रीसरयूप्रसाद द्विवेदी द्वारा रचित 'आगमरहस्य' के उत्तरार्द्ध को पाठको के करकमलो मे रखते हुये प्रतिष्ठान महान् हर्ष का अनुभव कर रहा है। ग्रन्थ का पूर्वार्द्ध विद्वान् सम्पादक की भूमिका-सहित प्रकाशित किया जा चुका है। पूर्वार्द्ध की भाँति ही उत्तरार्द्ध भी एक महान् संग्रह-ग्रन्थ है जिसमे प्रसिद्ध आगम-परम्परा के विविध सम्प्रदायो के ग्रन्थो का साररूप एकत्र किया गया है। इस ग्रन्थ मे विशेष रूप से गौड, केरल तथा कश्मीर प्रदेश की परम्परा का निरूपण प्राप्त है और इन तीनो सम्प्रदायों के अन्तर्गत पुरश्चर्या-विधियो और मेधासाम्राज्य तथा पूर्णाभिषेक-नामक दीक्षाविधियो आदि का सविस्तार वर्णन किया गया है। इसी प्रसङ्ग मे आगम की साधना-पद्धति के अन्तर्गत ब्राह्मी आदि पञ्चमुद्राओ एव उनके द्वादश भेदो के समान ही कर्मदूती तथा ज्ञानदूती के यजन और पूजन का विधान भी वडा मनोरञ्जक है।

यह कहने की आवश्यकता नही कि आगम-परम्परा का केन्द्र-विन्दु महाशक्ति है। यह क्रमशः कादि और हादि द्विविव आम्नाय अर्थसङ्गति के द्वारा व्यक्त की जाती है। इसमे से कादि काली है तो हादि त्रिपुरसुन्दरी। अथवा कादि ब्रह्मरूप है तो हादि शिवरूप। शक्तिसङ्गमतंत्र के अनुसार चिच्छक्ति कादिरूपा है और चिद्ज्ञानगोचराशक्ति को हादि की सज्ञा दी गई है तथा चिदानन्दस्वरूपा नामक शिवशक्त्यात्मक तत्त्व को मह. कहा गया है। इसी प्रकार आगम-आम्नाय के मनु, कामराज, सुन्दरी, षोडशी, परा, यम संयम आदि अनेक पारिभाषिक शब्दो के साथ काली, तारा, रक्तकाली, भुवना, महिषमर्दिनी, त्रिपुरा, त्रिपुटा, दुर्गाविद्या तथा प्रत्यङ्गिरा-समेत कालीकुल का समाख्यान किया गया है तथा सुन्दरी, भैरवी, वाला, वगला, कमला, धूमावती, मातङ्गीविद्या, स्वप्नावती, महाकाली तथा मधुमती के नाम से श्रीकुल का वर्णन किया गया है। इसी प्रकार शुद्धविद्या, वाला, द्वादशार्द्धा तथा मातङ्गिनी आदि अनेक देवियो के उल्लेख के साथ व्याहृतियों का

ब्रह्मविद्या एवं गायत्री के साथ होने वाले सम्बन्धो की चर्चा करते हुये, गाणपत्य, कार्तिकेय, मृत्युञ्जय, नीलकण्ठ, जातवेद आदि देवो का वर्णन किया गया है।

उक्त आध्यात्मिक और धार्मिक चर्चा के साथ-साथ कुछ ऐतिहासिक एव भौगोलिक विषयो का भी उल्लेख हो गया है। इसी प्रसङ्ग मे विशेष रूप से शक्ति-सङ्गमतन्त्र आदि प्राचीन ग्रन्थो के ५६ देश ५ प्रस्थ यहाँ पर विशेष रूप से उल्लेखनीय हैं, क्योकि इनसे पता चलता है कि किसी समय मे हमारा देश इन्द्रप्रस्थ, वरुणप्रस्थ, यमप्रस्थ आदि पाँच प्रस्थो मे बँटा हुआ था और उनके अन्तर्गत जो ५६ देश गिनाये जाते थे उनमे मक्केश्वर ( अरब का मक्का ) पर्यन्त विस्तृत सैन्धव देश भी आता था।

अन्त मे, मै विद्वान् सम्पादक और श्री शङ्कर आर्ट प्रिन्टर्स, जयपुर के व्यवस्थापक को धन्यवाद अर्पित करता हूँ जिन्होंने कठिन परिश्रम करके इस कार्य को सम्पादित किया है।

रामनवमी,
चैत्र शुक्ला ९, सवत् २०२६ वि०
जोधपुर

फतहसिंह

अथ आगमरहस्योत्तरार्द्धस्य

# स्थूलविषयसूची

## तृतीय पटलः



## चतुर्थः पटलः

| क्रमाङ्काः | विषयाः | पृ० स० |
|---|---|---|

इति श्रीमदागमरहस्योत्तरार्द्धसूची समाप्ता ।

आचार्यश्रीसरयूप्रसादद्विवेदप्रणीतम्

# आगम-रहस्यम्

## ( उत्तरार्धो भागः )

---

विघ्नेशोऽवतु नो विघ्नादपारकरुणार्णवः ।
यत्कृपालोकने लोका विशोकाः शं प्रपेदिरे ॥१॥

अथागमरहस्याख्ये पूर्णे पूर्वार्धके तथा ।
परार्धे शक्तितंत्रे च सूची वक्ष्ये क्रमोदिताम् ॥२॥

कादिहादिव्यवस्यादौ कालीश्रीकुलयोः क्रमः ।
षडाम्नायप्रकथनमाम्नायानां स्वरूपकम् ॥३॥

षट्पंचाशद्देशसंज्ञा पंचप्रस्थमतः परम् ।
प्रथमे पटले ज्ञेयं संप्रदायत्रयस्थितिः ॥४॥

देशभेदात् संप्रदायस्थितिः पात्रस्थितिस्तथा ।
लक्षणं कलशस्याथ पात्रमानविसर्जने ॥५॥

पात्राधिकारिणश्चैव तथैवाधारभेदकाः ।
गौडकेरलकाश्मीरे संकल्पनविधिश्च यः ॥६॥

स्वप्नलब्धमनोः कृत्यं संप्रदायत्रये तथा ।
पुरश्चर्याविधिस्तद्वत् प्राचीनियम एव च ॥७॥

द्वितीये पटले ज्ञेयो मनोऽभीष्टप्रदाः सुराः ।
कीर्तिताश्च तथाचारश्रैष्ठ्यं कौलप्रशंसनम् ॥८॥

अधिकारी तथा कौलधर्मेऽनर्हस्तथैव च ।
कुलाकुलविमर्शश्च विद्याभेदास्ततः परम् ॥९॥

सिद्धविद्या महाविद्या युगभेदात् प्रकीर्तिता ।
विद्यायां च तथाचारो महाचीनप्रशंसनम् ॥१०॥

दीक्षाप्राशस्त्यमथ च गुरुलक्षणमप्यथ ।
शिष्यस्यापि स्वरूपं च दीक्षाकालस्तथा विधिः ॥११॥
मंत्रोपदेशकथनं तथैव शक्तिदीक्षणम् ।
अङ्गभेदाश्च विद्यानां शिवाश्च वटुकास्तथा ।
तथा दश गणेशाश्च योगिन्योऽपि तथा दश ॥१२॥
मण्डलानि क्रमात् तद्वत् तृतीये पटले स्मृताः ।
ततो दीक्षाप्रभेदाश्च त्रिशक्तिक्रमतस्तथा ॥१३॥
मेधासाम्राज्यपूर्णाख्यभेदा दीक्षाविधौ तथा ।
अभिषेकप्रशंसा च तस्मिंश्चायोग्यनिर्णयः ॥१४॥
योग्यस्यापि विचारश्च योग्यायोग्यगुरुस्तथा ।
चतुर्थे पटले प्रोक्तस्तद्वद् दीक्षाक्रियाविधिः ॥१५॥
अधिवासनपर्यन्तः पंचमे पटले स्मृतः ।
अभिषेकविधिः षष्ठे स्मृतः साङ्गक्रियायुतः ॥१६॥
ततः पूर्णाभिषिक्तस्य प्रशंसा परिकीर्तिता ।
शक्त्युच्छिष्टे विशेषो यः प्रायश्चित्तेऽप्ययोग्यके ॥१७॥
मपंचकस्य स्वीकारः कुलपूजाविधौ तथा ।
अन्यत्र निंदाकथनं कुलार्चागोपनस्य च ॥१८॥
वैशिष्ट्यं लक्षणं तद्वत् कौलस्य कुशलस्य च ।
कार्याकार्यविचारश्च कौलानां स्मृतिरूपकः ॥१९॥
ततश्च समयाचारः कुलवृक्षास्तथैव च ।
चतुष्पथस्य कथनं शाक्तधर्मस्य कीर्तनम् ॥२०॥
धर्माष्टकविचारश्च तथा प्रोक्तं समाष्टकम् ।
कुलाचार इति प्रोक्तः पटले सप्तमे तथा ॥२१॥
अंतर्यागबहिर्यागौ पंचशुद्धिरतः परम् ।
सुधोत्पत्तिः सुधाशुद्धिश्चतुर्णां शोधनं तथा ॥२२॥
शक्तिशुद्धिश्च कलशस्थापनं च ततः परम् ।
श्रीपात्रस्थापनं चैव ह्यष्टगंधस्य निर्णयः ॥२३॥

अष्टमे पटले ज्ञेयः पात्राणां स्थापनं तथा ।
गौडकेरलकाश्मीरे व्यवस्था पात्रसंस्थितेः ॥२४॥

षड्बलिस्त्वथ मातंगीबलिस्तत्त्वत्रयस्य च ।
स्वीकारश्च तथा कालो बलेश्चैव विसर्जने ॥२५॥

उच्छिष्टभैरवार्चा च देवीपर्वाण्यतः परम् ।
रात्रीणां निर्णयश्चैव योगो दशहराभिधः ॥२६॥

सिद्धिदाश्च तथा योगास्तूर्ध्वाम्नायस्य पर्वणः ।
कथनं युगमन्वाद्याः क्रमशः परिकीर्तिताः ॥२७॥

कुलर्क्षतिथिवारादिपूजानियम एव च ।
पूजाभेदाश्च संप्रोक्तास्तथा समयपूजनम् ॥२८॥

अष्टाष्टकस्य यजनं पूजा मिथुनसंज्ञिका ।
नवमे पटले ज्ञेया कुलार्चायाः प्रशंसनम् ॥२९॥

चक्रेश्वरविवेकश्च ततः पाशाष्टकं तथा ।
नियमश्चैव संप्रोक्तो वीरशक्तिनिमंत्रणे ॥३०॥

प्रशस्तत्याज्यवीराणां निर्णयस्त्याज्यशक्तयः ।
विविधानां च पाकानां करणं कर्दमास्तथा ॥३१॥

विधिश्चैव तथा प्रोक्तः पूजने शक्तिवीरयोः ।
धारणं विजयायाश्च स्तोत्रमस्याः शुभप्रदम् ॥३२॥

तत्त्वशुद्धिस्ततः प्रोक्तः समयार्चाव्यवस्थितिः ।
कुलसंध्या च कौलानामष्टगंधं ततः परम् ॥३३॥

विसर्जनं तथा चक्रपूजायाः परिकीर्तनम् ।
दशमे पटले तद्वदुल्लासभेदलक्षणे ॥३४॥

पात्रसंमेलनावस्था चक्रभेदक्रमस्तथा ।
वज्रादिपुष्पजातीनां भेदाश्च परिकीर्तिताः ॥३५॥

ग्राह्याग्राह्यव्यवस्थानं चक्रे संपरिकीर्तितम् ।
एकादशे च पटले विज्ञेयमथ पूजनम् ॥३६॥

शक्तेश्च लक्षणं तद्वत् पूजकस्य च लक्षणम् ।
अयोग्ये दोषबाहुल्यमधिकारिणमेव च ॥३७॥

शाक्तधर्मे च यत् हेयं शक्तीनां भावनास्तथा ।
निर्णयो जीवचक्रादेः साधनं विविधं तथा ॥३८॥

ब्राह्म्यादिपंचमुद्राणां भेदाश्च द्वादशे स्मृताः ।
कर्मदूत्याश्च यजनं सविधानं प्रकीर्तितम् ॥३९॥

पूजनं ज्ञानदूत्याश्च पटले वै त्रयोदशे ।
वीरसाधनकर्माणि ह्यासनानां व्यवस्थितिः ॥४०॥

व्याघ्राजिने विशेषश्च फले तत्शोधनेऽपि च ।
अवरोहासनान्यग्रे तत्कालनियमास्तथा ॥४१॥

महाशंखस्य निर्माणं तत्शोधनमतः परम् ।
शवसाधनकं कर्म संक्षेपेण प्रकीर्तितम् ॥४२॥

शुद्धिश्च कंकणादीनां पटले वै चतुर्दशे ।
रहस्यमालासंशुद्धिर्महायंत्रस्य शोधनम् ॥४३॥

प्रायश्चित्तं यंत्रभंगे पटले तिथिसंज्ञके ।
श्मशानसाधनं चैव ततश्च शवसाधनम् ॥४४॥

अचूडसाधनं तद्वत् पटले षोडशे स्मृतम् ।
नवरात्रार्चनं चैव संप्रदायविभेदतः ॥४५॥

पुरश्चर्यानुकल्पाश्च कलशस्थापने विधिः ।
साधनानि नवार्चायामुपरागविधिस्तथा ॥४६॥

स्तोत्रानुष्ठानकथनं तेषामेव च साधनम् ।
फलस्तुतिप्रपठने निर्णयः संप्रकीर्तितः ॥४७॥

महाराज्ञीविभूतित्वे यागादीनां व्यवस्थितिः ।
पटले सप्तदशके कीर्तितस्त्वथ उच्यते ॥४८॥

उपचाराधिदेवाश्च देवीधूपमतः परम् ।
नियमाश्च तथा प्रोक्ता लोपे यन्नित्यकर्मणः ॥४९॥

संस्थापने च यंत्रस्य निर्णयः पूजने तथा ।
देवीनां च तिथेस्तद्वन्निर्णयश्च तथा स्मृतः ॥५०॥

कुल्लुका दशविद्यानां मंत्रांगवासनास्तथा ।
कुलद्वये गुरोर्ध्यानं भेदाः श्रीपादुकामनोः ॥५१॥

संघट्टमुद्राः संप्रोक्ताः संप्रदायपुरस्सराः ।
साधनं शावरस्याथ पटलेऽष्टादशे स्मृतः ॥५२॥

वीरभावोऽभिषिक्तानां पानं मलविमोचनम् ।
पशुभावस्ततः पंचमकारेऽभेदकीर्तनम् ॥५३॥

मपंचकस्य संकेतनाम्नां प्रकथनं तथा ।
अनुकल्पास्तथैवैषामेकोनविंशके स्मृताः ॥५४॥

प्रायश्चित्तमथो नानाविधं प्रामादिकं ततः ।
यंत्रभंगे ह्यकरणे प्रातःकृत्यादिके तथा ॥५५॥

तथैव संध्याकरणे पात्रासादनकर्मणि ।
निपाते मक्षिकादीनां पात्रस्थापितभ्रंशने ॥५६॥

यंत्रभंगे तथा भ्रंशे पात्राणामुपघातके ।
चषकस्योपघाते च दीपनाशे तथैव च ॥५७॥

दीक्षाकुंभोपघाते च कलशस्योपघातके ।
तथैवाचार्यपूजायां बलात् स्त्रीग्रहणे तथा ॥५८॥

आचार्येऽनभिषिक्ते चासंस्कृते मादने तथा ।
प्राकट्ये समयस्याथ सुवासिन्या अनादरे ॥५९॥

बालवृद्धादिविषये प्रायश्चित्तप्रकीर्तनम् ।
सांतापनं व्रतं चैव तथा चांद्रायणव्रतम् ॥६०॥

कृच्छ्रव्रतं तथान्त्येष्टिर्विंशे च पटले स्मृतम् ।
एकविंशे कौलयोगः समासात् परिकीर्तितः ॥६१॥

पररूपानुसंधिश्च कौलयोगविनिर्णयः ।
द्वाविंशे पटले चैव त्रयोविंशे गुरुस्तुतिः ॥६२॥

शक्तिस्तोत्रं ततः पात्रप्रशंसा शांतिरेव च ।
वीरवंदनकं स्तोत्रं कुलस्तोत्रमतः परम् ॥६३॥

आरार्तिकं भुजंगाख्यसुन्दरं स्तोत्रमुत्तमम् ।
पादुकापंचकस्तोत्रं त्रयोविंशतिमे स्मृतम् ॥६४॥

चतुर्विंशे परांबाया नामसंस्मरणं तथा ।
एवं चतुर्विंशतिभिः पटलैरुत्तरार्धकम् ॥६५॥

आगमांभोधिवाग्रत्नभूषितं साधकेष्टदम् ।
प्रकृतं व्याहरिष्यामि संप्रदायानुसारतः ॥६६॥

कादिर्हादिर्वपुर्यस्या विहारश्च कुलद्वये ।
संप्रदायत्रयं धर्मं सा षडाम्नायगावतु ॥६७॥

संप्रदायत्रयं वक्ष्ये हादिकादिविभूषितम् ।
कुलद्वये स्थितिर्यस्य यद् ज्ञानात् साधकः शिवः ॥६८॥

अथ कादिहादि व्यवस्था यथा शक्तिसंगमे—

कादिहादिप्रभेदेन द्विधाम्नायार्थसंहृतिः ।
कादिः काली महाशक्ति र्हादिस्त्रिपुरसुन्दरी ॥६९॥

कादित्वाद् ब्रह्मरूपत्वं हादित्वात् शिवरूपता ।
चिच्छक्तिः कादिरूपा स्यात् हादिश्चिज्ज्ञानगोचरा ॥७०॥

चिदानंदस्वरूपाख्यं शिवशक्त्यात्मकं महः ।
शक्तेः काल्यां च प्राधान्यं सर्वदा परिकीर्तितम् ॥
सुंदर्या ब्रह्मचारित्वं काल्येवानंदरूपता ॥७१॥

अन्यच्च—

कादिस्तु कामराजोऽस्ति हादिर्लोपा पुरेरिता ।
इदं वटेशसंमत्या पारिभाषिकमीरितम् ॥७२॥

कादयो मनवः संति बहवः परमेश्वर ! ।
न तत्र कादिता क्वापि हादावपि तथेश्वर ! ॥७३॥

हादयो मनवो देव षट्त्रिंशत्पद्मसंख्यकाः ।
न तत्र हादिता कापि षोडश्यामेव हादिता ॥७४॥

कादित्वं कालिकायां च तेन प्रोक्तः कहात्मकः ।
काल्यामपि हादिकादिभेदाः सन्त्येव भूरिशः ।।७५।।
न तत्र कादिहादित्वं लोपायां न तु हादिता ।
लोपा तु सुन्दरीभेदः कामराजादयो यथा ।।७६।।
इत्येवं कादिहादित्त्वं हादिः श्रीषोडशी परा ।
हादौ तु नियमाः प्रोक्ताः यमसंयमनादयः ।।
कादौ तु नियमो नास्ति स्वेच्छया धर्ममाचरेत् ।।७७।। इति ।

अथ कुलद्वयनिरूपण निरुत्तरतन्त्रे—

काली तारा रक्तकाली भुवना महिषमर्दिनी ।
त्रिपुरा त्रिपुटा दुर्गा विद्या प्रत्यंगिरा तथा ।।७८।।
कालीकुलं समाख्यातं श्रीकुलं च ततः परम् ।
सुंदरी भैरवी बाला बगला कमला तथा ।।७९।।
धूमावती च मातंगी विद्या स्वप्नावती प्रिये ।
महाकाली मधुमती श्रीकुलं भाषितं मया ।।८०।।

अन्यत्रापि—

षडाम्नायविशुद्धात्मा कुलद्वयमथाश्रितः ।
संप्रदायत्रये गच्छन् देवसायुज्यमाप्नुयात् ।।८१।। इति ।

षडाम्नायाश्च समयातन्त्रे श्रीक्रमसंहितायामपि—

शुद्धविद्या च बाला च द्वादशार्धा मतंगिनी ।
शुकशारीवेणुवीणाहसन्त्युच्छिष्टश्यामलाः ।।८२।।
एताः कामगिरीन्द्रस्थाः पूर्वाम्नायाधिदेवताः ।
गुरुत्रयादिपीठान्तं चतुर्विंशत्सहस्रकम् ।।८३।।
व्याहृतीर्ब्रह्मविद्या च गायत्री वेदसूस्तथा ।
गाणपत्यं कार्तिकेयं तथा मृत्युंजयाभिधः ।।८४।।
नीलकंठो जातवेदास्तथा प्रत्यंगिरादयः ।
भुवनेशी चान्नपूर्णा श्रीविद्याभेदसंयुता ।।८५।।

तत्पूर्वप्रत्यये मंत्राः वैदिकास्तु द्विकोटयः ।
एतदावरणोपेतं पूर्वाम्नायमिदं स्मृतम् ॥८६॥

इति पूर्वाम्नाय ।

सौभाग्यविद्या वगला वाराही वटुकस्तथा ।
महिषघ्नी तथा लक्ष्मी त्वरिता वशिनी तथा ॥८७॥
श्रीस्तिरस्करिणी प्रोक्ता दक्षिणाम्नायदेवता ।
त्रिशतसहस्रसंख्याकाः पूर्वपीठस्थिताः सदा ॥८८॥
भैरवादि च सिद्धौघा वटुकत्रयमीरिताः ।
पदद्वययुता याश्च देवताश्च विशेषतः ॥८९॥
अघोरं शरभं खड्गरावणं वीरभद्रकम् ।
शैवं पाशुपताद्यस्त्रं शास्तारं स्वर्णभैरवम् ॥९०॥
दक्षिणामूर्तिमंत्राद्याः शैवागमसमुद्भवाः ।
एतदावरणोपेतं दक्षिणाम्नायमीरितम् ॥९१॥

इति दक्षिण ।

लोपामुद्रा महादेवी अंबा च भुवनेश्वरी ।
अन्नपूर्णा कामकला पीठं जालंधरं तथा ॥९२॥
महासरस्वती विद्या तथा वाग्वादिनी पुनः ।
प्रत्यंगिरा भवानी च पश्चिमाम्नायदेवताः ॥९३॥
दूतीनां च चतुःषष्टिः सिद्धानां त्रिसहस्रकम् ।
सुदर्शनं वैनतेयं कार्तिकेयं नृसिंहकम् ॥९४॥
नामत्रयं राममंत्रं गोपालं सौरमेव च ।
धन्वंतरिं चेंद्रजालमिद्याद्याः सुरनायकाः ॥९५॥
अष्टादशाक्षरी विद्या द्वादशार्णस्तथैव च ।
अन्ये मंत्रा बहुविधाः शैवागमसमुद्भवाः ॥९६॥
सद्योजातमुखोद्भूतं तद् द्विकोटिमितं तथा ।
आम्नायं पश्चिमं त्वेतत् सर्वदा सर्वकामदम् ॥९७॥

इति पश्चिम ।

तुरीया च महार्धा च अश्वारूढा तथैव च ।
मिश्रांबा च महादेवी श्रीमद्वाग्वादिनी तथा ॥९८॥
एताश्चोड्यानपीठस्थाः द्विसहस्रं तु देवताः ।
मुद्रावलीनां नवकं दुर्गा कात्यायनी तथा ॥९९॥
चण्डी च नकुली चापि ह्यपरे वडवामुखाः ।
रेणुका च तथा लक्ष्मी मातृकाख्या स्वयंवरा ॥१००॥
कालिकाभेदसहिता ताराभेदैश्च संयुता ।
मातंगी भैरवी छिन्ना तथा धूमावती मता ॥१०१॥
एतदावरणोपेतं श्रीविद्या शांभवं तथा ।
वामदेवमुखोद्भूतं द्विकोटिमंत्रनायकम् ॥१०२॥
पंचवीरावलीयुक्तमाम्नायं चोत्तरं स्मृतम् ।

इत्युत्तरः ।

समस्तभेदसहिता कालिका या प्रकीर्तिता ॥१०३॥
द्वाविंशत्यक्षरी तासां महाराज्ञी प्रकीर्तिता ।
श्रीप्रासादपरामंत्र ऊर्ध्वाम्नाये प्रकीर्तितः ॥१०४॥
परापरा च सा देवी परा शांभविका तथा ।
एताः शांभवपीठस्थाः सहस्रपरिवारिताः ॥१०५॥
आरभ्य मालिनीपूर्वं मण्डलान्तं महामनुम् ।
सायुज्यहेतुकं नित्यं ज्ञेयं चोर्ध्वमकल्मषम् ॥१०६॥

इत्यूर्ध्वम् ।

नागशक्त्यादयो मंत्राः पातालाम्नायगाः स्मृताः ।
शिवस्य मुखपद्मेभ्यः सर्वाम्नायाः प्रकीर्तिताः ॥१०७॥

केचित् पातालाम्नायमपास्य अनुत्तरमिति पठन्ति, तच्च कादिमतम् ।

अनुत्तरे यथा—

पश्चादनुत्तरं ज्ञेयं परब्रह्मस्वरूपिणम् ।
ईशानमुखसंभूतं सर्वपापहरं परम् ॥१०८॥
अनुत्तरांबा तद्वत् स्याद् राजराजेश्वरी तथा ।
कालसंकर्षिणी विद्या ऊर्ध्वाद्याश्च ततः परम् ॥१०९॥

परौघाश्चापि दिव्यौघाः तुर्यौघाः कामराजकम् ।
श्रीपराचरणं पश्चात् तुर्याचरणमेव च ॥११०॥

मुद्राचरणमाख्यातं कामराजमनन्तरम् ।
मिश्रौघचरणं पश्चात् सहजांबा परा तथा ॥१११॥

शुक्लविद्या रक्तविद्या मिश्रविद्या ततः परम् ।
तथा निष्कलविद्या च परा निष्कलसंयुता ॥११२॥

पादुकादशकं चैव तथा श्रीगुरुपादुका ।
पञ्चांबा नवनाथाश्च मूलविद्याश्च षोडश ॥११३॥

आदिनाथमनादि च अनामयमनंतकम् ।
चिदाभासं च विज्ञेयाः पंचाम्बा देशिकोत्तमैः ॥११४॥

उन्मना वशिनी चैव व्यापकः शक्तिरेव च ।
ध्वनिश्च ध्वनिमात्रा च अनाहत च इन्दुकम् ॥११५॥

चिदाकाशश्च विज्ञेयो नवनाथाः प्रकीर्तिताः ।
महाविद्या परा चातिरहस्याख्या च योगिनी ॥११६॥

कुलपंचाक्षरी पंचदशार्णाऽनुत्तरांबिका ।
अनुत्तरमतं चैव गुरुक्रमविमर्शिनी ॥११७॥

अनामाख्या च संकेतविद्यानुत्तरपूर्विका ।
वाग्वादिनी महाविद्या महात्रिपुरसुन्दरी ॥११८॥

महात्रिपुरसुंदर्याः षोडशैव प्रकीर्तिताः ।
आधारविद्याषट्कं च पुनरङ्घ्रिद्वयं तथा ॥११९॥

षडाधारं तथा ज्ञेयं षड्दर्शनमतः परम् ।
बौद्धं च वैदिकं चैव सौरं वैष्णवशाक्तिके ॥१२०॥

षट्त्रिंशच्चैव तत्त्वानि मीनकेतुकलादिकम् ।
अनुत्तरमिदं प्रोक्तं स्मरणान्मोक्षदायकम् ॥१२१॥

अत्रैवास्मिन्ननुत्तरे आनदाम्नायरहस्याम्नायेति भेदद्वय कुलकल्याणीकारेण काश्मीरमनुसृत्य त्रिविक्रमेणोक्तम् । तन्मते अष्टाम्नायाः तेषा स्वरूपं गोत्रं शाखा च ।

तद्यथा कौलसर्वस्वे—

पूर्वाम्नायं विंदुरूपं षट्कोणं दक्षिणं स्मृतम् ।
अष्टपत्रं पश्चिमं स्यादुत्तरं षोडशच्छदम् ॥१२२॥
ऊर्ध्वं त्रिकोणरूपं स्यात् पातालं च त्रिवृत्तकम् ।
पराम्नायं च वलयद्वयरूपं ततः परम् ॥१२३॥
आनंदं भूपुरैकं स्याद्रहस्यं वलयद्वयम् ।
पूर्वस्य चांजनीगोत्रं मानसी दक्षिणस्य च ॥१२४॥
विभावरी पश्चिमः स्याद्भुतमुत्तरकस्य च ।
ऊर्ध्वस्य जालपा गोत्रं पातालस्य च श्यामला ॥१२५॥
मातंगिनी पराख्यस्यानंदस्य स्याज्जलंधरी ।
रहस्यस्य निजं गोत्रं क्रमाद् ज्ञेयं च देशिकैः ॥१२६॥
पूर्वे सामंतिनी शाखा दक्षिणे च मनोन्मनी ।
पश्चिमे यक्षिणी शाखा चोत्तरे कालिका स्मृता ॥१२७॥
ऊर्ध्वे सौभाग्यशाखा स्यात् पाताले शीतला भवेत् ।
मनस्विनी पराम्नाये ह्यानंदे शृंगिनी मता ॥१२८॥
रहस्ये च स्वयंभू स्यादिति शाखाविनिर्णयः ।

अन्यच्च सारस्वते—

पूर्वाम्नायः श्वेतरूपो द्विकोटिमनुसंयुतः ।
भुवनेशी कोटपालो भैरवी दंडधारिणी ॥१२९॥
अन्नपूर्णा पाककर्त्री सोमसूर्यौ च साधकौ ।
दक्षिणः पीतरूपी स्यात् त्रिकोटिमनुसंयुतः ॥१३०॥
कुब्जेशो कोटपालश्च कालिका दंडधारिणी ।
इंधिका पाककर्त्री च लक्ष्मीशक्तिश्च शारिका ॥१३१॥
पश्चिमोऽरुणरूपो स्यान्मंत्रकोटित्रयान्वितः ।
श्यामला कोटपालश्च विंध्येशी दंडधारिणी ॥१३२॥
लघुश्यामा पाककर्त्री भैरवाः साधकाः स्मृताः ।
कृष्णरूप्युत्तरो ज्ञेयो मंत्रकोटिद्वयान्वितः ॥१३३॥

कोटपालश्च कवीरा तारा स्याद् दंडधारिणी ।
पाककर्त्री चैकजटा महाकालश्च साधकः ॥१३४॥
ऊर्ध्वाम्नायश्च हरितः कोटिमंत्रविभूषितः ।
अंबिका कोटपाला स्यात् श्यामा स्याद्दंडधारिणी ॥१३५॥
जातवेदाः पाककरो महेशः साधको हरिः ।
पराम्नायः श्वेतरूपी कोट्यर्धमनुसंयुतः ॥१३६॥
इंदुभा कोटपालश्च हंसिनी दंडधारिणी ।
शारदा पाककर्त्री च कालो यत्र महेश्वरः ॥१३७॥
आनंदः स्वच्छरूपी च द्विकोटिमनुसंयुतः ।
कोटपालो रतिर्यत्र वरदा दंडधारिणी ॥१३८॥
मनोभव. पाककरः साधकश्चतुराननः ।
रहस्यः सर्ववर्णाभो मनुभिः शतकोटिभिः ॥१३९॥
युतस्तत् कोटपालश्च षोडशी परिकीर्तिता ।
कुरुकुल्ला दंडपाणि र्दक्षिणामूर्तिरीश्वरः ॥१४०॥ इति ।

एतेषां प्रयोजनमग्रे वक्ष्यमाणवीरार्चने आम्नायमत्रे भविष्यति । अथ शाक्तपारपर्यज्ञानार्थं वक्ष्यमाणसप्रदायत्रयस्थित्यै देशविभागो लिख्यते । तद्यथा शक्तिसंगमे उड्डभैरवीये च—

देशव्यवस्थां देवेशि ! कथ्यते शृणु सांप्रतम् ।
वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ॥१४१॥
तावद्वंगाभिधो देशो यात्रायां नहि दुष्यति ।
वज्राकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ॥१४२॥
वंगदेशो मया प्रोक्तः सर्वसिद्धिप्रदर्शकः ।
जगन्नाथात् पूर्वभागे कृष्णातीरान्तगं शिवे ॥१४३॥
कलिंगदेशः संप्रोक्तो वाममार्गपरायणः ।
कलिंगदेशमारभ्य पंचाष्टयोजनं शिवे ॥१४४॥
दक्षिणस्यां महेशानि कालिंगः परिकीर्तितः ।
सुब्रह्मण्यं समारभ्य यावद्देवो जनार्दनः ॥१४५॥

तावत् केरलदेशः स्यान्मध्ये च सिद्धकेरलः ।
रामेश्वरो वेंकटेशो हंसकेरलसंज्ञकः ॥१४६॥
अनंतसेनमारभ्य यावत्स्याद्दुडुपं परे ।
तावत् सर्वेशनामा तु केरलः परिकीर्तितः ॥१४७॥
शारदामठमारभ्य कुंकुमाद्रितटान्तकम् ।
तावत् काश्मीरदेशः स्यात् पंचाशद्योजनान्तकम् ॥१४८॥
कौलेश्वरं श्वेतगिरिं त्रिपुरां नीलपर्वतम् ।
कामरूपाभिधो देशो गणेशगिरिमूर्धनि ।
त्रियंबकं समारभ्य मध्ये चोज्जयिनीं शिवे ॥१४९॥
मार्जारतीर्थाद्राजेन्द्रकोलापुरनिवासिनी ।
तावद् देशो महाराष्ट्रः कपटस्याभिगोचरः ॥१५०॥
जगन्नाथादूर्ध्वभागे अर्वाक् श्रीभ्रमरांबिकाम् ।
तावदन्ध्राभिधो देशः सौराष्ट्रं शृणु सादरम् ॥१५१॥
कोंकणात् पश्चिमं तीरं समुद्रप्रान्तगोचरम् ।
हिंगुलाजान्तकं देवि पंचयोजनलेशतः ॥१५२॥
सौराष्ट्रदेशो देवेशि षाण्मातु गुंर्जराभिधः ।
श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः ॥१५३॥
तैलंगदेशो देवेशि ध्यानाध्ययनतत्परः ।
मूकांबिकां समारभ्य मलयाद्रचन्तगं शिवे ॥१५४॥
मलयालाभिधो देशो मंत्रसिद्धिप्रवर्तकः ।
रामनाथं समारभ्य श्रीरंगान्तं तथेश्वरि ॥१५५॥
कार्णाटदेशो देवेशि भोगसाम्राज्यदायकः ।
ताम्रपर्णीं समारभ्य शैलाद्रेरुत्तरोर्ध्वतः ॥१५६॥
अवंतीसंज्ञको देशः कालिका यत्र तिष्ठति ।
भद्रकाली पूर्वभागात् रामदुर्गाच्च पश्चिमे ॥१५७॥
श्रीविदर्भाभिधो देशो वैदर्भी यत्र तिष्ठति ।
गुर्जरात् पूर्वभागे तु द्वारकातश्च दक्षिणे ।
मरुदेशो महेशानि उष्ट्रोत्पत्तिपरायणः ॥१५८॥

श्रीकोंकणादधोभागे तापीतः पश्चिमे तथा ।
आभीरदेशो देवेशि विंध्यशैले व्यवस्थितः ॥१५९॥
अवन्तीतः पूर्वभागे गोदावर्यास्तथोत्तरे ।
मालवाख्यो महादेशो धनधान्यपरायणः ॥१६०॥
द्रविडतैलंगयो र्मध्ये चोलदेशः प्रकीर्तितः ।
लंबकर्णाश्च ते प्रोक्ता भेदो ह्यावान्तरो भवेत् ॥१६१॥
कुरुक्षेत्रात् पश्चिमे तु तथाचोत्तरभागतः ।
इन्द्रप्रस्थो महेशानि दशत्रियोजनोन्मिते ॥१६२॥
पांचालदेशो देवेशि सौंदर्यगर्वभूषितः ।
पांचालदेशमारभ्य म्लेच्छाद् दक्षिणपूर्वतः ॥१६३॥
कांबोजदेशो देवेशि वाजिराशिपरायणः ।
वैदर्भदेशादूर्ध्व च इन्द्रप्रस्थाच्च दक्षिणे ॥१६४॥
मरुदेशात् पूर्वभागे विराट्देशः प्रकीर्तितः ।
कांबोजाद् दक्षभागे तु इन्द्रप्रस्थाच्च दक्षिणे ॥१६५॥
पाड्यदेशो महेशानि महाशूरत्वकारकः ।
गंडकीतीरमारभ्य चम्पारण्यान्तकं शिवे ॥१६६॥
विदेहभूः समाख्यातः तैरभुक्ताभिधः स तु ।
कांबोजदेशमारभ्य महाम्लेच्छात्तु पूर्वके ॥१६७॥
वाल्हीकदेशो देवेशि अश्वोत्पत्तिपरायणः ।
तत्त्वकुण्डं समारभ्य रामक्षेत्रान्तगं शिवे ॥१६८॥
किरातदेशो देवेशि विंध्यशैले च तिष्ठति ।
करतोयां समारभ्य हिंगुलाजान्तकं शिवे ॥१६९॥
वक्तानदेशो देवेशि महाम्लेच्छपरायणः ।
हिंगुपीठं समारभ्य मक्केशान्तं महेश्वरि ॥१७०॥
खुरासानाभिधो देशो म्लेच्छमार्गपरायणः ।
तन्मध्ये चोत्तरे देवि ऐराकः परिकीर्तितः ।
काश्मीरं तु समारभ्य कामरूपाच्च पश्चिमम् ॥१७१॥

भोटान्तदेशो देवेशि मानसेशाच्च दक्षिणे ।
मानसेशाद् दक्षपूर्वे चीनदेशः प्रकीर्तितः ॥१७२॥
कैलासतीरमारभ्य सरयूयोनितः परम् ।
आ मोरंगं महेशानि महाचीनाभिधो भवेत् ॥१७३॥
जटेश्वरं समारभ्य योगिन्यन्तं महेश्वरि ।
नेपालदेशो देवेशि शिलहट्टं शृणु प्रिये ॥१७४॥
गणेश्वरं समारभ्य महोदध्यंतगं शिवे ।
शिलहट्टाभिधो देशः पर्वते तिष्ठति प्रिये ॥१७५॥
वंगदेशं समारभ्य भुवनेशान्तं महेश्वरि ।
गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥१७६॥
गोकर्णेशात् पूर्वभागे आर्यावर्तात्तु चोत्तरे ।
तैरभुक्तात् पश्चिमे तु महापुर्याश्च सर्वतः ॥१७७॥
महाकोशलदेशः स्यात् सूर्यवंशपरायणः ।
व्यासेश्वरं समारभ्य तप्तकुण्डान्तकं शिवे ॥१७८॥
मगधाख्यो महादेशो यात्रायां न हि दुष्यति ।
दक्षोत्तरक्रमेणैव क्रमात् कीकटमागधौ ॥१७९॥
चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे ।
तावत् कीकटदेशः स्यादुद्दण्डो मागधो मतः ॥१८०॥
जगन्नाथप्रांतदेशस्त्वौत्कलः परिकीर्तितः ।
कामगिरिं समारभ्य द्वारकान्तं महेश्वरि ॥१८१॥
श्रीकुन्तलाभिधो देशो हूणदेशं शृणु प्रिये ।
कामगिरे दक्षभागे मरुदेशात्तथोत्तरे ॥१८२॥
हूणदेशः समाख्यातः शूरास्तत्र वसन्ति च ।
अथ घट्टं समारभ्य कोटीशस्य तु मध्यगे ॥१८३॥
समुद्रप्रांतदेशो हि कोंकणः परिकीर्तितः ।
ब्रह्मपुत्रात् कामरूपान्मध्यभागे तु कैकयः ॥१८४॥
मागधाद् दक्षभागे तु विंध्यात् पश्चिमतः शिवे ।
सौरसेनाभिधो देशः सूरवंशप्रकाशकः ॥१८५॥

हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ।
पांचालात् पूर्वभागे तु कुरुदेशः प्रकीर्तितः ॥१८६॥

मरुदेशात् पूर्वभागे कामाद्रे दक्षिणे शिवे ।
सिंहलाख्यो महादेशः सर्वदेशोत्तमोत्तमः ॥१८७॥

शिलहट्टात् पूर्वभागे कामरूपात् तथोत्तरे ।
पुलिंध्रदेशो देवेशि नरनारायणः परः ॥१८८॥

गणेश्वरात् पूर्वभागे समुद्रादुत्तरे शिवे ।
कच्छदेशः समाख्यातः मत्स्यं शृणु महेश्वरि ॥१८९॥

पुलिंध्रादुत्तरेभागे कच्छाच्च पश्चिमे शिवे ।
मत्स्यदेशः समाख्यातो मत्स्यवाहुल्यकारकः ॥१९०॥

विराट्पांड्यकयो र्मध्ये पूर्वदक्षक्रमेण च ।
मद्रदेशः समाख्यातो मद्रेशस्तत्र तिष्ठति ॥१९१॥

सूरसेनात् पूर्वभागे कंटकात् पश्चिमे वरे ।
सौवीरदेशो देवेशि सर्वदेशोत्तमोत्तमः ॥१९२॥

अवन्तीतः पश्चिमे तु वैदर्भात् दक्षिणोत्तरे ।
लाटदेशः समाख्यातो वर्वरं शृणु पार्वति ! ॥१९३॥
मायापुरं समारभ्य सप्तशृंगात् तथोत्तरे ।
वर्वराख्यो महादेशः सैन्धवं शृणु सादरम् ॥१९४॥

लंकाप्रदेशमारभ्य मक्कान्तं परमेश्वरि ।
सैन्धवाख्यो महादेशः पर्वते तिष्ठति प्रिये ॥१९५॥

एते देशा' मया प्रोक्ता षट्पंचाशन्मिता शिवे ।
एतन्मध्येऽपि देवेशि देशभेदास्त्वनेकशः ।
कोटिशः सन्ति देवेशि एते मुख्याः प्रकीर्तिताः ॥१९६॥

इति षट्पचाशद् देशा ।

अथात्रैव देशप्रसंगात् पंचप्रस्थसज्ञदेशनिर्णयः । शक्तिसगमे देवीवाक्यम्—

देवेश श्रोतुमिच्छामि पंचप्रस्थानि सांप्रतम् ।

शिवः—

इन्द्रप्रस्थं यमप्रस्थं वरुणप्रस्थमेव च ।
कूर्मप्रस्थं महादेवि देवप्रस्थं च पंचमम् ॥१९७॥
इन्द्रप्रस्थं महेशानि योगिनीकोटिसंयुतम् ।
मथुरा गोकुलात् पूर्वभागे तच्च प्रकीर्तितम् ॥१९८॥
वृन्दावनं कोणदेशे हस्तिनापुरमुत्तरे ।
द्वारका पश्चिमायां च गदावर्तस्तु दक्षिणे ॥१९९॥
इन्द्रप्रस्थं मध्यभागे कालिकामुखगोचरम् ।
वाराहीक्षेत्रमुद्दिष्टं इन्द्रप्रस्थं तदुच्यते ॥२००॥
सिंहासनं चाश्वपतेस्तदेव परिकीर्तितम् ।
यमप्रस्थं महेशानि दक्षिणस्यां व्यवस्थितम् ॥२०१॥
मोरेश्वरः पश्चिमायां सप्तशृङ्गी तु पूर्वगा ।
मायापुरं वामभागे वेंकटेशस्तु दक्षिणे ॥२०२॥
यमप्रस्थं भवेन्मध्ये कमलामुखगोचरम् ।
शंखावर्तो भवेत् तत्र क्षेत्रं मायाभिधं भवेत् ॥२०३॥
सिंहासनं नरपतेस्तद्दक्षे परिकीर्तितम् ।
ततः पूर्वे जगन्नाथप्रान्ते करिपतेर्भवेत् ॥२०४॥
वारुणाख्यं तथा देवि कथ्यते शृणु सांप्रतम् ।
मक्केश्वरः पश्चिमायामुत्तरे हिंगुला भवेत् ।
त्रैलोक्यविजया देवी दक्षभागे प्रकीर्तिता ॥२०५॥
राजावर्तस्तत्र भवेत् तत्र शीतामुखं च तत् ।
तदन्ते सागराः सप्त समुद्राश्च तदन्तके ॥२०६॥
तावच्च श्रीवारुणाख्यं प्रस्थं प्रोक्तं मया तव ।
कूर्मप्रस्थं महेशानि शृणु पार्वति कथ्यते ॥२०७॥
गोकर्णेशो दक्षभागे कामाक्षा पूर्वगोचरा ।
उत्तरे मानसेशः स्यात् पश्चिमे शारदा भवेत् ॥२०८॥
त्रिगुणा वर्तते तद्धि वज्रेश्या मुखमीरितम् ।
षट्पंचकोटिचामुण्डागणैर्व्याप्तं तु तद् भवेत् ॥२०९॥

देवप्रस्थं महेशानि कथ्यते शृणु सांप्रतम् ।
श्रीरंगो दक्षिणे प्रोक्तो गायत्री पश्चिमे भवेत् ॥२१०॥
पूर्वे चैव जगन्नाथश्चोत्तरेऽमरकंटकः ।
कांचीपुरं मध्यभागे मोहनावर्तमेव च ॥२११॥
ललिताया मुखं तच्च विद्यागणविभूषितम् ।
कामाक्षीक्षेत्रमुद्दिष्टं महामंत्रविभूषितम् ॥२१२॥
नवलक्षमहाभेदविद्यागणविभूषितम् ।
पंचप्रस्थानि देवेशि कथितानि मया तव ॥२१३॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पंच प्रस्थेश्वराः प्रोक्ताः क्रमशस्तव सुव्रते ॥२१४॥

इति श्रीमदागमरहस्ये सत्सग्रहे उत्तरार्वे कुलाम्नायादिदेश-
व्यवस्थान्तकथन नाम प्रथमः पटल । आदित एकोनत्रिंशत् ॥

अथ सप्रदायविवेचनम् । यथा शक्तिसगमे—

केरलश्चैव काश्मीरो गौडश्चैव तृतीयकः ।
संप्रदायत्रयं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥२१५॥
सम्यक् प्रदीयते ज्ञानं संप्रदायः प्रकीर्तितः ।
कामादिदोषरहितः कादिहादिमतानुगः ॥२१६॥
वांछिता कल्पिता सिद्धिर्मनोरथमयी तथा ।
साधकस्य भवत्येव लोके रत्न इवापरः ।
चतुस्संध्या समायुक्तः पंचपारायणान्वितः ॥२१७॥
वांछाकल्पलतायुक्तो मंत्रमण्डलसाधकः ।
महाविद्यासमायुक्तः पादुकादशकान्वितः ॥२१८॥
पंचषोढासमायुक्तः कादिहादिमतेष्वपि ।
षष्टिसिद्धीश्वरो यस्तु केरलः परिकीर्तितः ॥२१९॥
काश्मीरं शृणु देवेशि सावधानतया शिवे ।
कार्पण्यरहितः शान्तः शमादिगुणसंयुतः ॥२२०॥

उभयोर्ध्वाम्नाययुक्तो राज्यदातृत्वशक्तिवित् ।
चतुर्विंशतिसिद्धोनामधिपो नरपुङ्गवः ॥२२१॥
एकत्रोर्ध्वाम्नाययुक्तः काश्मीरः परिकीर्तितः ।
उभयत्रोर्ध्वाम्नाययुक्तो महाकाश्मीर ईरितः ॥२२२॥
अथ गौडं महेशानि कथ्यते शृणु सांप्रतम् ।
गीर्वाणगणसंवादी गारुडादिप्रनाशकः ॥२२३॥
श्रीमद्ज्ञानसरस्वत्याः पारंगामी नरस्तु यः ।
भुवनानंदकृद् वीरः स्त्रीभक्तो विजितेन्द्रियः ॥२२४॥
डामर्यादिकलायुक्तः पूर्णदीक्षासमन्वितः ।
उक्ताधिकारसंपन्नः पूर्वमत्रापि पार्वति ॥२२५॥
अष्टाष्टकादिसंयुक्तः समयाचारपालकः ।
महाबलो महोत्साहो गौड इत्यभिधीयते ॥२२६॥
पूर्णगौडो मध्यगौडो द्विविधः पूर्ववद् भवेत् ।
इति गौडस्तु सम्प्रोक्तः सर्वसिद्धिप्रदायकः ।
अणिमाद्यष्टसंयुक्तः श्रीगौडः परिकीर्तितः ॥२२७॥

अन्यच्च—

शैवकेरलकं देवि शक्तिकेरलकं तथा ।
शिवशक्तिकेरलाख्यं त्रितयं परिकीर्तितम् ॥२२८॥
शुद्धोग्रगुप्तभेदेन नवधा केरलं भवेत् ।
नवधा चैव काश्मीरं नवधा गौडमेव हि ॥२२९॥
एषां स्थितिक्रमं वक्ष्ये देशभेदेन पार्वति ।
षट्पंचाशद्देशभेदात् सर्वत्र व्याप्य तिष्ठति ॥२३०॥
नेपालदेशमारभ्य कलिंगांतं महेश्वरि ।
अष्टादशसु देशेषु गौडमार्गः प्रकीर्तितः ॥२३१॥
आर्यावर्तं समारभ्य समुद्रान्तं महेश्वरि ।
केरलाख्यः क्रमः प्रोक्तस्त्रूनविंशतिदेशके ॥२३२॥

तदन्यदेशे देवेशि काश्मीराख्यः क्रमः शुभः ।
संकरस्तु भवेद् व्राह्यो वेदवाह्यो द्विजो यथा ॥२३३॥
केरलादिक्रमे चैव सपर्यानिर्णयं शृणु ।
तत्रादौ पात्रभेदं च संप्रदायत्रिके यथा ॥२३४॥
विश्वामित्रकपालं च केरले परिकीर्तितम् ।
पाशं तुम्बीकपालं तु काश्मीराख्ये क्रमे भवेत् ॥२३५॥
महाकपालपात्रं तु गौडमार्गे प्रकीर्तितम् ।
एवं कपालं त्रिविधं संप्रदायक्रमान्मतम् ॥२३६॥
महाकपालं त्रिविधं शंखशुक्तिकपर्दिकाः ।
कपर्दिकाभिधं पात्रं सर्वपात्रोत्तमोत्तमम् ॥२३७॥
सामान्यार्घे स्फाटिकं स्याद् विश्वामित्रं विशेषके ।
रौप्यमर्घ्ये महेशानि सौवर्णं गुरुपात्रके ॥२३८॥
भैरवे शुक्तिपात्रं च वीरे शंखाभिधं भवेत् ।
शक्तिपात्रं काचमयं योगिनीनां कपालजम् ॥२३९॥
वलिपात्रं ताम्रजं च पाद्यादीनि यथाक्रमात् ।
रत्नजानि महेशानि तदभावे तु पूर्ववत् ॥२४०॥
केरलाख्ये क्रमे प्रोक्तः काश्मीरं शृणु पार्वति ।
सामान्यार्घं महेशानि ताम्रजेन तु कारयेत् ॥२४१॥
तुम्बीभवं विशेषार्घे किं वा स्फाटिकमिष्यते ।
शुक्तिजं गुरुपात्रं स्यात् घटो रौप्यसमुद्भवः ॥२४२॥
भैरवे तु कपालं स्याद् यद्वा मुनिकपालजम् ।
स्फाटिकं शक्तिपात्रं स्याद् योगिन्यास्ताम्रजं भवेत् ॥२४३॥
वलिपात्रं काचभवं शुक्तिजं पाद्यकर्मणि ।
अर्घ्याचमनकर्मादौ शंखजं परिकीर्तितम् ॥२४४॥
अन्यानि ताम्रपात्राणि शार्करोत्थं च भोगजम् ।
गौडमार्गे शुक्तिपात्रं सामान्यार्घे प्रकीर्तितम् ॥२४५॥
विशेषार्घ्ये कपालाख्यमभावे स्फाटिकं भवेत् ।
स्वर्णोद्भवो घटः प्रोक्तो गुरुपात्रं तु रौप्यजम् ॥२४६॥

भैरवाख्यं महेशानि विश्वामित्राभिधं मतम् ।
वीरपात्रं काचजं स्यात् शर्करोत्त्थं तु शक्तिकम् ॥२४७॥
रत्नपात्रं तु योगिन्या वलिपात्रं तु कूर्मजम् ।
पाद्यादीनि महेशानि यथालाभं तु कारयेत् ॥२४८॥
भोगपात्रं तु काश्मीरे गौडे स्यादात्मपात्रकम् ।
दिव्यपात्रं केरले स्यादिति पात्रस्य निर्णयः ॥२४९॥
केरलाख्ये संप्रदाये नारिकेरेऽर्घ्यपूजनम् ।
काश्मीराख्ये संप्रदाये स्फाटिकेऽर्घ्यप्रपूजनम् ।
गौडमार्गे महेशानि कपालेऽर्घ्यप्रपूजनम् ॥२५०॥ इति ॥

अन्यच्च विद्यार्णवे, देवीयामले—

मंत्रार्णौषधिचूर्णैश्च घटितं पात्रमुत्तमम् ।
तत्पात्रेण वरारोहे पूजयेत् परदेवताम् ॥२५१॥
षण्मासाभ्यन्तरे तस्य मन्त्रसिद्धिः प्रजायते ।
तथा मन्त्रार्णनक्षत्रवृक्षोत्त्थं पात्रमुत्तमम् ॥२५२॥
तेनोत्तमेन पात्रेण तर्पयेत् परदेवताम् ।
तथैव मन्त्रसिद्धिः स्यान्नात्रकार्या विचारणा ॥२५३॥
एतत् पात्रद्वये देवि न वक्तव्यं कदाचन ।
मंत्रयोन्यर्क्षसंभूतं पात्रं चैवोत्तमोत्तमम् ॥२५४॥
परसिद्ध्याह्वानकरं तत्पात्रेण च तर्पणम् ।
पराभिचारशमनं तथा च मंत्रसिद्धिदम् ॥ इति ॥२५५॥

नक्षत्रवृक्षं श्रीशारदातिलकेऽस्त्रप्रकरणे स्पष्टम् ।

अथ कलशलक्षणं विज्ञानेश्वरसहितायाम्—

कलास्तु शेरते यत्र कलशः स च उच्यते ।
धर्मार्थकामदा यत्र पूज्यंते कलशश्च सः ॥२५६॥
षड्विंशदंगुलायामं षोडशांगुलमुच्चकम् ।
चतुरंगुलकं कण्ठ- मूलं तस्य षडंगुलम् ॥२५७॥

सौवर्णं राजतं ताम्रं कांस्यजं काचसंभवम् ।
पाषाणं मृण्मयं वापि घटमञ्जणमुत्तमम् ।
कारयेद् देवताप्रीत्यै यथालाभं तु साधकः ॥२५८॥

एतत्फल च—

सौवर्णं मोक्षदं प्रोक्तं राजतं भोगदं स्मृतम् ।
ताम्रं प्रीतिकरं प्रोक्तं कांस्यजं पुष्टिवर्धनम् ॥२५९॥
काचं वश्यकरं प्रोक्तं पाषाणं स्तंभकर्मणि ।
मृण्मयं सर्वकार्येषु प्रशस्तं सुपरिष्कृतम् ॥२६०॥

अथ पात्राणा मानम्—

चतुरंगुलमुच्छ्रायमायामं द्वादशांगुलम् ।
अष्टांगुलं सविस्तारं द्रोणग्राहिजलं तथा ॥२६१॥
तथा पात्रं पूर्णदीक्षा सूर्यार्घ्ये च प्रकीर्तितम् ।
विशेषार्घ्ये महेशानि आयामे वसुसंज्ञकम् ॥२६२॥
षडंगुलं च विस्तीर्णमुत्तानं नौसमाकृतिः ।
अथवा देवदेवेशि पात्रं च वर्त्तुलीकृतम् ॥२६३॥
अश्वत्थपत्राकारं वा कुतपाकारमेव वा ।
त्रिकोणाकारपात्रं वा त्रित्रियोनिसमन्वितम् ॥२६४॥
मध्यविंदुयुतं पात्रं ध्वजचिन्हसमन्वितम् ।
अथवा तु भगाकारं ध्वजविंदुं सकेशरम् ।
एवं पात्रं समानीय स्वेष्टदेवं प्रपूजयेत् ॥२६५॥

अथ पात्रविसर्जनक्रम—

सम्प्रदायक्रमेणैव पात्राणां स्थापनं मतम् ।
पात्रे संस्थापिते देवि पात्राणां चालनं यदि ॥२६६॥
पुनरादि समारभ्य पात्राणां स्थापनं चरेत् ।
पात्रसंघट्टनं देवि यदि भूयात् प्रमादतः ॥२६७॥
पुनः पात्राणि संस्थाप्य पूजयेज्जगदंबिकाम् ।
संस्थापिते पात्रवरे पात्रोत्सर्जनकं न हि ॥२६८॥

विसर्जनमकृत्वा तु पुनस्तु पूर्ववद् यजेत् ।
त्रिसंध्यं पूजयेद् देवि पात्रस्थापनपात्रतः ॥२६९॥

स्थापितैरेव पात्रैस्तु पूजयेत् परमेश्वरीम् ।
विसर्जनोत्तरं देवि पात्राणां च विसर्जनम् ॥२७०

तथैव मंडलं ज्ञेयं रेखया लुप्तकं शिवे ।
पुनः पुनः स्थापयेच्च यावद्रेखा स्फुटेक्षते ॥२७१॥

लुप्ते पुनर्मण्डलं च कृत्वा संस्थापयेत् क्रमात् ।
नित्ये त्वेवं समाख्यातं काम्ये नैमित्तिके नवम् ॥२७२॥

अथ पात्राधिकारिण —

वीरपात्रं तु वीराणां शक्तीनां शक्तिपात्रकम् ।
अघोराया महेशानि योगिनीपात्रमीरितम् ॥२७३॥

गुरुपात्रं श्रीगुरूणां यतीनां भैरवाभिधम् ।
कापालिकानां मुख्यं च वलिपात्रं प्रकीर्तितम् ॥२७४॥

तदभावे तु शूद्राणां सर्वाभावे जले क्षिपेत् ।
दिव्यं देव्यग्रतः पानं वीरं वीरसमागमे ॥२७५॥

अन्यथा पशुपानं च नरकार्थं प्रकीर्तितम् ।
सामान्यार्घ्यं विशेषार्घ्यमेकीकृत्य स्वयं पिबेत् ।
घटद्रव्यं तु वीराणां वीराभावे स्वयं पिबेत् ॥२७६॥

आधारमाह—

आधारं त्रिविधं प्रोक्तं त्रिपदं वा चतुष्पदम् ।
अथवा वर्त्तुलं कुर्याद् रमणीयं महेश्वरि ॥२७७॥ इति ।

केरलाख्ये संप्रदाये संकल्पं शृणु पार्वति ।
प्रीत्यर्थं देवतायाश्च संकल्प; परिकीर्तितः ॥२७८॥

काश्मीराख्ये संप्रदाये विनियोगं शृणु प्रिये ।
प्रत्यक्षदर्शनार्थं हि देवताया महेश्वरि ॥२७९॥

गौडमार्गे महेशानि सर्वसिद्ध्यर्थमेव हि ।
देवताया यदा प्रीतिस्तदा सर्वं प्रवर्तते ॥२८०॥

प्रत्यक्षदर्शनं देवि प्रीतौ लीनं प्रवर्तते ।
तथान्याः सिद्धयो देवि प्रीतौ लीना हि सर्वदा ॥२८१॥
तस्मात् प्रीति मुख्यभूता प्रीत्यर्थं विनियोगता ।
इति ते कथितं किंचिदन्यच्च कथयामि ते ॥२८२॥

देव्युवाच—

ऋषिच्छंदोविहीनस्य स्वप्नलब्धस्य वै मनोः ।
विनियोगः कथं तत्र ध्यानं वा पीठपूजनम् ।
संप्रदायत्रये शंभो वद संसिद्धिहेतवे ॥२८३॥

शिवः—

संप्रदायत्रये देवि शृणु भेदं समाहिता ।
ऋषिः शिव इति प्रोक्तो गायत्री छंद ईरितम् ॥२८४॥
चिद्रूपा देवता देवि कीलकाद्यं न विद्यते ।
केरलाख्यं क्रमं प्रोक्तं काश्मीरं शृणु तत्त्वतः ॥२८५॥
ऋषिच्छंदाद्यनुक्ते तु ऋषिर्ब्रह्मा महेश्वरि ।
गायत्री छंद आदिष्टं हलो बीजानि पार्वति ॥२८६॥
स्वराः शक्तय इत्युक्तास्त्वव्यक्तं कीलकं मतम् ।
पीठं तु मातृकापीठं ध्यानादि मातृकोक्तवत् ॥२८७॥
गौडक्रमे महेशानि सिद्धमंत्रतया शिवे ।
न ऋष्यादिरिति प्रोक्तो न पूजा नियमादयः ॥२८८॥
जपमात्रेण सिद्धिः स्यान्नात्रकार्या विचारणा ।
यद्वा मूलषडावृत्त्या षडंगन्यासमाचरेत् ।
पीठेऽनुक्ते शक्तिपीठं ध्यानेऽनुक्ते तु मातृका ॥२८९॥
पुरश्चर्याद्यनुक्ते तु दिक्सहस्रं जपेत् प्रिये ।
द्वाविंशाक्षरपर्यन्तं दिक्सहस्रं जपेत् प्रिये ।
तदुत्तरं महादेवि गजांतकसहस्रकम् ॥२९०॥
केरले तु पुरश्चर्या दशांगी परिकीर्तिता ।
अष्टांगी तु पुरश्चर्या काश्मीरे कथिता मया ॥२९१॥

पंचांगो तु पुरश्चर्या गौडमार्गे प्रकीर्तिता ।
स्वप्नलब्धे महेशानि त्र्यंगा पुरश्क्रिया मता ॥२६२॥
जपो होमो ब्राह्मणानां भोजनं त्रितयं त्विदम् ।
तथा जपविधौ देवि सूतकद्वयमोचनम् ॥२६३॥
कृत्वा जपेत् स्वप्नलब्धमंत्रं नान्यत् प्रकीर्तितम् ।
सूतकद्वयमुक्तेश्च तदुपायं ब्रवीमि ते ॥२६४॥
भूमौ लिखेदष्टदलं तन्मध्ये स्थापयेद् घटम् ।
घटे संस्थापयेन्मंत्रं लिखितं वटपत्रके ॥२६५॥
कुंकुमेन गुरोस्तत्र प्राणान् संस्थापयेत् सुधीः ।
गुरोः सकाशाद् ग्रहणाज्जातसूतकवारणम् ॥२६६॥
विना पुरश्क्रियां देवि मंत्रो मृत इतीरितः ।
तस्मात् पुरश्क्रियां कुर्यान्मृतदोषनिवृत्तये ॥२६७॥
अनुक्तहोमद्रव्ये तु तिलैर्होमः प्रकीर्तित. ।
घृतेन कथितो देवि यवेनापि तथैव हि ॥२६८॥
केवलं घृतहोमेन वरदाः सर्वशक्तयः ।
स्वप्नप्राप्तोऽरिमंत्रश्चेत् पल्लवं योजयेत् तदा ॥२६९॥
पल्लवैः संयुतो यो हि मंत्रान्तरमुपाश्रयेत् ।
होमकर्म शृणु प्राज्ञे पूर्वप्रश्नोत्तरं तव ॥३००॥
होमे स्वाहां प्रयुञ्जीत हृन्मंत्रस्तर्पणे तथा ।
तथाभिषेके देवेशि हृन्मंत्रः परिकीर्तितः ॥३०१॥
होमेऽग्निजाया या प्रोक्ता सा होमे परिनिष्ठिता ।
मंत्रमध्ये यदा वन्हिजाया चेद् वर्तते शिवे ॥३०२॥
मंत्रांते चैव हृन्मंत्रस्तथा वन्हिप्रिया भवेत् ।
मंत्रेणैव तु निर्वाहो द्वितीया किं प्रयुज्यते ॥३०३॥

श्रीशिव.—

मंत्रांते वन्हिजाया तु सा स्यान्मंत्रस्वरूपिणी ।
होमांगत्वे द्वितीया तु कीर्तिता मंत्रपारगैः ॥३०४॥

तथैव तर्पणे विद्धि ह्रन्मंत्रस्तु द्वितीयकः ।
एवं न कुरुते यस्तु स हीनायुर्भवेत् शिवे ॥३०५॥
सैवाग्निजाया चेद् होमे गृह्यते प्राणवल्लभे ।
स्वस्य प्रभुत्वमायाति मंत्रः क्लिन्नो भवेत् तदा ॥३०६॥
क्लिन्नदोषनिवृत्यर्थं होमे स्वाहा मयेरिता ।
श्रांतदोषनिवृत्यर्थं ह्रन्मंत्रस्तर्पणे मतः ॥३०७॥
जंभे क्षोभे महेशानि हुँफ़डादि तु वर्तते ।
तथापि पल्लवत्वेन पुनर्देयं महेश्वरि ॥३०८॥
ह्रन्मंत्रेण पुटीकारे क्रियमाणे महेश्वरि ।
मंत्रक्षोभनिवृत्तिस्तु सर्वदा जायते शिवे ।
मंत्रमध्ये नतिर्देवि वर्तते यद्यपि प्रिये ॥३०९॥
तथापि संपुटत्वेन पुनर्देया महेश्वरि ।
एवं पल्लवषट्कं तु संपुटत्वेन योजयेत् ॥३१०॥
तदैव काम्यकर्मस्य सिद्धिर्भवति नान्यथा ।
पात्रासादनकं कर्म केरलाख्यक्रमे शृणु ॥३११॥
पात्रषोडशकं स्थाप्य संपूज्य परदेवताम् ।
तदंते होमयेद् रात्रौ तदंते तर्पणं भवेत् ॥३१२॥
देवि शंखमुखं नेत्रे देवतायाः समाचरेत् ।
केरलस्य मतं प्रोक्तं काश्मीराख्यमतं शृणु ॥३१३॥
यथा देवी तथा देवि विशेषाख्यः प्रकीर्तितः ।
स्वसांमुख्येन देवेशि स्थापयेत् पात्रराशिकम् ॥३१४॥
गौडस्य च मते देवि तिर्यक्कारेण स्थापयेत् ।
आसनादिसमारभ्य भूतशुद्धयंतगं शिवे ॥३१५॥
सिद्धप्राची तु संप्रोक्ता ततस्तु कल्पिता भवेत् ।
स्थित्यादिपात्रकर्मान्तं सिद्धप्राची प्रकीर्तिता ॥३१६॥
पूजायां तु महेशानि कल्पिता दिक् शुभप्रदा ।
अग्नीशासुरवायव्यमध्ये दिक्ष्वंगपूजनम् ॥३१७॥

केरलस्य मतं प्रोक्तं काश्मीराख्यं मतं शृणु।
अग्निनिऋतिवायव्यशंभुकोणेषु मध्यतः ॥३१८॥

चतुर्दिक्षु महेशानि मंडलावर्त्तमार्गतः ।
अग्नीशासुरवायव्यमध्ये पृष्ठे षडङ्गकम् ॥३१९॥

गौडमार्गेऽप्येवं भद्रे क्रमेण कथितं मया ।
सिद्धप्राचीविधौ देवि केरले गुरुपूजनम् ॥३२०॥

विद्यापृष्ठे महेशानि गुरवः संति सर्वदा ।
कल्प्या त्रिपङ्क्त्याकारेण देवीपृष्ठे क्रमेण च ॥३२१॥

दिव्यादिक्रमयोगेन तदधः स्वगुरुक्रमम् ।
दक्षोदक् च प्रतीच्यां च रेखात्रितयकं चरेत् ॥३२२॥

दिव्यौघो देवता पृष्ठे तदन्यौ तु स्थलद्वये ।
विद्याया वामभागे तु स्वगुरुं पूजयेत् शिवे ॥३२३॥

काश्मीरे कल्पिता दिक् स्यात् गौडेऽपि च तथैव सा ।
कल्पितक्रमयोगेन यदि पूजा भवेत् शिवे ॥३२४॥

तेषां दिक्पतयो देवि व्युत्क्रमस्था भवंति हि ।

देवीवाक्यम्—

स्वामी यत्र समायाति तत्रैवांगादिदेवताः ।
न चांगे मुख्यता देव तत्पूजायां तु मुख्यता ॥३२५॥

शिववाक्यम्—

कदा का वा स्थिता प्राची कति जाताः पुरंदराः ।
कुत्र के वा स्थिता देवि सर्वं कथय सुव्रते ॥३२६॥

देवीवाक्यम्—

यदाशाभिमुखो भूत्वा चक्रराजं समुद्धरेत् ।
सैव प्राची विनिर्दिष्टा देवपृष्ठे प्रतीचिका ॥३२७॥

तद्दक्षे दक्षिणं ज्ञेयं वामे चैवोत्तरं स्मृतम् ।
यथा यथा शिवाधार्ति परिवारास्तथा तथा ॥३२८॥

यस्याः कृपाकटाक्षेण स्थानं लब्धं च तैः पुरा ।
ते सेवार्थं समायांति देवतायाः महेश्वर ।
वलिदानविधौ देव सिद्धा वा कल्पिता तथा ॥३२९॥

देवतादक्षहस्ताख्यस्वसांमुख्यक्रमेण च ।
प्राची प्रोक्ता केरले च गौडे प्राग् दक्षभागतः ॥३३०॥

देव्यग्रदलमारभ्य प्रादक्षिण्यक्रमेण तु ।
काश्मीराख्यक्रमे प्रोक्तं पूजनं तत् क्रमेण तु ॥३३१॥

वीजानां लेखनं देवि तथैव त्रिविधं मतम् ।
प्रसिद्धाख्यक्रमेणैव केरले परिकीर्तितम् ॥३३२॥

बीजलेखो गौडमार्गे कल्पितासु दिशासु च ।
प्रसिद्धास्वेव काश्मीरे बीजलेखक्रमो भवेत् ॥३३३॥

अर्घ्यंश्च पीठपूजा च प्रसिद्धा केरले मता ।
देवीपृष्ठदलारभ्य गौडकाश्मीरयोर्विधिः ॥३३४॥

अन्तःपूजोत्तरं देवि वलिदानं च केरले ।
पीठपूजोत्तरं देवि काश्मीरे वलिदानकम् ॥३३५॥

पंचोपचारोत्तरतो गौडे तु वलिदानकम् ।
तत्रैवांते होमकर्म समासाद्य प्रहोमयेत् ॥३३६॥

केरलाख्ये संप्रदाये पूजांते होमकर्म च ।
पंचोपचारपूजांते काश्मीरे होमकर्म च ॥३३७॥

नैवेद्यांते होमकर्म गौडमार्गे महेश्वरि ।
केरलाख्ये संप्रदाये हृदये च विसर्जनम् ॥३३८॥

काश्मीराख्ये संप्रदाये सहस्रारे विसर्जनम् ।
गौडेमार्गे विशेषेण हृदये च विसर्जनम् ॥३३९॥

गौडे सर्वत्र गमनं कीर्तितं तु मया तव ।
षडाम्नाये महेशानि काश्मीरे गमनं भवेत् ॥

**कुलाकुलविभेदेन केरले च गमागमः ॥३४०॥ इति ।**

इति श्रीमदागमरहस्ये सत्संग्रहे उत्तरार्धे केरल–काश्मीर–गौड सम्प्रदाय–कथन नाम द्वितीयः पटल. । आदितस्त्रिंशत् ।

एवं सम्प्रदायक्रमं ज्ञात्वा पूर्णदीक्षानुगृहीतस्तत्तत्फलावाप्तये तत्तद्देवता यजेत् ।

पञ्च तन्त्रे—

**धनकामो गणपतिमारोग्ये च दिवाकरम् ।**
**तारापतिं च श्रीकामो मुक्तिकामो जनार्दनम् ॥३४१॥**

**नारायणं सर्वकामः श्रीकामः पुरुषोत्तमम् ।**
**श्रीविद्यां भोगमोक्षार्थी विद्यार्थी कालिकां यजेत् ॥३४२॥**

**मातंगीं धनकामस्तु वाराहीं शत्रुनिग्रहे ।**
**भुवनेशीं राज्यकामस्तथा नीलसरस्वतीम् ॥३४३॥**

**सर्वकामः कलियुगे श्रीमत्त्रिपुरसुन्दरीम् ।**
**बगलां सर्वसिद्ध्यर्थं स्तंभनार्थं विशेषतः ॥३४४॥**

**तथा धूमावती प्रोक्ता सर्वशत्रु निवर्हणे ।**
**प्रत्यंगिरास्त्रहनने परकृत्यानिवारणे ॥३४५॥ इति ।**

अन्यत्रापि—

**भूतिकामस्तु सततं पूजयेत् त्रिपुरां कलौ ।**
**कालिकां च महामायां वाणीकामेन चार्चयेत् ॥३४६॥**

**भुवनेशीं स्वर्गभूत्यै तारां वाग्जालनाशने ।**
**कमलां धनकामस्तु विद्याकामः सरस्वतीम् ॥३४७॥**

**कलौ नीलपताका च तथा नीलसरस्वती ।**
**पूज्या वाक्सिद्धिकामेन शीघ्रसिद्ध्यं तथार्चयेत् ॥३४८॥**

**कर्मणां सिद्धिकामस्तु पूजयेद् वै विनायकम् ।**
**भोगकामस्तु शशिनं बलकामः समीरणम् ॥३४९॥**

**संसारमुक्तये यत्नात् पूजयेत् सर्वगं शिवम् ।**
**ध्यानयोगं तथा मोक्षं यदीच्छेद् ज्ञानमव्ययम् ॥३५०॥**

सोऽर्च्चयेच्च विरूपाक्षं सर्वसत्वमयं हरम् ।
छिन्नमस्तां राजपूर्वां मातंगीं कामकालिकाम् ॥३५१॥
श्मशानकालिकां देवि सर्वसिद्ध्यै सदा जपेत् ।
अश्वारूढां कुक्कुटी च तथा भोगवतीं शिवे ॥३५२॥
नित्यक्लिन्नां च भेरुण्डां स्त्रीवश्यार्थं जपेत् प्रिये ।
सर्वाकर्षणकामस्तु कालिकैकाक्षरीं जपेत् ॥३५३॥
तथा मधुमती विद्यां सर्वोत्कृष्ट्यै जपेत् प्रिये ।
पराप्रासादविद्यां च तथा परं शांभवेश्वरीम् ॥३५४॥
सर्वकामप्रसिद्ध्यर्थं जपेद् यत्नेन सुन्दरि ।
धनदां ऋद्धिकामेन पादुकां चाघनाशने ॥३५५॥
देवकोपप्रशान्त्यर्थं तद्गायत्रीं तदा जपेत् ।
भैरवो भूतरक्षायै शरभो वाथ मारुतिः ॥३५६॥
श्रीदुर्गा दुःखहनने नृसिंहस्तद्वदेव हि ।
चौरभीतिहरो देवः कार्तवीर्यो नराधिपः ॥३५७॥
प्राप्तदीक्षः प्रसन्नात्मा गुरोराज्ञापरायणः ।
आचारनिष्ठः संपूज्य देवानिष्टमवाप्नुयात् ॥३५८॥

अथाचारश्रैष्ठ्यम्—

आदौ तु वैदिकं प्रोक्तं ततो हि वैष्णवं परम् ।
ततो गाणपतं प्रोक्तं ततः सौरं प्रकीर्तितम् ॥३५९॥
सौरात् श्रेष्ठं शैवशास्त्रं शैवात् शाक्तं महेश्वरि ।
शाक्ताद् वामं महादेवि श्रेष्ठं संपरिकीर्तितम् ॥३६०॥
वामात्तु दक्षिणं श्रेष्ठं दक्षिणाद् वीरमुत्तमम् ।
अथ वीराच्चावधूतं कौलपूर्वं प्रकीर्तितम् ॥३६१॥
कौलात् परतरं देवि नास्ति नास्तीति निश्चितम् ॥

अन्यच्च कुलार्णवे—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ॥३६२॥

दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि ।।३६३।।

गुह्याद् गुह्यतरं देवि सारात्सारतरं परम् ।
साक्षात् परशिवं देवं कर्णात् कर्णगतं कुलम् ।।३६४।।

मथित्वा ज्ञानमंथेन वेदागममहार्णवम् ।
सारज्ञेन मया देवि कुलधर्मः समुद्धृतः ।।३६५।।

एकतः सकला धर्माः यज्ञतीर्थव्रतादयः ।
एकतः कुलधर्मस्तु तत्र कौलोऽधिकःप्रिये ।।३६६।।

प्रविशन्ति यथा नद्यः समुद्रमृजुवक्रगाः ।
तथैव समयाः सर्वे प्रविष्टाः कुलमेव हि ।।३६७।।

अस्ति चेत् त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
कुलेन च समं धर्मं कथयेत् स तदा प्रिये ।।३६८।।

कुलधर्मं हि मोहेन योऽन्यधर्मेषु दुर्मतिः ।
सकृत् साधारणं ब्रूयात् सोऽन्त्यजो नरन्त्यजोऽन्त्यजः ।।३६९।।

यो वै कुलाधिकं धर्ममज्ञानाद् वदति प्रिये ।
ब्रह्महत्याधिकं पापं स प्राप्नोति न संशयः ।।३७०।।

दर्शनेषु च सर्वेषु चिराभ्यासेन मानवाः ।
मोक्षं लभन्ते कौले तु सद्य एव न संशयः ।।३७१।।

योगी चेन्नैव भोगी स्यात् भोगी चेन्नैव योगभाक् ।
योगभोगात्मकं कौलं तस्मात् सर्वाधिकं प्रिये ।।३७२।।

भोगो योगायते साक्षात् पातकं सुकृतायते ।
मोक्षायते च संसारः कुलधर्मे कुलेश्वरि ।।३७३।।

इत्यादीनि वहूनि वाक्यानि तत्रैव द्रष्टव्यानि ।

अधिकारिणश्च तत्रैव–

पूर्वजन्मकृताभ्यासात् कुलज्ञानं प्रकाशते ।
सुप्तोत्त्थितः प्रबुध्येत उपदेशादिकं विना ।।३७४।।

जन्मान्तरसहस्रेषु या बुद्धिर्विहिता नृणाम् ।
तामेव लभते जन्तुरुपदेशो निरर्थकः ॥३७५॥

शैववैष्णवदौर्गार्कगाणपत्यादिसंभवैः ।
एतै र्विशुद्धचित्तस्य कौलज्ञानं प्रकाशते ॥३७६॥

पुराकृततपोदानयज्ञतीर्थजपव्रतैः ।
क्षीणपापानां नृणां देवि कौलज्ञानं प्रकाशते ॥३७७॥

त्वमहं देवि कल्याणि यस्य तुष्टावुभावपि ।
देवतागुरुभक्तस्य कौलज्ञानं प्रकाशते ॥३७८॥

श्रीगुरौ गुरुशास्त्रेषु कौलिके तु कुलान्वये ।
यस्य भक्तिर्दृढा तस्य कौलज्ञानं प्रकाशते ॥३७९॥

गुर्वाज्ञापालके धन्ये सदाचारे दृढव्रते ।
शुद्धचित्ते प्रशान्ते च कुलज्ञानं प्रकाशते ॥३८०॥

अनधिकारिणश्च तत्रैव—

अनर्हे कुलविज्ञानं न तिष्ठति कदाचन ।
तस्मात् परीक्ष्य वक्तव्यं कुलज्ञानं मयोदितम् ॥३८१॥

चंचलाः कृपणाः लुब्धाः दुराचाराश्चलेन्द्रियाः ।
निष्ठाहीना दांभिकाश्च पूज्यद्रोहकराश्च ये ॥३८२॥

न तेऽधिकारिणश्चात्र देवताशापभागिनः ।
न ब्रूयात् कुलधर्मं तु अयोग्ये शिवशासनम् ॥३८३॥

आज्ञाभंगं हि यः कुर्याद् देवताशापमाप्नुयात् ।
अबोध्य समयाचारं कुलधर्मं वदेत् यदि ॥
स गुरुश्चापि शिष्यश्च योगिनीनां भवेत् पशुः ॥३८४॥ इति ।

कुलशब्दोऽत्र शक्तिबोधक.।

यच्च यामले—

कुलं शक्तिः समाख्यातमकुलं शिव उच्यते ।
दक्षाधीशोऽकुलः प्रोक्तो वामेशी कुलनायिका ॥३८५॥

तद्धर्मं कुलधर्मं स्यान्मादिपंचकसंयुतम् ।
अकुलं तद्विहीनं स्याद् दक्षधर्मं श्रमावहम् ॥३८६॥ इति ।

कुलधर्मं च सद्गुरुमाश्रित्य यथाविधि प्राप्तानुज्ञो यथाशास्त्रमिष्टमाराध्यैहिकानन्दानुभवमनुभूय सर्वविद्विभूतिमयोऽन्ते परा गतिं प्राप्नुयादिति ।

यच्च यामले—

श्रीगुरोः करुणालेशमालंब्य तदनुज्ञया ।
महामायां भजन् मर्त्यो भुक्तिं मुक्तिं च विंदति ॥३८७॥
सैव विद्या महामाया सृष्टिस्थित्यन्तकारिणी ।
नानारूपा साधकेष्टदात्री मुक्तिफलाश्रया ॥३८८॥

अथ विद्याभेदा —

काली तारा छिन्नमस्ता सुन्दरी वगलामुखी ।
मातंगी भुवना लक्ष्मी धूम्रा त्रिपुरभैरवी ॥३८९॥
एता एव महाविद्याः सिद्धविद्या युगान्तरात् ।

अन्यच्च वृहत् तत्रराजे—

दश संख्या महाविद्यास्तासां नामानि वच्म्यहम् ।
सिद्धविद्या महाविद्या विद्येत्येवं युगक्रमः ॥३९०॥
सत्ये युगे सिद्धविद्या सुन्दरी भुवनेश्वरी ।
काली तारेति देवेशि सिद्धविद्याः प्रकीर्तिताः ॥३९१॥
छिन्नमस्ता च वगला मातंगी कमला तथा ।
एता एव महाविद्या विद्यां शृणु महेश्वरि ॥३९२॥
भैरवी धूमावती च विद्यात्वेन प्रतिष्ठिते ।

अन्यत्रापि—

सत्ये काली च श्रीविद्या कमला भुवनेश्वरी ।
सिद्धविद्या महेशानि त्रिशक्तिर्वगला शिवे ॥३९३॥
महाविद्या सत्ययुगे मातंगी भैरवी शिवे ।
धूमावती च विद्या स्यात् त्रेतायां शृणु पार्वति ॥३९४॥

काली तारा सुन्दरी च सिद्धविद्याः प्रकीर्तिताः ।
मातंगी भुवना लक्ष्मी महाविद्याः प्रकीर्तिताः ॥३९५॥

धूमावती भैरवी च विद्यात्वेन महेश्वरि ।
द्वापरे कालिका तारा रोचनी भैरवी तथा ॥३९६॥

सिद्धविद्या महेशानि सुन्दरी भुवना रमा ।
धूमावती महाविद्या मातंगी कमला तथा ॥३९७॥

विद्यात्वेन महेशानि कलौ काली तु केवला ।
काली तारा छिन्नमस्ता सिद्धविद्या कलौ मता ॥३९८॥

सुन्दरी भैरवी लक्ष्मी मातंगी भुवनेश्वरी ।
महाविद्या महेशानि धूम्रा च वगला शिवे ॥३९९॥

विद्यात्वेन महेशानि कलौ संकीर्तिता मया ।
उन्मत्तभैरवमते भेदोऽन्यः कथ्यते शृणु ॥४००॥

काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥४०१॥

वगला भैरवी श्रीश्च मातंगी कामकालिका ।
त्रयोदश महाविद्या युगभेदात् त्रिधाऽपि च ॥४०२॥

एता एव महाविद्या त्रियुगं व्याप्य संति च ।
येयं श्रीकालिकादेवी विद्याराज्ञी समीरिता ॥४०३॥

यस्या दासस्य च कलिः पादपूजां करोति हि ।
तेन चिंतामणिर्ज्ञेया कलिदोषविनाशिनी ॥४०४॥

कलिदोषप्रशमनात् तेनेयं कालिका स्मृता ।
वरदानेषु चतुरा तेनेयं दक्षिणा स्मृता ॥४०५॥

कालिका षोडशी तारा वामाचारप्रिया मता ।
छिन्नमस्ता च वगला वाममार्गाधिदेवता ॥४०६॥

मातंग्यपि महादेवि वाममार्गेण सिद्धिदा ।
कमला भुवना वाला तथा धूमावती शिवे ॥४०७॥

दक्षिणाचारयोगेन सिद्धयन्त्येव न संशयः ।
वामाचारेण च तथा सिद्धिदा भवति ध्रुवम् ॥४०८॥
भैरवी वामसंतुष्टा वाला दक्षिणवामगा ।
वसंतसु दरी विद्या तथा संगीतसु दरी ॥४०९॥
वामदक्षिणयोगेन सिध्यन्त्येव न संशयः ।
रेणुका दक्षिणाचारे त्वन्या देव्यश्च दक्षिणे ॥४१०॥
श्रीविद्या च तथा वाला लोपामुद्रा तथैव च ।
यथा वामे तथा दक्षे सर्वाभीष्टं प्रयच्छति ॥४११॥
मातंग्यां वगलामुख्यां दक्षिणाख्योऽपि वर्तते ।
मातंगी लघुमातंगी सुमुखी वामतत्परा ॥४१२॥
क्वचिद् गणेशे रुद्रेऽपि विष्णौ सौरे स्वयंभुवि ।
वामाचारो वैदिकेऽपि भैरवा वामतत्पराः ॥४१३॥
क्षेत्रपाला वामपरा चीना कापालिकास्तथा ।
तथा पाशुपता देवि वाममार्गे प्रतिष्ठिताः ॥४१४॥
गोपालसुन्दरी विद्या तथा नृहरिसु दरी ।
श्रीब्रह्मसु दरी विद्या तथैव रामसुन्दरी ॥४१५॥
सुन्दरीगणपो देवि तत्पूर्वोऽपि हयाननः ।
यक्षिण्याद्याः सर्वविद्या कामिनी योगनायिका ॥४१६॥
वाममार्गेण सिद्धयन्ति नान्यथा सिद्धिदाः क्वचित् ।
एवं च दक्षिणामूर्तिहयग्रीवगणेशकाः ॥४१७॥
वामदक्षिणयोगेन पूज्याः साधकसत्तमैः ।
शैवे शाक्ते गाणपते सौरे स्वायंभुवे तथा ॥४१८॥
चांद्रे चीने पांचरात्रे वैष्णवे वैदिकेऽपि च ।
कापालिके महेशानि वाममार्गोऽत्र कारणम् ॥४१९॥
तोतला तुलजा दुर्गा त्रिपुटा त्रिजटाऽऽसुरी ।
वामाचारेण सिद्धयन्ति दक्षिणे क्षोभकारकाः ॥४२०॥

वामाचारं विहायाथ कालीं तारां च भैरवीम् ।
महापिशाचिनीं देवि छिन्नमस्तामपि प्रिये ॥४२१॥

उपासनां कर्तुकामः तस्य पातो भविष्यति ।
स दरिद्रो मसद्रोही सुतहारी च जायते ॥४२२॥

विशेषात् सर्वमंत्रेषु कुलाचारः प्रशस्यते ।
तदा सिद्धा सर्वविद्या नात्र कार्या विचारणा ॥४२३॥

महानीलक्रमेणैव काली शीघ्रफलप्रदा ।
महाचीनक्रमेणैव तारा पूर्णफलप्रदा ॥४२४॥

दिव्यचीनक्रमेणैव छिन्नमस्ताविधिः स्मृतः ।
गंधर्वाख्यक्रमेणैव पञ्चमी भुवि दुर्लभा ॥४२५॥

महागंधर्वमार्गेण षोडशी फलदायिनी ।
सौभाग्यस्य क्रमेणैव बगला फलदा कलौ ॥४२६॥

जीवचक्रक्रमेणैव भैरवी भुवि कीर्तिता ।
महाधूम्रक्रमेणैव फलदा धूम्रनायिका ॥४२७॥

राजमार्गक्रमेणैव मातङ्गी सकलेष्टदा ।
ब्रह्मभावक्रमेणैव भुवना फलदा मता ॥४२८॥

स्वपुष्पक्रममार्गेण भैरवी वामसिद्धिदा ।
कलार्चनक्रमेणैव महालक्ष्मी फलप्रदा ॥४२९॥

वीरमार्गक्रमेणैव दिव्यमार्गक्रमेण वा ।
पशुमार्गक्रमेणापि मातङ्गी फलदा सदा ॥४३०॥

दशक्रमेण देवेशि दशविद्या फलप्रदा ।
कुलीनं गुरुमाश्रित्य दीक्षां प्राप्य क्रमस्थितः ॥४३१॥

कुलाचारपरो मंत्री सततं सिद्धिभाग् भवेत् ।

इति यामलादिषु यदुक्तं तस्माद् दीक्षोच्यते । सामान्यविशेषभेदेन दीक्षा द्विविधा, सामान्ये बहवो भेदास्तदग्रे कथयाम. । विशेषस्त्वभिषेकात्मकस्तत्रादौ कुलदीक्षा लिख्यते ।

यच्च परारहस्ये—

अथाहं निर्णयं वक्ष्ये प्रथमं गुरुशिष्ययोः ।
विचार्य विधिवद् धीमान् दीक्षाकर्म समाचरेत् ॥४३२॥

ब्रह्मादिकीटपर्यन्तं जगत् स्थावरजङ्गमम् ।
मोहितं परया देव्या पशुरूपेण संस्थितम् ॥४३३॥

दीक्षां तस्याः शिवे मंत्री लब्ध्वा गुरुपदार्चनात् ।
दीक्षितः स भवेद् ज्ञानी दीक्षाहीनः पशुः स्मृतः ॥४३४॥

यस्य दीक्षा शिवे नास्ति जीवनांतं च जन्मिनः ।
स जातु नोत्तरेद्देवि निरयाम्बुनिधेः क्वचित् ॥४३५॥

दीक्षाहीनस्य देवेशि पशोः कुत्सितजन्मनः ।
पापौघोऽन्तिकमायाति पुण्यं दूरं पलायते ॥४३६॥

तस्माद् यत्नेन दीक्षैषा ग्राह्या कृतिभिरुत्तमैः ।
बाल्ये वा यौवने वापि वार्धक्ये वा सुरेश्वरि ॥४३७॥

अन्यथा निरयी पापी पितॄन् स्वान्निरयन्नयेत् ।
अन्ते पशुर्मनुष्यः सन् पशुयोनिं व्रजेत् शिवे ॥४३८॥

पूर्वजन्मार्जितां प्राप्य वासनां परमार्थदाम् ।
गुरुमन्वेषयेत् देवि कौलिकाचारदीक्षितम् ॥४३९॥

गुरुं कुलीनं तंत्रज्ञं सर्वांगैः सुमनोहरम् ।
निरामयं च निर्लोभं निःशेषागमपारगम् ॥४४०॥

लब्ध्वा भक्त्या प्रणम्यादौ तोषयित्वा विशेषतः ।
सिद्धसाध्यारिनिर्णीतां दीक्षां देव्या यथाविधि ॥४४१॥

गृह्णीयात् परया भक्त्या साधको येन जायते ।
गुरुश्च शिष्यं रम्यांगं कुलीनं गर्भदीक्षितम् ॥४४२॥

गुरुभक्तिरतं शांतं पापभीतं कृतात्मकम् ।
दृष्ट्वा दीक्षां परां दत्वा कृतभागी भवेन्नरः ॥४४३॥

श्रीदेव्युवाच—

भगवन् करुणांभोधे संशयोऽयं महान् मम ।
यस्य चित्ते पराभक्ति गु रुर्नास्ति यथाविधः ॥४४४॥

कुलीनः सर्वतन्त्रज्ञो मंत्रसाधनसुक्षमः ।
भक्त्या परमया युक्तः स किं देव करिष्यति ॥४४५॥

श्रीशिव उवाच—

अदीक्षित उपाध्यायविहीनः शक्तिभक्तिमान् ।
गुरोरभावे देवेशि पुस्तकं गुरुमाश्रयेत् ॥४४६॥

यदि कश्चिद् भवेत् देवि गुरुस्तंत्रविचक्षणः ।
दीक्षितः शिवमंत्रेण वैष्णवः शुभलक्षणः ॥४४७॥

तं परित्यज्य यो देवि पराभक्तोऽपि भक्तिमान् ।
पुस्तकं तु गुरु ं कुर्यात् स भवेत् शिवघातकः ॥४४८॥

गुरु ं कुलीनं तंत्रज्ञं भजेन्मंत्रस्य सिद्धये ।
मूर्ख ं लोभात्मकं देवि कुलीनं च परित्यजेत् ॥४४९॥

पितुर्दीक्षां न गृहणीयात् तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य मातुलस्य विशेषतः ॥४५०॥

दंभं वित्तेच्छया लौल्यं न कुर्यान्मनसापि वा ।
परलोकेच्छया कुर्यादन्यथा विफलायतः ॥४५१॥

श्रीदेव्युवाच—

भगवन् परमेशान साधकानां हितेच्छया ।
कदा दीक्षा परा ग्राह्या साधकैस्तद् वदस्व मे ॥४५२॥

श्रीशिव उवाच—

सुदिने शुभनक्षत्रे संक्रान्तावयनद्वये ।
नवरात्रिदिने पित्रोः श्राद्धे स्वजनिवासरे ॥४५३॥

नववर्षदिने देवि चन्द्रसूर्योपरागके ।
तिष्ये स्वजन्मनक्षत्रे दीक्षां दद्याद् विचक्षणः ॥४५४॥

तत्रादौ शुभनक्षत्रे स्नात्वा संपूज्य भैरवम् ।
गत्वा नदीतटं रम्यं लताकुसुममंडितम् ॥४५५॥

द्वीपं वा परमं पुण्यं चित्तसंतोषकारकम् ।
देवतायतनं वापि गत्त्वा दीक्षां समारभेत् ॥४५६॥

विलिप्य विधिवत् तत्र गुरु. कुर्यात् कृताह्निकः ।
वेदीमीशानदिग्भागे चतुष्कोणां मनोहराम् ॥४५७॥

तत्र देवि परादेव्याश्चक्रराजं च संलिखेत् ।
सिंदूरेण शिवे यंत्रं मूलमंत्रं समुच्चरन् ॥४५८॥

त्रिकोणं विंदुसंयुक्तं षट्कोणं वृत्तमंडलम् ।
वसुपत्रं त्रिवृत्तं च भूगृहेणोपशोभितम् ॥४५९॥

दीक्षायंत्रमिमं देवि दीक्षाकाले प्रपूजयेत् ।
संकल्पभूतशुद्ध्यादिन्यासान्तं कलशार्चनम् ॥४६०॥

कृत्वा पात्राणि संस्थाप्य पीठपूजां विधाय च ।
अन्तर्यागं समाप्याथ वहिर्यागं ततश्चरेत् ॥४६१॥

गणेशधर्मवरुणाः कुवेरसहिताः शिवे ।
संपूज्य भूपुरे दिक्षु प्रार्थयेन्मूलमंत्रतः ॥४६२॥

विंदौ श्रीमूलमंत्रेण परां देवीं प्रपूजयेत् ।
सदाशिवं महारुद्रं कामेशं कामनेश्वरम् ॥४६३॥

गंधाक्षतप्रसूनाद्यै धूपदीपादितर्पणैः ।
नैवेद्याचमनीयाद्यै स्तांबूलैश्च सुवासितैः ॥४६४॥

संपूज्येशानमारभ्य चाग्न्यन्तं वै त्रिकोणके ।
गंगां च यमुनां देवि तृतीयां च सरस्वतीम् ॥४६५॥

तारमायारमावीजै गंधाक्षतप्रसूनकैः ।
संपूज्य पूजयेद् देवि षट्कोणे षट् च देवताः ॥४६६॥

मायां च मोहिनीं मेनां मंगलां सर्वमंगलाम् ।
महाविद्यां च देवेशि गंधाक्षतप्रसूनकैः ॥४६७॥

अष्टपत्रेषु देवेशि संपूज्या अष्टमातरः ।
ब्राह्म्याद्या देवि मंत्रेण ह्यष्टभैरवपूर्विकाः ॥४६८॥

ब्राह्मी नारायणी चैव कौमारी चापराजिता ।
माहेश्वरी च चामुण्डा वाराही नारसिंहिका ॥४६९॥

वामावर्तक्रमेणैव पूजनीया विधानतः ।
तत्रैव पूजयेदष्टभैरवान् परमेश्वरि ॥४७०॥

महाकालं च कालाग्निं करालं विकरालकम् ।
संहारं रुद्रमीशानि सुप्तमुन्मत्तभैरवम् ॥४७१॥

संपूज्य विधिवत् तत्र तर्पयेद् विधिवच्च तान् ।
एवं यंत्रं समभ्यर्च्य श्रीगुरुं पूज्य यत्नतः ॥४७२॥

त्रिकोणकुण्डके वापि स्थंडिले संस्कृतेऽथवा ।
स्रुक्स्रुवावपि संपूज्य वन्हिमावाहयेत् ततः ॥४७३॥

तारं वन्हित्रयं चाग्ने वैश्वानरपदं वदेत् ।
प्रज्वलेतियुगं पश्चादिहागच्छेति संवदेत् ॥४७४॥

इह संनिधिमाधत्स्व वरं मे देहि युग्मकम् ।
फट् वन्हिजायां प्रोच्चार्य गंधेनाभ्यर्चयेत् ततः ॥४७५॥

परादेव्यास्तु मंत्रेण हुनेदाज्यं तथा शिवे ।
मूलेनाग्नौ शिवे दद्यादाहुतीनां शतं परम् ॥४७६॥

घृतखंडादिमृद्वीकखर्जूरांबुजपायसैः ।
तत्र देवीं समावाह्य परां ध्यात्वा यथाविधि ॥३७७॥

प्राङ्मुखो गुरुरासीन उत्तराभिमुखं शिशुम् ।
संस्थाप्य विधिवद् देवि कृत्वा विष्टरशोधनम् ॥४७८॥

भूतशुद्धिक्रमोपेतं प्राणार्पणविधिं चरेत् ।
प्राणायामत्रयं कृत्वा विधायाचमनत्रयम् ॥४७९॥

तत्र मूलेन देवेशि दिशो बद्ध्वा परां स्मरेत् ।
गुरुः शिष्याय शांताय पराप्रीत्यै महेश्वरि ॥४८०॥

वन्हेः समक्षं यंत्राग्रे दीक्षां परमदुर्लभाम् ।
कर्णमूले महाविद्यां श्रीविद्यां साधकेश्वरः ॥४८१॥

आनंदासक्तहृदयः शनैस्त्रिः त्रिः समर्पयेत् ।
प्रथमं तु गणेशस्य मंत्रं सांगं समर्पयेत् ॥४८२॥

ततो देव्याश्च गायत्रीं ततो मूलं महेश्वरि ।
एवं समर्प्य देवेशि कृत्वा होमं यथाविधि ॥४८३॥

शिष्यायार्घ्यस्य शेषं च दद्यादानंदनिर्भरः ।
ब्रूयादेवं कृपादृष्ट्या विलोक्य प्रीतमानसः ॥४८४॥

उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ।
दीर्घायुश्च सदारोग्यं देवता भक्तिरस्तु ते ॥४८५॥

आवयोस्तुल्यफलदो भवत्वेवमुदीरयेत् ।
पूर्णाहुतिं च संपाद्य वटुकं योगिनीगणम् ॥४८६॥

भूतान् संतर्प्य वलिना देवि देवीं विसर्जयेत् ।
एवं समाप्य दीक्षां च विसृज्य हृदि देवताम् ॥४८७॥

सदाचारं मंत्रविधिं चोपदिश्य शिवं स्मरेत् ।
शिष्यो दीक्षां च संप्राप्य गुरुमभ्यर्च्य शक्तितः ॥४८८॥

तोषयित्वा प्रणामैश्च दक्षिणाभिः शुभांवरैः ।
तदाज्ञां शिरसादाय जपाय परमेश्वरि ॥४४८९॥

यंत्रं मंत्रं च मालां च तंत्रं पंचांगमीश्वरि ।
पुनर्जातु शिवे शिष्ये गुरवेऽपि न दर्शयेत् ॥४९०॥

श्रीदेव्युवाच—

भगवन् देव देवेश भक्तानुग्रहकारक ।
गणेशं चैव गायत्रीं मूलविद्यां जपेत् पराम् ॥४९१॥

श्रीपादुका तथा देवी शिवो वा वटुकस्तथा ।
सौरो वा वैष्णवो वापि कथं क्व च जपो भवेत् ।
कां कां विद्यां च गृह्णीयात् कः कस्यांगतया स्मृतः ॥४९२॥

श्रीशिव उवाच—

प्रथमेऽहनि देवेशि साधको गुरुभक्तितः ।
गणेशं देवि गायत्रीं मूलविद्यां जपेत् पराम् ॥४९३॥

मुहूर्ते शुभदे देवि गुरुं संपूज्य प्रार्थयेत् ।
अंगमंत्रांश्च मे देहि सिद्धये कुलनायक ॥४९४॥

अंगमंत्रांस्ततो लब्ध्वा जपेदिष्टफलाप्तये ।
ततो गुरुं शिवे भक्त्या वंदनैः पूजनैस्तथा ॥४९५॥

प्रार्थनाभिश्च संतोष्य श्रीविद्यां प्रार्थयेत् ततः ।
विना श्रीविद्यया देवि साधकोऽदीक्षितः स्मृतः ॥४९६॥

अदीक्षितः पशुः प्रोक्तः पशुत्वान्निरयी भवेत् ।
स्वजन्मनि शिवे तस्माद् गुरुमभ्यर्च्य भक्तितः ॥४९७॥

श्रीविद्यां प्रार्थयित्वादौ गृह्णीयात् सर्वसिद्धये ।
नोपदेशक्रमे ग्राह्या श्रीविद्याऽपि कदाचन ॥४९८॥

विना पूर्णाभिषेकेन न पूर्णफलदा हि सा ।
महात्रिपुरसुन्दर्याः श्रीविद्यां प्राप्य दुर्लभाम् ॥४९९॥

सशिवां गिरिजे सांगां प्रार्थयेद् दक्षिणां ततः ।
विना श्यामां न सिद्धिः स्यान्ममापि परमेश्वरि ॥५००॥

द्वाविंशत्यक्षरीं विद्यां प्रजपेत् साधकोत्तमः ।
श्यामाविद्याजपेनाशु श्रीविद्या सिद्धिमेष्यति ॥५०१॥

तामसी कालिका प्रोक्ता राजसी षोडशाक्षरी ।
सात्विकी च परादेवी श्रीमहाषोडशाक्षरी ॥५०२॥

राज्यं देयं शिरो देयं देयं संततिरर्थिने ।
वसुपूर्णं गृहं देयं न देया षोडशाक्षरी ॥५०३॥

विद्यां त्रिपुरसुन्दर्या लब्ध्वा गुरुप्रसादतः ।
मनसापीति नो ब्रूयात् श्रीविद्योपासकोऽस्म्यहम् ॥५०४॥

श्यामां भजेत् परां विद्यां श्रीविद्याभेदरूपिणीम् ।
तेन सिद्धिर्भवेदाशु देवानामपि दुर्लभा ॥५०५॥

एवं देवि पराभक्तो दीक्षितो गुरुपूजकः ।
गुरूपदेशतः कुर्याद् जपपूजामहर्निशम् ॥५०६॥

गुरुरेव परादेवी गुरुरेव परागतिः ।
गुरुमुल्लंघ्य यः कुर्यात् किंचित् स नरकं व्रजेत् ॥४०७॥

स्वयं दीक्षां गुरोर्लब्ध्वा दीक्षितः पुण्यभाजनम् ।
गुरुमभ्यर्च्य संप्रार्थ्य शक्तिदीक्षार्थमीश्वरि ॥५०८॥

दीक्षिता यस्य नो शक्तिस्तस्य दीक्षा तु निष्फला ।
जन्मकोटिषु जप्त्वापि तस्य विद्या न सिद्ध्यति ॥५०९॥

ततः शिवे गुरुः शिष्यमाहूय परमार्थवित् ।
शिष्यस्त्रियं परारूपां देवीरूपां विचिंत्य च ॥५१०॥

अभ्यर्च्य परमां शक्तिं परावद् वंदनैः स्तवैः ।
आवृत्य मातृवद् देवि कन्यावद् वीक्षयेत् तदा ॥५११॥

परावत् पूजयित्वादौ ततो विद्यां समर्पयेत् ।
उपविश्य गुरुस्तत्र पश्चिमाभिमुखः शिवे ॥५१२॥

दीक्षायै प्राङ्मुखीं कृत्वा पूजयेद् यंत्रराजवत् ।
ततः सम्पूज्य देवेशि यंत्राग्रे देवतागृहे ॥५१३॥

शिवो भूत्वा परां विद्यां कर्णमूले समर्पयेत् ।
संप्राप्य सशिवां विद्यां गुरुं पितृवदर्चयेत् ॥५१४॥

गंधाक्षतप्रसूनाद्यैः दक्षिणांवरपूर्वकैः ।
तदाज्ञां शिरसादाय जपं कुर्यात्तु सर्वदा ॥५१५॥

शक्तिश्च दीक्षिता भूत्वा दीक्षितोऽपि स्वयं शिवे ।
मंत्रं जपन् शिवे जन्तुरमरत्वमवाप्नुयात् ॥५१६॥

गुरोः पादप्रसादेन श्रीविद्या यदि लभ्यते ।
स श्यामा स शिवो देवि तस्य वश्यं जगद् भवेत् ॥५१७॥इति।

अथागविद्या । तत्र सर्वसाधारण निरुत्तरतन्त्रे--

श्रीगुरुं श्रीगणेशं च श्रीशिवं श्रीपरांबिकाम् ।
दंडपाणिं ततो दद्यात् सर्वसाधारणः स्मृतः ॥५१८॥

विशेषश्च श्रीविद्याया, उड्डभैरवीये--

आदौ वाला विनिर्दिष्टा ततः पंचदशी मता ।
ततो नित्यामंडलं स्यात् ततश्च दर्शनानि षट् ॥५१९॥
पंचपंचिकया युक्ताः चतुःसमयदेवताः ।
युवतीषट्कसहिता ततः श्रीषोडशी स्मृता ॥५२०॥
तदुत्तरं पराविद्या ततश्चरणसुंदरी ।
निर्वाणदीक्षणं पश्चात् षट्शांभवमतः परम् ॥५२१॥इति।

श्यामाविद्यायाम्—

श्रीगुरुं गणपं दुर्गां वटुकं शरभं शिवम् ।
मंजुघोषं च सुमुखीं कालिकां तदनन्तरम् ॥५२२॥इति।

दुर्गामिष्टाक्षरीम् । ताराविद्यायाम्--

वटुकः क्षेत्रपालश्च गणेशो योगिनी तथा ।
अक्षोभ्यश्चार्द्रपटिका घोरं पाशुपतं तथा ॥५२३॥
ततः पद्मावती प्रोक्ता मंजुघोषो महेश्वरः ।
सार्धपंचाक्षरी तारा रक्तचामुंडिका तथा ॥५२४॥इति।

अथ छिन्नायाः—

श्रीगुरुर्मालिनी चैव दीपिनी परिकीर्तिता ।
गणेशो भ्रामको यक्षो वटुकः क्रोधराजकः ॥५२५॥
महिषघ्नी भवानी च कमला छिन्नमस्तका ॥इति।

अथ श्रीसुन्दर्या —

अश्वारूढा महादेवी संपत्कर्षा तथैव च ।
श्रीतिरष्करणी चैव दंडिनी मंत्रनायिका ॥५२६॥
वाला च परमेशानी नकुली कुरुकुल्लुका ।
तारांबिका कामकला नित्याषोडशकं तथा ॥५२७॥

विद्या तुरीया सुमुखी रश्मिविद्या तथैव च ।
नवचक्रेश्वरी चैव चतुश्चरणदेवताः ॥५२८॥
पंचपंचिकसंज्ञा च षडासनमयी तथा ।
समग्राम्बा सुन्दरी च गणेशादि च पूर्ववत् ॥५२९॥इति।

अथ वगलामुख्या.—

मृत्युंजयश्च वटुको पंचास्त्रं कुल्लुका तथा ।
तथापराजिता श्यामा चांडाली च हरिद्रकः ॥५३०॥
विडालयक्षिणी देवी त्वरिता स्तंभनाशुगः ।
स्वप्नेश्वरी गणेशश्च तत· श्रीवगलाम्बिका ॥५३१॥इति।

अथ लक्ष्म्या —

श्रीविष्णुश्च गणेशश्च वैनतेयस्तथैव च ।
धनदा च कुवेरश्च निधिमंत्रास्तथैव च ॥५३२॥
विद्या भोगवती देवी लक्ष्मीनारायणः परः ।
कामाक्षी धनदा चैव भुवनाश्रीस्ततः परम् ॥५३३॥इति।

अथ मातङ्ग्या·—

गुरुमंत्रश्च नकुली तथैव च सरस्वती ।
लघुश्यामा कामिनी च वीरभद्रो मतंगकः ॥५३४॥
प्रमदा मोहिनी चैव भोगेशो यक्ष एव च ।
ततो मातंगिनी प्रोक्ता इत्येवं क्रम ईरित. ॥५३५॥

अथ भुवनेश्या.—

गणेशस्य च गायत्र्यास्तथा मृत्युंजयस्य च ।
वटुकस्य शिवस्यापि ततो विद्यां समर्पयेत् ॥५३६॥

अन्यदपि भुवनेशीसर्वस्वे—

शिवः शिवा विधाता च त्रिपुटा वटुकस्तथा ।
कुल्लुका च तथा देवि पंचायतनमेव च ॥५३७॥
गौरी श्रीरंजिनी मंत्रो विद्याभेदाः सशक्तयः ।
लोकपालादिमनवो वाणीमंत्रास्तथैव च ॥५३८॥

हयग्रीवः पिंगली च खड्गरावरण एव च ।
ततः श्रीभुवनेशानी तत्त्वविद्या ततः परम् ॥५३९॥इति।

अथ श्रीधूमाया —

धूमावत्यंगमंत्राश्च वीरेशो वटुकस्तथा ।
प्रत्यंगिरा च शरभस्तथा पाशुपतो मनुः ॥३४०॥
संहारास्त्रं च ककुदी तथा च त्वरिता मता ।
ततो धूमावती प्रोक्ता गणेशादि च पूर्ववत् ॥५४१॥इति।

अथ विद्यानां शिवा.—

कालिकायाः महाकालः सुन्दर्या ललितेश्वरः ।
तारायाश्च तथाक्षोभ्यश्छिन्नायाः क्रोधभैरवः ॥५४२॥
भुवनाया महादेवो धूमायाः कालभैरवः ।
नारायणो महालक्ष्म्या भैरव्या वटुकः स्मृतः ॥५४३॥
मातंग्याश्च मतंगः स्यादथवा स्यात् सदाशिवः ।
मृत्युञ्जयस्तु वगलाविद्यायाः परिकीर्तितः ॥५४४॥इति।

अन्यत्रापि परारहस्ये—

कालिकाया महाकालः सुमुख्या अमृतेश्वरः ।
कामेश्वरस्त्रिकूटायाः शिव इत्येवमीरितः ॥५४५॥
छिन्नाया कालरुद्रस्तु शारदायाः शिव स्मृतः ।
श्रीभैरवः कालरात्र्याः शिव इत्यमिधीयते ।
मेडायास्तु विरूपाक्षः शिव इत्यभिधीयते ॥५४६॥
विश्वनाथोन्नपूर्णाया राज्ञाः भूतेश्वरः शिवः ।
नीलकण्ठस्तु दुर्गायाः शीलाया वामदेवकः ॥५४७॥
सद्योजातस्तु ताराया भुवनायास्तथेश्वरः ।
यस्या देव्यास्तु यो देवः शिवस्तस्मात् शिवं भजेत् ॥५४८॥
तेन विद्या महादेवि सिद्धिमाप्नोति सत्वरम् ।
केवलं यो जपेत् शाक्तं मनुं शैवं तु नो जपेत् ।
जन्मकोटिषु जप्तोऽपि न मनुः सिद्धिभाग् भवेत् ॥५४९॥इति।

अन्यदपि चोड्डण्डभैरवीये—

कालिकाया महाकालश्चाक्षोभ्यस्तारिणीमनौ ।
त्रिपुरायां च राजेशो वगलायां च त्र्यम्बकः ॥५५०॥

मातंग्याश्च महेशश्च भुवनेश्या महेश्वरः ।
नारायणो महालक्ष्म्या महादेवश्च वा प्रिये ॥५५१॥

छिन्नायां तु करालः स्यात् शिवायां कुक्कुटेश्वरः ।
धूम्रायां तु अघोरः स्यादिति संक्षेपतो मतम् ॥५५२॥

शक्त्या विना शिवे सूक्ष्मे नामधाम न विद्यते ।
शिवं विना चित्कलायां न कलात्वं क्वचिद् भवेत् ॥५५३॥

वीजांकुरन्याययोगात् शिवशक्त्यात्मकं महः । इति ।

अथ दशवटुका —

अथाद्यो हेतुबटुको द्वितीयो वटुकः स्मृतः ।
त्रिपुरांतकवटुकस्तृतीयः परिकीर्तितः ॥५५४॥

वन्हिवेतालवटुकश्चतुर्थः कीर्तितः शिवे ।
अथाग्निजिह्ववटुकः पंचमः परिकीर्तितः ॥५५५॥

श्रीकालवटुकस्तद्वत् करालवटुकस्तथा ।
तथैकपादवटुकः श्रीभीमवटुकस्तथा ॥५५६॥

त्रैलोक्यवटुकश्चैव श्रीसिद्धवटुकस्तथा ।
दश वै वटुका ख्याताः सर्वसिद्धिप्रदायकाः ॥५५७॥ इति ।

अथ दशगणेशा —

एकाक्षरो गणपति र्द्व्यक्षरश्च तथा स्मृतः ।
वल्लभागणपश्चैव तथा स्याच्चतुरक्षरः ॥५५८॥

महागणपतिश्चैव तथा वीरगणाधिपः ।
प्रोक्तो वश्यगणेशश्च तथा क्षिप्रप्रसादनः ॥

हरिद्रागणपःसिंहगणेशश्च तथा दश ॥५५९॥ इति ।

अथ दशविद्यायक्षिण्य —

यद्विद्यायाश्च या यक्षी सा तस्या सेवकी स्मृता ।
तस्याश्चोपासको यो हि तस्य सा सिद्धयति ध्रुवम् ॥५६०॥
अन्यमंत्रं सेवमानो अन्यां सेवेन यक्षिणीम् ।
न तस्य फलसिद्धिः स्याद् यक्षिणीकोपमाप्नुयात् ॥५६१॥
आदौ काली च तद्यक्षी महामधुमती परा ।
द्वितीया भ्रमरांबा च सुंदर्याः सुरसुंदरी ॥५६२॥
भैरव्याश्चन्द्ररेखा च यक्षिणी परिकीर्तिता ।
तारायास्तारिणी यक्षी विकटा पद्मनायिका ॥५६३॥
छिन्नाया लंपटा यक्षी वगलाया विडालिका ।
कमलायास्तु धनदा भुवनेश्याः शृणु प्रिये ।
त्रैलोक्यमोहिनी यक्षी मातंग्याः शृणु पार्वति ॥५६४॥
श्रीमनोहारिणी प्रोक्ता धूमावत्याः शृणु प्रिये ।
भीषणी यक्षिणी प्रोक्ता प्रोक्तेयं दश यक्षिणी ॥५६५॥
एतदज्ञानतो देवि न हि सिद्ध्यन्ति कुत्रचित् ।
एतद् यो वै न जानाति कापि यक्षी न सिद्ध्यति ॥५६६॥

अथ दश मण्डलानि—

दशविद्याक्रमेणैव प्रोच्यन्ते मण्डलान्यथ ।
एतद् ज्ञानवशाद् देवि सर्वा विद्या प्रसिद्ध्यति ॥५६७॥
अप्सरो मण्डलं देवि किन्नरीमण्डलं तथा ।
गंधर्वमण्डलं देवि सिद्धगुह्यकमण्डलम् ॥५६८॥
पिशाचमण्डलं चैव भूतिनीमण्डलं तथा ।
नागिनीमण्डलं देवि डाकिनीमण्डलं तथा ॥५६९॥
कूष्माण्डमण्डलं देवि तथा शावरमण्डलम् ।
दशविद्याक्रमेणैव श्रीक्रोधमण्डलेन वा ॥५७०॥
पार्षन्मण्डलयोगेन सर्वाः सिद्ध्यन्ति सिद्धयः ।
मण्डलत्रितये देवि अप्सराद्याः सुसिद्धिदाः ॥५७१॥इति।

अन्यच्च—

काली तारा छिन्नमस्ता वीरसाधनमार्गतः ।
यामसात्रेण सिद्ध्यन्ति नात्र कार्या विचारणा ॥५७२॥
साधनारहिते देवि वर्णलक्षत्रये शिवे ।
कालिका सिद्धिदा प्रोक्ता तारा श्री शिवतत्त्वकैः ॥५७३॥
छिन्नमस्ता चतुःषष्टिलक्षजापेन सिद्ध्यति ।
चतुराशीतिलक्षैस्तु सुन्दरी साधनं विना ॥५७४॥
वाला कोट्यर्धजापेन वगला पञ्चसप्ततिः ।
श्रीमहाराजमातङ्गी वर्णलक्षैस्तु सिद्ध्यति ।
सिद्धविद्या महेशानि मासलक्षेण सिद्ध्यति ।
महालक्ष्मी च भुवना तथा धूमावती प्रिये ॥५७५॥
विद्यागुणनयोगेन सिद्ध्यन्तेव न चान्यथा ।
विद्यामात्रे महेशानि विद्यानामार्णयोगतः ॥५७६॥
मातृकार्णकृतेनैव गुणनं भाजनं भवेत् ।
तावल्लक्षै र्महेशानि सिध्यत्येव न चान्यथा ।
भैरवस्य तु योगेन शावरं सिद्धिदायकम् ।
एका चेद् देवता सिद्धा तदा सिद्धं जगत्त्रयम् ॥५७७॥ इति ।

इति श्रीमदागमरहस्ये सत्संग्रहे उत्तरार्धे दीक्षादिकथन
नाम तृतीयः पटलः । आदित एकत्रिंगत् ॥

## अथ चतुर्थः पटलः ।

अथ दीक्षाभेदा । तत्रादौ कालिकाक्रम निरुत्तरे—

पादुका त्रिविधा देवि स्थूलं मध्यं तथा लघु ।
महागणपतिश्चैव दुर्गा स्यात् वसुकर्णिका ॥५७८॥
आपदुद्धारकश्चैव शरभश्च ततः परम् ।
महाकालश्च सुमुखी कुरुकुल्ला च कालिका ॥
कालिकाक्रम एष स्यात् देवताप्रीतिकारकः ॥५७९॥

अथ त्रिशक्तिक्रम —

श्रीविद्या षोडशी चैव श्यामा द्वाविंशदक्षरी ।
सार्धपञ्चाक्षरी तारा त्रिशक्तिक्रम ईरितः ॥५८०॥

अन्यच्च शक्तिसङ्गमे—

कालिका तारिणी चैव सुन्दरी गणपस्तथा ।
शरभो मंजुघोषश्च महाकालस्तथैव च ॥५८१॥

दुर्गाभैरवश्रीनाथत्रयमम्बावनांतिमम् ।
त्रिशक्तिक्रममाख्यातं देवानामपि दुर्लभम् ॥५८२॥ इति ।

अथ मेधादीक्षाक्रम —

कालिका च तथा तारा छिन्नमस्ता च षोडशी ।
वगलेति च मेधाख्या दीक्षा सर्वोत्तमा स्मृता ॥५८३॥

अन्यच्चोड्डण्डभैरवीये—

आदौ कामकला प्रोक्ता ततश्चिन्तामणिर्भवेत् ।
ततो वाला स्पर्शमणिः कामेशी सिद्धिकालिका ॥५८४॥

विद्याराज्ञी षोडशी च पश्यन्ती कामकालिका ।
चरणेशी हंसकाली चतुश्चरणरूपिणी ॥
कुब्जिका गुह्यकाली च मेधा दीक्षा त्वियं भवेत् ॥५८५॥ इति ।

अथ साम्राज्यमेधा—

वाला तारा च वगला छिन्ना प्रत्यङ्गिरा तथा ।
साम्राज्यमेधा कथिता साधकाभीष्टदायिनी ॥५८६॥

अथ पूर्णाभिषेके मन्त्रक्रमो निरुत्तरतन्त्रे—

श्रीविद्या भेदसहिता बाला च त्रिपुरा तथा ।
भगमाला तथा नित्यक्लिन्ना चैव स्वयंवरा ॥५८७॥

मधुमत्युन्मनी भेडा शारिका सुरसुन्दरी ।
अश्वारूढा महामाया कुरुकुल्ला सुरेश्वरि ॥५८८॥

भुवनेश्यन्नपूर्णा च पूर्वाम्नायाधिदेवता ।
शिवपञ्चाक्षरीभेदाः प्रासादाख्यशिवस्तथा ॥५८९॥

विष्णोरष्टाक्षरीभेदा वासुदेवाह्वयस्तथा ।
गाणपत्यं तथैकार्णभेदा घृणिमनुस्तथा ॥५९०॥

पूर्वाम्नायेषु कथिताः साधकाभीष्टदायकाः ।
वगला वशिनीभेदा त्वरिता च तथा स्मृता ॥५९१॥
वाराही भेदसहिता भोगिनी भेदसंयुता ।
कामेश्वरी च भेरुण्डा वज्रेशी वह्निवासिनी ॥५९२॥
शिवदूती विचित्रा च विजया सर्वमङ्गला ।
महिषघ्नी महालक्ष्मी दक्षिणाम्नायदेवताः ॥५९३॥
पुंमंत्राश्चैव वक्ष्यंते वाराहस्तुम्बुरस्तथा ।
हरिद्रागणपश्चैव वटुकः क्षेत्रपालकः ॥५९४॥
शास्ता चैव नृसिंहश्च दधिवामनसञ्ज्ञकः ।
श्रीकृष्णमंत्रभेदाश्च तथा हरिहरात्मकः ॥५९५॥
दक्षिणाम्नायसंस्थाश्च सर्वसिद्धिप्रदायिनः ।
महासरस्वतीदेवी ततो वाग्वादिनी मता ॥५९६॥
तथा नीलपताका च भैरवीभेदसंयुता ।
चामुंडा रक्तचामुंडा ब्राह्म्यादि दश देवताः ॥५९७॥
प्रत्यंगिरा भवानी च पश्चिमाम्नायदेवताः ।
पुंमंत्राश्चैव विख्यातास्तथोच्छिष्टविनायकः ॥५९८॥
पुरुषोत्तममंत्राश्च मालामंत्रास्तथैव च ।
अघोररुद्रभेदाश्च जैनबौद्धप्रभेदकाः ॥५९९॥
पश्चिमाम्नायविख्याताः सर्वाभीष्टफलप्रदाः ।
कालिकाभेदसहिता ताराभेदैश्च संयुता ॥६००॥
मातंगी भैरवी छिन्ना तथा धूमावती मता ।
उत्तराम्नायकथिता दक्षिणामूर्तिरेव च ॥६०१॥
ग्रहाणां लोकपालानां मंत्राश्चण्डेश्वरस्य तु ।
बेतालः चेटकश्चैव वीरभद्रस्तथैव च ॥६०२॥
सुब्रह्मण्यमातृपुत्रा उत्तराम्नायसंस्थिताः ।
पराप्रासादमंत्रश्च श्रीविद्या षोडशाक्षरी ॥६०३॥

कालिका दक्षिणा चैव मालिनी श्रीगुरोर्मनुः ।
चरणं नवनाथाश्च मूलविद्याश्च षोडश ॥६०४॥
आधारषट्कविद्याश्च संविद्देवी तथैव च ।
चतुःषष्टिमहामंत्रा ऊर्ध्वाम्नाये व्यवस्थिताः ॥६०५॥
पराप्रासादमंत्रश्च लक्ष्मीनारायणस्तथा ।
चिदंबरमहामंत्रः पक्षिरूपाश्च शारभाः ॥६०६॥
षडेव शांभवाश्चैव महामृत्युंजयस्तथा ।
लक्ष्मीजनार्दनो लक्ष्मीवासुदेवस्तथैव च ॥६०७॥
राजराजेश्वरश्चैव पंचवक्रोऽथ मारुतेः ।
मार्तंडभैरवश्चैव महागणपतिस्तथा ।
उच्छिष्टगणनाथश्च वक्रतुंडस्तथैव च ॥६०८॥
गाणपत्यः श्रियायुक्तो सीतारामस्तथैव च ।
नृसिंहानुष्टुभश्चैव पंचवाणास्तथैव च ॥६०९॥
पंचकामाश्च देवेशि जैना वौद्धास्तथैव च ।
शंभोरूर्ध्वमुखादेव निर्गता वीरवंदिते ॥६१०॥
एते मंत्राः पूर्णदीक्षाधिकारे संप्रकीर्तिताः ।
अन्यापि दीक्षा श्रीनाथादिश्लोकमंत्रक्रमेण सा ॥६११॥
अघोरपादुकामंत्रादाघोरी परिकीर्तिता ।
निर्वाणपादुकायोगान् निर्वाणाख्या प्रकीर्तिता ॥६१२॥
निर्वाणात्तु परं देवि नास्ति ज्ञाने तु मामके ।
षोडश्यां पूर्णदीक्षा तु संप्रदायपरा मता ॥६१३॥
पूर्णाभिषेकी आचार्यो नाधिकारी तथापरः ।
अन्यदीक्षासमायुक्तो देवी पूज्य क्रमेण हि ॥६१४॥
तत्त्वं संशोध्य तं दद्यात् कनिष्ठाय प्रियाय च ।
अंतःशुद्धि र्वहिःशुद्धि र्द्विविधा परिकीर्तिता ॥६१५॥
अंतस्तत्त्वत्रयाच्छुद्धि र्वहिःशुद्धिस्तु दीक्षया ।
दीक्षामोक्षोपदेशेन चांडालोऽपि विमुच्यते ॥६१६॥

आभ्यां विना कुलेशानि कौलिकोऽपि न मुच्यते ।
मंत्रौषधैर्यथा हन्यात् विषशक्ति कुलेश्वरि ॥६१७॥
पशुपाशं तथा छिद्यात् दीक्षाया मंत्रविद् गुरुः ।
उपपातकलक्षाणि महापातककोटयः ॥६१८॥
क्षणात् दहति देवेशि दीक्षा हि विधिना कृता ।
यया दीक्षितमात्रेण जायते प्रत्ययः शिवे ॥६१९॥
सा दीक्षा मोक्षदा ज्ञेया शेषास्तु जलसेचकाः ।
उपासनाशतेनापि यां विना नैव सिध्यति ॥६२०॥
तां दीक्षामाश्रयेद् यत्नात् श्रीगुरोर्मन्त्रसिद्धये ।
दीक्षाग्निदग्धकर्माणो मायाविच्छिन्नबंधनाः ।
गतः परां ज्ञानकाष्ठां निर्बीजस्तु शिवो भवेत् ॥६२१॥
द्विजो वा दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः ।
द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रस्य निश्चयः ॥६२२॥
गुरुशक्तिसुतानां च यो भवेत् पूर्वदीक्षितः ।
गुरुवत् तेन ते पूज्या नावमान्या. कदाचन ॥६२३॥
शिष्योऽदीक्षितमात्रश्चेद् यदि स्वर्गं गतो गुरुः ।
एतत् संतानजेनैव पूर्णदीक्षां समाश्रयेत् ॥६२४॥

इति कुलार्णवयामलकौलसर्वस्वादिष्विति ।

अन्यच्च—

अभिषेक्ता गुरुः कीदृक् कीदृग्यमभिषेचयेत् ।
तयोश्च लक्षणं ब्रूहि येन देवी प्रसीदति ॥६२५॥

अथ शिष्यलक्षणम् । यदाह शिव —

प्रथमं लक्षणं वक्ष्ये शिष्यस्य वरवर्णिनि ।
यस्य श्रवणमात्रेण शिष्यज्ञानं प्रजायते ॥६२६॥

अथ शिष्यदूषणानि कुलार्णवे—

कुष्ठांगं वायुसंदुष्टं गुणहीनं विरूपिणम् ।
परशिष्यं च पाखंडं शठं पण्डितमानिनम् ॥६२७॥

हीनाधिकविकारांगं विकलावयवान्वितम् ।
पंगुमंधं च वधिरं मलिनं व्याधिपीडितम् ॥६२८॥
उच्छिष्टं दुर्मुखं वापि स्वेच्छावेषधरं प्रिये ।
दुर्विकारांगचेष्टेहागतिभाषणवीक्षणा ॥६२९॥
निद्रातन्द्राजडालस्यद्यूतादिव्यसनान्वितम् ।
कपाटकुब्जः स्तंभादौ तिरोहिततनुं तथा ॥६३०॥
शीलभक्तिहरं क्षुद्रं बाह्यभक्तिविवर्जितम् ।
क्रूरैकवादिनं स्तब्धं प्रेषकं प्रेषितं शठम् ॥६३१॥
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ।
रहस्यभेदकं चापि देवकार्यार्थसेवकम् ।
मार्जारबकवृत्तिं च रंध्रान्वेषणतत्परम् ॥६३२॥
मायाविनं कृतघ्नं च प्रच्छन्नांतरदायकम् ।
विश्वासघातकं स्वामिद्रोहिणं पापकारिणम् ॥६३३॥
अविश्वासकरं शुद्धमात्मानं सिद्धिकाङ्क्षिणम् ।
आततायिनमादित्सुं कुत्सितं कूटसाक्षिणम् ॥६३४॥
सर्वप्रतारकं देवि सर्वोत्कृष्टाभिमानिनम् ।
असूयुं निष्ठुरासह्यं ग्राम्यादिवहुभाषिणम् ॥६३५॥
दुर्विवादकुतर्कादिकारिणं कलहप्रियम् ।
वृद्धाक्षेपकरं मूर्खं चपलं वाग्विडंबकम् ॥६३६॥
परोक्षदूषणकरं प्रत्यक्षप्रियवादिनम् ।
वाग्ब्रह्मवादिनं विद्याचोरमात्मप्रशंसकम् ॥६३७॥
गुणासहिष्णुमहितमार्त्तं क्रोधनमंबिके ।
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम् ॥६३८॥
पिशुनं परसंतापं संविदप्रणयं तथा ।
स्वक्लेशवादिनं स्वामिद्रोहिणं स्वामिवंचकम् ॥६३९॥
जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहास्यक्लेशक्रोधादिकारिणम् ॥६४०॥

अतिसाहसकर्माणं मर्मातिपरिहासकम् ।
कामुकं चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥६४१॥

असूयामदमात्सर्य दम्भाहंकारसंयुतम् ।
ईर्ष्यापारुष्यपैशुन्यकार्पण्यक्रौर्यमानसम् ॥६४२॥

अधीनं दुःखितं भीरुमशक्तं स्तब्धमातुरम् ।
अप्रबुद्धं मंदमति मूढं चिताकुलं विटम् ॥६४३॥

तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम् ।
वह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥६४४॥

भक्तिश्रद्धादयाशांतिधर्माचारादिवर्जितम् ।
मातापितृगुरुप्राज्ञसद्वचोहास्यकारिणम् ।
कुलद्रव्यादिबीभत्सुं गुरुसेवाभिमानिनम् ॥६४५॥

स्त्रीद्विष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि ।
इत्यादि दुर्गुणोपेतं गुरुः शिष्यं परित्यजेत् ॥६४६॥

अथ सच्छिष्यलक्षणम्—

सच्छिष्यं तु कुलेशानि शुभलक्षणसंयुतम् ।
शमादिसाधनोपेतं गुरौ शीलसमन्वितम् ॥६४७॥

स्वच्छदेहांबरधरं धार्मिकं शुद्धमानसम् ।
दृढव्रतं दृढाचारं श्रद्धाभक्तिदयान्वितम् ॥६४८॥

कृतज्ञं पापभीरुं च साधुसज्जनसंमतम् ।
आस्तिकं दानशीलं च सर्वभूतहिते रतम् ॥६४९॥

विश्वासविनयोपेतं धनदेहाद्यवंचकम् ।
असाध्यसाधकं शूरमुत्साहबलसंयुतम् ॥६५०॥

अनुकूलक्रियोद्युक्तमप्रमत्तं विचक्षणम् ।
हितसत्यमितस्मेरभाषिणं मुक्तदूषणम् ॥६५१॥

सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम् ।
दक्षमल्पाशिनं गूढचित्तं निर्व्याजसेवकम् ॥६५२॥

निसृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्यातिकुशलं स्वच्छं सर्वोपकारकम् ॥६५३॥

स्वस्तुतौ परनिंदायां विमुखं सुमुखं प्रिये ।
जितेन्द्रियं सुसंतुष्टं धीमन्तं ब्रह्मचारिणम् ॥६५४॥

त्यक्ताधिव्याधिचापल्यं दुःशंकार्तिमसंशयम् ।
गुरुध्यानस्तुतिकथासेवार्चावंदनोत्सुकम् ॥६५५॥

गुरुदैवतसद्भक्तं कामिनीपूजनप्रियम् ।
नित्यं गुरुसमीपस्थं गुरुसंतोषकारकम् ॥६५६॥

मनोवाक्तनुभि र्नित्यं गुरुकार्यसमुद्यतम् ।
गुर्वाज्ञापालकं देवि गुरुकीर्तिप्रकाशकम् ।
गुरुवाक्यप्रमाणं च गुरुशुश्रूषणे रतम् ॥६५७॥

चित्तानुवर्तिनं प्रेक्ष्यकारिणं कुलनायिके ।
लज्जाभिमानगर्वादिवर्जितं गुरुसंनिधौ ॥६५८॥

निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिलाषिणम् ।
कुलधर्मकथायोगियोगिनीकौलिकप्रियम् ॥६५९॥

कुलार्चनादिसहितं कुलद्रव्याजुगुप्सकम् ।
जपध्यानादिनिरतं मोक्षमार्गाभिलाषिणम् ॥६५०॥

कुलशास्त्रप्रियं देवि पशुशास्त्रपराङ्मुखम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥६५१ ॥ इति ।

अथगुरो र्योग्यायोग्यलक्षण तत्रैव—

श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः ।
सर्वलक्षणसंपन्नः सर्वावयवशोभितः ॥६६२॥

सर्वागमार्थतत्त्वज्ञः सर्वमंत्रविधानवित् ।
लोकसंमोहनकरो देववत् प्रियदर्शनः ॥६६३॥

सुमुखः सुलभः स्वच्छः संशयच्छिदसंशयः ।
इंगिताकारचेष्टज्ञः ऊहापोहविदुज्ज्वलः ॥६६४॥

श्रीशिव उवाच—

अंतर्मुखो बहिर्दृष्टिः सर्वज्ञो देशकालवित् ।
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥६६५॥

वेधको बोधकः शांतः सर्वजीवदयापरः ।
स्वाधीनेन्द्रियसंचारः षड्वर्गविजये क्षमः ॥६६६॥

अग्रगण्योऽतिगंभीरः पात्रापात्रविशेषवित् ।
शिवविष्णुसमः साधुर्न च दर्शनदूषकः ॥६६७॥

निर्ममो नित्यसंतुष्टः स्वतंत्रो नित्यशक्तिमान् ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक् ॥६६८॥

भक्तिप्रियः सर्वसमो गंभीरः शिष्यशासिता ।
स्वेष्टदेवगुरुप्राज्ञवनितापूजनोत्सुकः ॥६६९॥

नित्ये नैमित्तिके काम्ये रतः कर्मण्यतन्द्रितः ।
रागद्वेषभयक्लेशदंभाहंकारवर्जितः ॥६७०॥

स्वविद्यानुष्ठानतपोधर्माणामप्रकाशकः ।
वर्णाश्रमज्ञानतपोधर्माणां च प्रकाशकः ॥६७१॥

यदृच्छालाभसंतुष्टो गुणदोषविवेचकः ।
स्त्रीधनादिष्वनासक्तो दुःसंगव्यसनोज्झितः ॥६७२॥

सर्वाहंभावनिर्मुक्तो निर्द्वन्द्वो नियतव्रतः ।
अलोलुपोऽहिंसकश्च पक्षपाते विचक्षणः ॥६७३॥

निःसंकल्पविकल्पश्च विनीतात्मातिधार्मिकः ।
सेवाभक्तिपरणैः मंत्रयंत्रतंत्रादिविक्रयी ॥६७४॥

तुल्यनिंदास्तुति मौनी निरपेक्षो नियामकः ।
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ॥६७५॥

यः सर्वगः शिवः सूक्ष्मश्चोन्मना निष्कलोऽव्ययः ।
व्योमाकारोह्यजोऽनन्तः स कथं पूज्यते प्रिये ॥६७६॥

अतएव शिवः साक्षात् गुरुरूपं समाश्रितः ।
भक्त्या संपूजितो देवि भुक्तिमुक्ती प्रयच्छति ॥६७७॥

शिवो दिव्याकृति र्देवि नरदृग्गोचरो न हि ।
तस्मात् श्रीगुरुरूपेण शिष्यान् रक्षति धार्मिकान् ।।६७८।।

मनुष्यचर्मणा बद्धः साक्षात् परशिवः स्वयम् ।
स्वशिष्यानुग्रहार्थं तु गूढः पर्यटति क्षितौ ।।६७९।।

सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः ।
शिवः कृपानिधि र्लोके संसारीव हि चेष्टते ।।६८०।।

ललाटलोचनं चांद्रीं कलामपि च दोर्द्वयम् ।
अन्तर्निधाय वर्त्तेयं गुरुरूपो महीतले ।।६८१।।

अत्रिनेत्रः शिवः साक्षात् अचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ।।६८२।।

नरवद्दृश्यते लोके नराणां पापकर्मणाम् ।
शिववद्दृश्यते साक्षान्नराणां पुण्यकर्मणाम् ।
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चक्षुरग्रतः ।।६८३।।

मंदभाग्या न पश्यंति ह्यन्धाः सूर्यमिवोदितम् ।
गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः ।।६८४।।

शिवश्च स्वगुरु र्नोचेत् भुक्तिमुक्ति ददाति कः ।
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ।।६८५।।

उभयोरंतरं नास्ति यः करोति स पातकी ।
देशिकाकृतिमास्थाय पशोः पाशानशेषतः ।।६८६।।

भित्वा परं पदं देवो नयत्येव इति श्रुतिः ।
सर्वानुग्रहकर्तृत्वादीश्वरः करुणानिधिः ।।६८७।।

आचार्यरूपमास्थाय दीक्षया मोक्षतां नयेत् ।
यथा घटश्च कलशः कुंभश्चैकार्थवाचकः ।।६८८।।

तथा देवश्च मंत्रश्च गुरुश्चैकार्थ उच्यते ।
यथा देवं तथा मंत्रं यथा मंत्रं तथा गुरुम् ।।६८९।।

देवमंत्रगुरूणां च पूजया सदृशं फलम् ।
गुरुरूपं समास्थाय पूजां गृह्णाति पार्वति ॥६९०॥

सिद्धान्तसारवेत्ताहं बीजहा स्थिरबोधकृत् ।
अविच्छिन्नः सदानुग्रहप्रदो गुरुरुच्यते ॥६९१॥

यो विलंघ्याश्रमान् वर्णानात्मन्येव सदास्थितः ।
सोऽतिवर्णाश्रमी योगी सद्गुरुः कथितः प्रिये ॥६९२॥

दृश्यं विना स्थिरे दृष्टि र्मनश्चालंवनं विना ।
विनावासं स्थिरो वायुर्यस्य स्यात् स गुरुः प्रिये ॥६९३॥

यत्तु संवित्तिजननं परानंदसमुद्भवम् ।
तत्तत्त्वं विदितं येन स गुरुः कुलनायिके ॥६९४॥

भूतभव्यौ मंत्ररौद्रौ शाक्तशांभवौ वेत्ति यः ।
वेधं च षड्विधं देवि स हि वेधकरो गुरुः ॥६९५॥

पदवर्णकलामंत्रसतत्त्वभुवनाह्वयम् ।
शोधयेद् यः षडध्वानं स गुरुः कथितः प्रिये ।
षडाधारनवाधारषोडशाधारनिर्णयम् ॥६९६॥

यो जानाति विधानेन स गुरुः कथितः प्रिये ।
जाग्रत्स्वप्नसुषुप्तीश्च तुर्यां च तदतीतकम् ॥६९७॥

यो वेत्ति पंचकं देवि स गुरुः परिकीर्तितः ।
पिंडं पदं तथा रूपं रूपातीतं चतुष्टयम् ॥६९८॥

यो वा सम्यग् विजानाति स गुरुः कथितः प्रिये ।
यो वा परां च पश्यंतीं मध्यमां वैखरीमपि ॥६९९॥

चतुष्टयं विजानाति स गुरुः कथितः प्रिये ।
आत्मविद्या शिवः सर्वमिति तत्त्वचतुष्टयम् ॥७००॥

यो वेत्ति परमेशानि स गुरुः परिकीर्तितः ।
पाशस्तंभं वेद्यदीक्षां पशुग्रहणमेव च ॥७०१॥

त्रिविधं यो विजानाति स गुरुः कथितः प्रिये ।
बाह्योत्तरमयीं व्याख्यां लिंगं त्रितयसंस्थितम् ॥७०२॥

तत्त्वतो यो विजानाति स गुरुः कथितः प्रिये ।
आणवं कार्मिकं चैव मायिकं च मलत्रयम् ॥७०३॥

यो विशोधयितुं शक्तः स गुरुः कथितः प्रिये ।
सरक्तशुक्लमिश्राख्यचरणत्रयवासनाम् ॥७०४॥

यो जानाति महादेवि स गुरुः परिकीर्तितः ।
चक्रसंकेतकं मंत्रं पूजासंकेतकं तथा ॥७०५॥

त्रिविधं यो विजानाति स गुरुः कथितः प्रिये ।
महामुद्रां नभोमुद्रां चोड्डियानं जलंधरम् ॥७०६॥

मूलबन्धं च यो वेत्ति स गुरुः कथितः प्रिये ।
शिवादिक्षितिपर्यन्तं षट्त्रिंशत्तत्त्वनिर्णयम् ॥७०७॥

यो विजानाति तत्त्वेन स गुरुः कथितः प्रिये ।
अन्तर्यागं बहिर्यागं कालज्ञानस्थितिं प्रिये ।
राधायंत्रविधानं च यो वेत्ति स गुरुः प्रिये ॥७०८॥

पिंडब्रह्मांडयोरैक्यं स्थितिं यो वेत्ति तत्त्वतः ।
शिरास्थिरोमसंमज्जा स गुरुः कथितः प्रिये ॥७०९॥

पद्मादिचतुराशीतिनानासनविचक्षणः ।
यमाद्यष्टांगयोगज्ञः स गुरुः कथितः प्रिये ॥७१०॥

घृणा शंका भयं लज्जा जुगुप्सा चेति पंचमी ।
कुलशीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः ॥७११॥

पाशबद्धः पशुः प्रोक्तः पाशमुक्तो महेश्वरः ।
तस्मात् पाशहरो योऽत्र स गुरुः कथितः प्रिये ॥७१२॥

बंधनं योनिमुद्राया मंत्रचैतन्यदर्शनम् ।
मंत्राद्यं तत्स्वरूपं च यो वेत्ति स गुरुः प्रिये ॥७१३

विनिक्षिप्तं गण्ययानं संश्लिष्टं सुविनीयकम् ।
चतुर्विधां मनोवस्थां यो वेत्ति स गुरुः प्रिये ॥७१४॥

मूलादिब्रह्मरंध्रांतं सप्तांभोजदलेषु यः ।
जीवचारफलं वेत्ति स गुरु र्नापरः प्रिये ॥७१५॥

शिवादिक्षितिपर्यन्तं पारंपर्यक्रमेण यः ।
अवाप्ततत्त्वसद्भावः स गुरुः कथितः प्रिये ॥७१६॥

येन वा दर्शिते तत्त्वे तत्क्षणात् तन्मयो भवेत् ।
मन्यते मुक्तमात्मानं स गुरुः कथितः प्रिये ॥७१७॥

ये दत्वा सहजानन्दं हरंतीन्द्रियजं सुखम् ।
सेव्यास्ते गुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः ॥७१८॥

ये मनस्थां स्वशिष्येषु दर्पणेष्विव रूपताम् ।
संक्रामयन्ति ते धन्या गुरवोऽन्ये प्रतारकाः ॥७१९॥

यः प्रसन्नः क्षणार्धेन मोक्षलक्ष्मीं प्रयच्छति ।
दुर्लभं तं विजानीयाद् गुरुं संसारतारकम् ॥७२०॥

यः क्षणेनात्मसामर्थ्यं स्वशिष्याय ददाति हि ।
क्रियायासादिरहितं स गुरुर्दुर्लभः प्रिये ।
क्षुधितस्य यथा तृप्तिराहारादाशु जायते ॥७२१॥

तथोपदेशमात्रेण ज्ञानदो दुर्लभो गुरुः ।
गुरवो बहवः संन्ति दीपवच्च गृहे गृहे ॥७२२॥

दुर्लभोऽयं गुरुर्देवि सूर्यवत् सर्वदीपकः ।
गुरो र्यस्यैव संपर्कात् परानंदो हि जायते ॥७२३॥

गुरुं तमेव वृणुयात् नापरं मतिमान् नरः ।
शंकया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ॥७२४॥

सा शंका भक्षिता येन स गुरुर्देवि दुर्लभः ।
सर्वलक्षणसंपन्नो वेदशास्त्रविशारदः ॥७२५॥

सर्वोपायविधानज्ञः तत्त्वहीनो गुरुर्नहि ।
पूजाहोमाश्रमाचारतपस्तीर्थव्रतादिकम् ।
मंत्रागमादिविज्ञानं तत्त्वहीनस्य निष्फलम् ॥७२६॥

स्वसंवेद्ये परे तत्त्वे स्वात्मनिष्ठेन निश्चयः ।
आत्मन्यनुग्रहो नास्ति परस्यानुग्रहः कुतः ॥७२७॥

षट्प्रकारं मनोरूपं प्रत्यक्षं स्वात्मनि स्थितम् ।
यो न जानाति चान्यस्य कथं मोक्षं ददात्यसौ ॥७२८॥

सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः ।
तस्मात् तत्त्वविदो देही मुक्तो मोचक एव हि ॥७२९॥

यस्तत्त्वविन्महेशानि स पशुं बोधयत्यपि ।
तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥७३०॥

तत्त्वज्ञैरुपदिष्टा ये तत्त्वज्ञास्ते न संशयः ।
पशुभिश्चोपदिष्टा ये ते देवि पशवः स्मृताः ॥७३१॥

बुद्धस्तु बोधयेद्देवि नाबुद्धो बोधको भवेत् ।
मुक्तस्तु मोचयेद् द्वन्द्वममुक्तो मोचकः कथम् ॥७३२॥

मतिमांश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शैवे गुरुत्रयं प्रोक्तं वैष्णवे गुरुपंचकम् ॥७३३॥

वेदशास्त्रेषु शतशो गुरुरेकः कुलान्वये ।
प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ॥७३४॥

शिक्षको बोधकश्चेति षडेते गुरवः स्मृताः ।
पंचैते कार्यभूताः स्युः कारणं बोधको भवेत् ॥७३५॥

पूर्णाभिषेककर्ता यो गुरुस्तस्यैव पादुका ।
पूजनीया महेशानि बहुत्वेऽपि न संशयः ॥७३६॥

श्रीगुरुं लक्षणोपेतं संशयच्छेदकारणम् ।
लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥७३७॥

अनभिज्ञं गुरुं प्राप्य संशयाच्छेदकारकम् ।
शिष्यो गुर्वन्तरं गत्वा तद्दोषं नानुलिप्यते ॥७३८॥

मधुलुब्धो यथा भृंगः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरो र्गुर्वन्तरं व्रजेत् ॥७३९॥ इति ।

यथायोग्यगुरुत्यागे दोष' श्रीकुलार्णवे—

गुरुत्यागात् भवेन् मृत्यु र्मत्रत्यागाद् दरिद्रता ।
गुरुमंत्रपरित्यागात् रौरवं नरकं व्रजेत् ॥७४०॥ इति ।

इति श्रीमदागमरहस्ये सत्सग्रहे उत्तरार्धे शिष्यगुरुविवेचनं नाम चतुर्थं पटल । आदितो द्वात्रिंशत् ।

## अथ पंचमः पटलः ।

एवं लब्ध्वा श्रीगुरुं च सहवासेन सेवया ।
निवेद्य मानसीं वृत्तिं प्राप्तानुज्ञस्तदा चरेत् ॥७४१॥

एतच्च कुलागमे—

विना दीक्षां न मोक्षः स्यात् प्राणिनां शिवशासनम् ।
सा च न स्याद्विनाचार्यमित्याचार्यपरंपरा ।
ज्ञेया सिद्धान्तशास्त्रार्थसंप्रदायादिहेतुना ॥७४२॥

आन्तरेणोपदिष्टाश्च मंत्राः स्युर्निष्फला यतः ।
देवास्तमेव शंसन्ति पारंपर्यप्रवर्तकम् ॥७४३॥

गुरुं मंत्रागमाभिज्ञं समयाचारपालकम् ।
गुरुः शिष्याधिकारार्थं विरक्तोऽपि शिवाज्ञया ॥७४४॥

किंचित्कालं विधायैतत् स्वशिष्याय समर्पयेत् ।
तस्यार्पिताधिकारस्य योगः साक्षात् परे शिवे ॥७४५॥

तदन्ते शाश्वतोमुक्तिरिति शंकरभाषितम् ।
तस्मात् सर्वप्रयत्नेन साक्षात् परशिवोदितम् ॥७४६॥

संप्रदायमविच्छिन्नं सदा कुर्याद् गुरुः प्रिये ।
भुक्तिमुक्तिसुसिध्यर्थं परीक्ष्य विधिवद् गुरुः ॥७४७॥

पश्चादुपदिशेन्मंत्रमन्यथा निष्फलं भवेत् ।
अन्यायेन तु यो दद्यात् गृह्णात्यन्यायतश्च यः ॥७४८॥

ददतो गृह्णतो देवि कुलशापो भविष्यति ।
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ॥७४९॥

उपदेशं ददन् गृह्णन् प्राप्येतां तौ पिशाचताम् ।
अशास्त्रीयोपदेशं तु यो गृह्णाति ददाति च ॥७५०॥

भुंजाते तावुभौ घोरान् नरकानेकविंशतिः ।
असंस्कृत्योपदेशं तु यः करोति विमूढधीः ॥७५१॥

विनश्यत्येव तन्मंत्रः सैकते शालिबीजवत् ।
अनर्हे मंत्रविज्ञानं न तिष्ठति कदाचन ॥७५२॥

तस्मात् परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत् ।
कृत्वा समयदीक्षां च दत्वा समयपादुकाम् ।
संविधायात्मन. शिष्यं वदेन्मंत्रं न चान्यथा ॥७५३॥

असत् शिष्येष्वभक्तेषु यद् ज्ञानमुपदिश्यते ।
तत् प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव ॥७५४॥

धनेच्छालाभलोभाद्यैरयोग्यं यदि दीक्षयेत् ।
देवताशापमाप्नोति कृतं च विफलं भवेत् ॥७५५॥

ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत् ।
संवत्सरं तदर्धं वा तदर्धं वा प्रयत्नतः ॥७५६॥

उत्तमांश्चाधमे कुर्यान्नीचानुत्तमकर्मणि ।
प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः ॥७५७॥

तन्मर्मसूचकैर्वाक्यैः मायाभिः क्रूरचेष्टितैः ।
पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः ॥७५८॥

आक्रोशितस्ताडितश्च यो विषादं न याति हि ।
गुरुः कृपां करोतीति मुदा संचितयेत् सदा ॥७५९॥

श्रीगुरुस्मरणे चापि कीर्तने दर्शनेऽपि च ।
वंदने परिचर्यायामाह्वाने प्रेषणे प्रिये ॥७६०॥

आनंदकंपरोमांचस्वरनेत्रादिविक्रियाः ।
येषां स्यात् तत्र ते योग्या दीक्षासंस्कारकर्मसु ॥७६१॥

शिष्योऽपि लक्षणैरेतैः कुर्याद् गुरुपरीक्षणम् ।
आनंदाद्यै र्जपैः स्तोत्रै र्ध्यानहोमार्चनादिषु ॥७६२॥

ज्ञानोपदेशसामर्थ्यं मंत्रसिद्धिमथो पराम् ।
बोधकत्वं च विज्ञाय शिष्यो भूयान्नचान्यथा ॥७६३॥

आदिमध्यावसानेषु योग्यः शिष्यस्त्रिधा मतः ।
अधमो मध्यमः श्रेष्ठः शिष्यः शक्तिनिपातने ॥७६४॥

आदौ भक्ति र्भवेत् देवि दीक्षार्थं संवदन्ति ये ।
पुनर्विलुप्ता भक्तास्ते आदियोग्या इतीरिताः ॥७६५॥

दीक्षासमयसंप्राप्तज्ञानविज्ञानरंजिताः ।
भक्त्या प्रवृद्धवीर्या ये मध्ययोग्याश्च ते स्मृताः ॥७६६॥

आदौ भक्तिविहीना ये मध्ये भक्तिस्तु वा नवा ।
अंते प्रभूतभक्तिस्ते अंतर्योग्या भवंति हि ॥७६७॥

कर्मोपदेशो भक्तिश्च ज्ञानश्चेति त्रिधा प्रिये ।
यथा पिपीलिका मन्दं मन्दं वृक्षाग्रगं फलम् ॥७६८॥

चिरेणाप्नोति कर्मोपदेशश्चापि तथाविधः ।
यथा कपिश्च शाखायाः शाखामुल्लंघ्य यत्नतः ॥७६९॥

फलं प्राप्नोति भक्त्या स्यादुपदेशस्तथा प्रिये ।
यथा विहंगमः शीघ्रं फलमेव प्रसीदति ॥७७०॥

तथा ज्ञानोपदेशस्तु कथितः कुलनायिके ।
स्पर्शाख्या देवि दृक्संज्ञा मानसाख्या महेश्वरि ।
क्रियायासादिरहिता देवि दीक्षा त्रिधा स्मृता ॥७७१॥

यथा स्वपक्षी पक्षाभ्यां शिशून् संवर्धयेत् शनैः ।
स्पर्शदीक्षोपदेशस्तु तादृशः कथितः प्रिये ॥७७२॥

स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत् ।
दृग्दीक्षाख्योपदेशस्तु तादृशः कथितः प्रिये ॥७७३॥

यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत् ।
वेधदीक्षोपदेशस्तु मानसः स्यात्तथाविधः ॥७७४॥

शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ।
यत्र शक्तिर्न पतिता तत्र सिद्धिर्न जायते ॥७७५॥

क्रियावर्णकलास्पर्शवाक्दृङ्मानससंज्ञकाः ।
दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्तिताः ॥७७६॥

समयाख्या विशेषाख्या साधकापुत्रकाह्वया ।
वोधका पूर्णसंज्ञाख्या दया निर्वाणसंज्ञका ॥७७७॥

क्रिया दीक्षाष्टधा प्रोक्ता कुण्डमंडपपूर्विका ।
कलशादिसमायुक्ता कर्तव्या गुरुणा बहिः ॥७७८॥

देवेशि देहशुद्धयर्थं पूर्वोक्तविधिना चरेत् ।
वर्णदीक्षा त्रिधा प्रोक्ताष्टचत्वारिंशदक्षरैः ॥७७९॥

एकपंचाशद्वर्णैर्वा त्रिषष्टिलिपिभिस्तु वा ।
वर्णान् शिष्यतनौ न्यस्य प्रतिलोमेन सहरेत् ॥७८०॥

परमात्मनि संयोज्य तच्चैतन्यं क्षिपेद् बुधः ।
तस्मादुत्पादितान् वर्णान् न्यसेत् शिष्यतनौ पुनः ॥७८१॥

सृष्टिक्रमेण विधिना तच्चैतन्यं नियोजयेत् ।
जायते देवताभावः परानंदमयः शिशोः ॥७८२॥

एषा वर्णमयी दीक्षा प्रोक्ता पाशापहा प्रिये ।
कला दीक्षा त्रिधा ज्ञेया कर्तव्या विधिवत् प्रिये ।
निवृत्ति र्जानुपर्यन्तं तलादारभ्य संस्थिता ॥७८३॥

जानुनो र्नाभिपर्यन्तं प्रतिष्ठा तिष्ठति प्रिये ।
नाभेः कंठावधि व्याप्ता विद्याशांतिस्ततः प्रिये ॥७८४॥
कंठाल्ललाटपर्यन्तं व्याप्ता तस्मात् शिरोवधि ।
शान्त्यतीता कला ज्ञेया कलाव्याप्तिरितीरिता ॥७८५॥
संहारक्रमयोगेन स्थानात् स्थानान्तरं प्रिये ।
संयोज्य वेधयेत् सम्यग् विधिवत् ताः शिवावधि ॥७८६॥
इयं प्रोक्ता कुलेशानि दिव्यभावप्रदायिनी ।
अष्टात्रिंशत् कलाभिर्वा पंचाशद्भिरथापि वा ॥७८७॥
तत्त्वन्यासक्रमेणैव सृष्टिसंहारमार्गतः ।
ज्ञात्वा गुरुमुखाद् देवि शिष्ये संयोज्य वेधयेत् ॥७८८॥
जायते देवताभावो योगिनीवीरसंगमः ।
कला दीक्षा समुद्दिष्टा पशुपाशापहारिणी ॥७८९॥
हस्ते शिवं परं ध्यात्वा जपन् मूलांगमालिनीम् ।
गुरुः स्पृशेत् शिष्यतनुं स्पर्शदीक्षा भवेदियम् ॥७९०॥
चित्तं तत्त्वे समाधाय परतत्त्वोपबृंहितात् ।
उच्चरेत् सहितान् मंत्रान् वाग्दीक्षेति निगद्यते ॥७९१॥
निमील्य नयने ध्यात्वा परतत्त्वं प्रसन्नधीः ।
सम्यक् पश्येद् गुरुः शिष्यं दृग्दीक्षा सा भवेत् प्रिये ॥७९२॥
गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ।
सद्यः संजायते ज्ञानं सा दीक्षा शांभवी स्मृता ॥७९३॥
मनोदीक्षा द्विधा प्रोक्ता तीव्रा तीव्रतरेति च ।
अध्वानं षड्विधं ज्ञात्वा शिष्यदेहे स्मरेत् प्रिये ॥७९४॥
कल्पयेद् भुवनं तत्त्वं कलां तत्त्वं पदं मनुम् ।
स्वजानुनाभिहृत्कण्ठतालुमूर्धान्तिसंबिके ॥९९५॥
गुरूपदिष्टमार्गेण वेधं कुर्याद् विचक्षणः ।
पाशमुक्तः क्षणात् शिष्यः परानंदमयो भवेत् ।
एषा मुक्तिप्रदा प्रोक्ता तीव्रा दीक्षा कुलेश्वरि ॥७९६॥

देवि तीव्रतरा चापि गुरुणा स्मृतिमात्रतः ।
सम्यक् संबोधितः शिष्यश्छिन्नपाशस्तदा भवेत् ॥७९७॥

बाह्यव्यापारनिर्मुक्तो भूमौ पतति तत्क्षणात् ।
संजातदिव्यभावोऽसौ सर्वं वदति शांभवि ॥७९८॥

यदस्ति वेधकाले तत् स्वयमेवानुभूयते ।
प्रबुद्धस्तु न शक्नोति तत् सौख्यं वक्तुमीश्वरि ॥७९९॥

वेधविद्धः शिवः साक्षान्नपुनर्जन्मतां व्रजेत् ।
एषा तीव्रतरा दीक्षा भवबंधविमोचिनी ।
शिवभावप्रदा साक्षात् दीक्षा सा कुलनायिके ॥८००॥

आनंदश्चैव कंपश्च द्रवो घूर्णः कुलेश्वरि ।
निद्रा मूर्छा च तद्रूपाः षडवस्थाः प्रकीर्तिताः ॥८०१॥

दृश्यन्ते षड्गुणा ह्येते वेधकाले कुलेश्वरि ।
वेधितो यत्र कुत्रापि तिष्ठन् मुक्तो न संशयः ॥८०२॥

वेधदीक्षाकरो लोके श्रीगुरुर्दुर्लभः प्रिये ।
शिष्योऽपि दुर्लभस्तादृक् पुण्ययोगेन लभ्यते ॥८०३॥

न दद्याद् यस्य कस्यापि चेत्याज्ञा पारमेश्वरी ।
कुलद्रव्यैः समभ्यर्च्य कुलचक्रं विधानतः ॥८०४॥

शिष्याय दर्शयेद् देवि दीक्षैषा कौलिकी स्मृता ।
सिद्धद्रव्यं मुखे पूर्य पंचव्योमामृतान्वितम् ॥८०५॥

अभिषिंचेत् प्रियं शिष्यं गंडूषाख्येयमीरिता ।
सजीवमीनयुक्तेन सुरया पूरितेन च ॥८०६॥

पंचामृतैः सुसंपूर्णशंखेन कलशेन वा ।
अभिषेकं ततः कुर्याद् बाह्येन कथिता पुनः ॥८०७॥

मीनं तु लंबिका देवि वक्त्रं कलश उच्यते ।
पंचव्योमामृतापूर्णं शिष्यं तेनाभिषिंचयेत् ॥८०८॥

अयं सिद्धाभिषेकः स्यादाचार्याख्यस्य पार्वति ।
स्वीकारो दंतकाष्ठं च पुष्पांजलिरपि प्रिये ॥८०९॥

शंखो वेधश्चाभिषेकस्तथाज्ञा षड्विधा भवेत् ।
समयी दंतकाष्ठेन साधकः कुसुमांजलिः ॥८१०॥

पुत्रः शंखाभिषेकेण बोधको वेधसंज्ञया ।
पूर्णाभिषेकेणाचार्यः पंचावस्थाः प्रकीर्तिताः ॥८११॥

कुलाचारैकनिरता गुरुभक्ता दृढव्रताः ।
पूर्णाभिषेके पूता ये ते मुक्ताश्चाशुजन्मनि ॥८१२॥

पूर्णाभिषेकहीना ये मृताश्च कुलनायिके ।
पुनर्लब्ध्वोत्तमं जन्म गुरुणा शिवरूपिणा ॥८१३॥

शुद्धः पूर्णाभिषेकेण शिवसायुज्यदायिना ।
ते मुक्तिं तु व्रजन्त्येव शांभवो वाक्यडिंडिमा ॥८१४॥

पूर्णाभिषेकहीनो यः कौलिको म्रियते यदि ।
पिशाचत्वमवाप्नोति यावदाभूतसंप्लवम् ॥८१५॥

इदानीमभिषेकस्य विधानमभिधीयते ।
नाधिकारी विना येन साधकः साधने मनोः ॥८१६॥

यदुक्तमुत्तरातंत्रे यामले च कुलार्णवे ।
तंत्रे निरुत्तराख्ये च कामाख्यातंत्रकेऽपि च ॥८१७॥

श्रीदेव्युवाच—

श्रीमन्नाथ जगन्नाथ सर्वसंतापहारक ।
यदुक्तमभिषेकस्य विधानं कथय प्रभो ॥८१८॥

श्रीशिव —

लक्षवारसहस्राणि वारितासि पुनः पुनः ।
स्त्रीस्वभावात् महादेवि पुनस्त्वं परिपृच्छसि ॥८१९॥

गुप्तं च सर्वतंत्रेषु तवस्नेहात् महेश्वरि ।
अभिषेकं प्रवक्ष्यामि सर्वदोषविनाशनम् ॥८२०॥

धन्यं यशस्यमायुष्यं महापातकनाशनम् ।
अभिषेकेण सर्वेषामधिकारी भवेद् ध्रुवम् ॥८२१॥
नित्ये नैमित्तिके काम्ये चक्रराजार्चनादिषु ।
अन्यथा नाधिकारी स्याज्जपयज्ञार्चनादिषु ॥८२२॥
अभिषेकं च द्विविधं राज्ञो वा ज्ञानिनामपि ।
राज्ञोऽभिषेके देवेशि वैदिकादिक्रियां चरेत् ॥८२३॥
ज्ञानिनामभिषेकं तु सर्वतंत्रेषु गोपितम् ।
कुलचक्रक्रमेणैव त्वभिषेकं चरेत् सुधीः ॥८२४॥
कुलनाथं गुरुं वीक्ष्य त्वभिषेकं तु संचरेत् ।
पूर्णाभिषेकी यो न स्यान्नाभिषेके प्रवर्तते ॥८२५॥
वैष्णवो गाणपत्यश्च सौरः शैवः कुलेश्वरि ।
अभिषेकं प्रकुर्वीत शाक्तश्च कुलभूषणः ॥८२६॥
अभिषेककृतो विप्रो ब्रह्मत्वं लभते ध्रुवम् ।
अभिषिक्तस्तथा क्षत्री विप्रधर्मत्वमागतः ॥८२७॥
वैश्यः क्षत्रियतां याति शूद्रो वैश्यत्वमाप्नुयात् ।
आगमः पंचमो वेदः कुलं च पंचमाश्रमः ॥८२८॥
शिवोऽपि पंचमो वर्णः सिद्धविद्यां जपेद् यतः ।
स्वस्ववर्णं परित्यज्य सुरत्वं च प्रजायते ॥८२९॥
अभिषेकं विना देवि शिवत्वं लभते कथम् ।
शिवत्वेन विना देवि कुलपूजां कथं चरेत् ॥८३०॥
कुलपूजां विना देवि पितृभूमिं कथं व्रजेत् ।
पितृभूमिं विना मंत्री प्रांतरं वा चतुष्पथम् ॥८३१॥
कथं वै प्राप्नुयात् सिद्धिं शाश्वतीं मंत्रयंत्रयोः ।
अतो ह्यवश्यं कुर्वीत अभिषेकं सुसिद्धये ॥८३२॥
अभिषेकं विना देवि कुलधर्मं करोति यः ।
तस्य मंत्रादिकं सर्वमभिचाराय कल्प्यते ॥८३३॥

अभिषेकं विना देवि सिद्धविद्यां ददाति यः ।
स भवेत् पातकी सद्यो देवता न प्रसीदति ।
ब्रह्मत्वं चैव विष्णुत्वं शिवत्वं च कुलेश्वरि ॥८३४॥
सर्वसिद्धीश्वरत्वं च अभिषेकेण जायते ।
दिव्यो वीरश्च देवेशि कुलधर्मपरायणः ॥८३५॥
अभिषेकं चरेद् धीमान् मोक्षार्थी कुलवर्त्मसु ।
गुप्तालये समाहूय यथोक्तान् शक्तिसाधकान् ॥८३६॥
नवरात्रं सप्तरात्रं पंचरात्रं त्रिरात्रकम् ।
अथवा चैकरात्रं च अभिषेकं समाचरेत् ॥८३७॥
नदीतीरे पुण्यभूमौ विल्वमूले चतुष्पथे ।
देवतायतने वापि सिद्धक्षेत्रे वनान्तरे ॥८३८॥
पर्वतोपवने रम्ये मंडपे वा निजालये ।
शून्यागारे प्रांतरे वा पितृभूमौ च निर्जनः ॥८३९॥ इति ।

नदीतीराद्य स्थानमेकरात्रिपरम् । गुप्तालय इत्यादि त्रिरात्र्यादिनवरात्रान्तपरम् ।

अभिषेकं चरेत् देवि अधिवासपुरःसरम् ।
वृद्धिश्राद्धं ततः कृत्वा पूजयेत् शक्तिसाधकान् ॥८४०॥
संपाद्य सर्वसामग्री श्रीगुरुं पूजयेत् ततः ।
वस्त्रालंकारभूषाद्यैः प्रार्थनाभिश्च साधकः ॥८४१॥
ततः संकल्प्य विधिना गुरूणां वरणं चरेत् ।
वृतो गुरुः सुप्रसन्नः सर्वालंकारभूषितः ॥८४२॥
पंचघोषयुतः श्रीमान् स्वस्तिवाक्यपुरःसरः ।
यायाद् दीक्षामंडपस्य पाश्वि दिग्द्वारि साधकैः ॥८४३॥
प्रक्षाल्य पादावाचम्य प्राङ्मुखश्च शुभासने ।
उपविश्य च सामान्यं अर्घं तत्र निधापयेत् ॥८४४॥
अशक्तौ ताम्रपात्रस्थं जलं धेन्वाभिमंत्रयेत् ।
अष्टशो मूलमंत्रेण तत्रार्चेद् द्वारदेवताः ॥८४५॥

चतुस्तारीं पुनर्ङेऽन्तं धातारं वियुतं पुनः ।
दक्षे संपूज्य वामे च गंगां च यमुनामपि ॥८४६॥

ऊर्ध्वे द्वारश्रियं पूज्य तथाधो देहलीं यजेत् ।
तन्मध्ये वास्तुपुरुषं पूजयेच्च समाहितः ॥८४७॥

संकोचयन् स्ववामांगं प्रविशेद् यागमंडपम् ।
तत्रास्त्रमंत्रमुच्चार्य विघ्नान् निःसार्य यत्नतः ॥८४८॥

वेदीं प्रोक्ष्य समास्तीर्य स्वासनं परिशोध्य च ।
संपूज्यासनमंत्रेण उपविश्य समाहितः ॥८४९॥

अथाग्नेये गणेशानं यजेद् दुर्गा च निर्ऋतौ ।
वायौ सरस्वतीं पूज्य ईश क्षेत्रे समर्चयेत् ॥८५०॥

ततः पद्माद्यासनस्थः संविदं सेवयेत् सुधीः ।
सर्वाभरणसंपन्नो रक्तगंधाबरावृतः ।
स्वर्णस्रजा परिवृतः तांबूलपूरिताननः ॥८५१॥

कर्पूरागरुकाश्मीरमृगनाभिसुवासितः ।
स्मितास्यः स्वं शिवं ध्यायन् गणनाथं सरस्वतीम् ॥८५२॥

पूजयेद् विघ्ननाशाय तथा कार्यसमृद्धये ।
ततः स्वपुरतो भूमौ शालिपिष्टेन संलिखेत् ॥८५३॥

पद्ममष्टदलं तत्र मध्ये पूगफलं न्यसेत् ।
तस्मिन् गणेश्वरं देवं ध्यात्वा पश्चाच्च दिग्दले ॥८५४॥

नंदिनीं सुभगां भद्रां तथा च सर्वमंगलाम् ।
पूजयित्वा पुनस्तासां पूजा तद्वद् विदिग्दले ॥८५५॥

कर्णिकायां गणेशानं ततो ध्यायेत् समाहितः ।
अक्षसूत्रांकुशौ दन्तं लड्डुपात्रं गणेश्वरः ॥८५६॥

भुजैश्चतुर्भिः पाशं च द्विदंष्ट्रः सिंहवाहनः ।
ध्येयो विघ्नहरः सद्यो भक्तानामभयप्रदः ॥८५७॥

एवं ध्यात्वा समावाह्य यथालब्धोपचारकैः ।
संपूज्य प्रार्थयेद् देवं कर्मसांगत्वसिद्धये ।
ततो विसृज्य देवेशं वागीशीं पुस्तके यजेत् ॥८५८॥

हस्तमात्रे भद्रपीठे पूर्ववद् रचिते दले ।
पुस्तकं तत्र संस्थाप्य ध्यायेत् कुंडलिनीं पराम् ॥८५९॥

श्रीगुरुं च सहस्रारे ध्यात्वा नत्वा च मानसैः ।
संपूज्याज्ञां तदादाय परां शक्तिं स्वमूलतः ॥८६०॥

उत्थाप्य पुस्तके योज्य यथालब्धोपचारकैः ।
संपूज्य पुस्तके देवीं पश्चात् ध्यायेत् सुरेश्वरीम् ॥८६१॥

अथो मूलमयीं देवीं पंचाशद्वर्णविग्रहाम् ।
यथाभिमतरूपां तां देवदेवीं कृशोदरीम् ॥८६२॥

संविद्रूपां तडिद्भासां तारहारयुतां तथा ।
स्वस्वरूपस्वरूपेण शोभितां सुस्मिताननाम् ॥८६३॥

एवं ध्यात्वाथ संप्रार्थ्य पुस्तके पूजयेदिमाः ।
वाग्भवेशीं च तत् पश्चाद् देवीं वाग्वादिनीं यजेत् ॥८६४॥

वागीश्वरीं स्वस्ववीजयुक्तां लब्धोपचारकैः ।
पश्चादष्टदले पूज्याः तथैवाष्टसरस्वती ।
वर्गाष्टकेन संयुक्ता हंसा चित्रा ततः परम् ॥८६५॥

भरण्याख्या कदंबा च कमला चैव नित्यका ।
सुभगा च तथा गौरी अष्टमी परिकीर्तिताः ॥८६६॥

वर्गादिमांश्च वागीश्यशब्दान्ता ङेनमोन्विताः ।
सर्वाश्चंद्रोपमा देव्यः सर्वाः प्रेतकृतासनाः ॥८६७॥

सर्वाश्चतुर्भुजा ज्ञेयाः पाशांकुशधराश्च ताः ।
देव्या नुतिपराः सर्वाः सर्वाभरणभूषिताः ॥८६८॥

यथाभिमतरूपेण मध्ये देव्यत्र भैरवी ।
मातृकाकन्दसंस्थाना अनेकाद्भुतदर्शना ॥८६९॥

अधिवासार्थमाहृत्य नैवेद्यादिकमाचरेत् ।
गंधपुष्पादिभिः पूज्य शर्कराज्यघृतं दिशेत् ।
ततश्च प्रार्थयेद् देवीं समाहितमना गुरुः ॥८७०॥
आपश्चिममिदं जन्म यन्मया पुस्तकं शुभम् ।
अवाप्तं पुण्यनिचयै र्देव देव्याः प्रसादतः ॥८७१॥
चतुर्भुजे महापद्मसंस्थे कमलमालिनि ।
वर्णमालाश्रये नित्ये शूलमालासमायुते ॥८७२॥
मंत्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् ।
त्वया तत् क्षम्यतां देवि कृपां कुरु सरस्वति ॥८७३॥
इति संप्रार्थ्य वाग्देवीं स्वात्ममंत्रं ततः पठेत् ।
नौमि स्वात्मप्रकाशं प्रशमितविषमक्लेशराशिं महेशं
वंदे वाग्देवतां तां कलयति किल या मूलतो वाग्लतायाः
विघ्नग्रासप्रबंधादिव वृहदुदरं नौमि विघ्नाधिराजं
दत्तप्राग्दीक्षमेकं गुरुवरमपरं ज्ञानदं च प्रपद्ये ॥८७४॥
इति प्रार्थ्य स्वीयदक्षे सामान्यार्घं विधाय च ।
तज्जलेन तथाभ्युक्षेत् पूजोपकरणं सुधीः ॥८७५॥
तत्तन्मंत्रैश्च ते मन्त्राः कथ्यन्ते च क्रमादिह ।
प्रणवं च ततः फट् स्यात् सर्वद्रव्योपचारकम् ॥८७६॥
शुद्धिरस्तु ततः स्वाहा सर्वत्राभ्युक्षणे मनुः ।
एवमभ्युक्ष्य पुष्पं तु पुष्पमंत्रेण मंत्रयेत् ॥८७७॥
प्रणवं तत आधून्त्रयुग्मं जोवयुगं च सः ।
सर्वासां पुष्पजातीनामंते जीवं समुद्धरेत् ॥८७८॥
आगच्छतु प्रिया वह्नेः पुष्पमंत्रः प्रकीर्तितः ।
अनेन दशधामन्त्र्य धूपमामन्त्रयेत् ततः ॥८७९॥
कालाग्निरुद्ररूपाय जगद्धूपसुगन्धिने ।
सर्वगंधवहायान्ते हृदयं प्रणवादिकः ॥
अनेन दशधामंत्र्य दीपं चाप्यभिमंत्रयेत् ॥८८०॥

प्रणवं च जगज्ज्योतीरूपाय हृदयं ततः ।
अनेन दीपमामंत्र्य गंधमामंत्रयेत् ततः ॥८८१॥

प्रणवं गंधशब्दांते मादिनीति समुच्चरेत् ।
गंधं जीवापयत्वन्ते स्वाहाशब्दमुदीरयेत् ॥८८२॥

प्रणवं भुवनेशानींपुनः पावकगेहिनीम् ।
अनेन गंधं संशोध्य मूलेनाप्यभिमंत्रयेत् ।
दूतीं सौम्यां चतुर्बाहुं सुघोषां मंत्रघोषिणीम् ।
अक्षमालापुस्तकस्रग्वराभयकरां स्मरेत् ॥८८३॥

एवं ध्यात्वार्च्चयेद् घंटां शांभवव्याप्तिदूतिकाम् ।
प्रणवं कवचं शुद्धविद्यायै मंत्रशब्दतः ॥८८४॥

मात्रे दूत्यै नमोंतं स्यादनेनाभ्यर्चयेच्च ताम् ।
प्रणवं भुवनेशीं च लक्ष्मीमन्ते शिवेति च ॥८८५॥

दूत्यै नमस्तथा घंटामंत्रेणानेन वादयेत् ।
विकिरांस्तत्र विकिरेदस्त्रमंत्राभिमंत्रितान् ॥८८६॥

अस्त्रं समुच्चरन् मार्ज्य मार्जन्या कुशजातया ।
ईशानकोणे मतिमानेकीकृत्य निधापयेत् ॥८८७॥

ततस्त्रिहस्तविस्तारां गोमयालिप्तवेदिकाम् ।
मूलेन वीक्ष्य तस्यां वै चक्रराजं समुद्धरेत् ॥८८८॥

सिंदूररजसा शुद्धं सुस्पष्टं सुमनोहरम् ।
तत्रासनं समास्तीर्य संपूज्य प्राङ्मुखो गुरुः ॥८८९॥

पद्मासनेनोपविश्य स्वपद्धत्युक्तमार्गतः ।
पादुकास्मरणं चैव शिवहस्तविधिं पुनः ॥८९०॥

करशुद्ध्यादिकं भूतोत्सारणं प्राणसंयमम् ।
भूतशुद्धिं तथा प्राणप्रतिष्ठां मातृकां ततः ॥८९१॥

अन्तर्बहिश्च विन्यस्य लघुषोढां ततो न्यसेत् ।
महाषोढां ततः शक्तिन्यासं श्रीचक्रसंज्ञकम् ॥८९२॥

न्यासं ततश्च चरणन्यासं षट्शांभवाभिधम् ।
विधाय ध्यात्वा श्रीदेवीमन्तर्यागं समाचरेत् ॥८९३॥

मूलं जपित्वा श्रीदेव्यै समर्प्याज्ञां च प्रार्थयेत् ।
बहिः पूजां करोम्यद्य पूर्णं स्यात् कृपया तव ॥८९४॥

एवं प्रार्थ्य च स्वात्मानं संपूज्य कुसुमादिभिः ।
पुष्पांजलिं समादाय समस्तप्रकटेति च ॥८९५॥

समष्टियोगिनीमूलविद्यया चक्रराजके ।
पुष्पांजलिं क्षिपेत् तत्र मूलविद्यां जपेत् ततः ।
पुनस्तथैव श्रीचक्रे दद्यात् पुष्पांजलिं गुरुः ॥८९६॥

मध्यत्रिकोणं शालीभिरापूर्य तंदुलान् क्षिपेत् ।
सप्तविंशतिसंख्याके कुशे च ब्रह्मग्रंथिकम् ॥८९७॥

विधाय मूलमंत्रेण दूर्वागंधाक्षतैर्युतम् ।
तत् कूर्च्चं स्थापयेत् तत्र शालिपुंजे कुशास्तृते ॥८९८॥

पीठं तत्रार्चयेद् धीमान् पीठशक्त्यन्तकं तदा ।
योगपीठं ततोऽभ्यर्चेन्मनुनानेन साधकः ॥८९९॥

तत्त्वात्मकं च श्रीचक्रं चिंतयन् कुसुमादिभिः ।
मातृकांते च षट्त्रिंशत्तत्त्वमुच्चार्य श्रीपदम् ॥९००॥

महात्रिपुरशब्दान्ते सुंदर्या योगपीठतः ।
आसनाय नमोऽन्तः स्यान्मंत्रस्तत्पीठपूजने ॥९०१॥

पीठे पुष्पांजलिं दत्वा घटमानीय मंत्रवित् ।
स्वर्णादिनिर्मितं श्लक्ष्णमव्रणं शोभनाकृतिम् ॥९०२॥

षट्त्रिंशदंगुलोच्छ्रायं मुखमष्टांगुलैर्युतम् ।
नूत्नं रत्नयुतं खारी तोयग्राहि मनोहरम् ॥९०३॥

सुधूपवासितं कृत्वा त्रिगुणीकृततंतुना ।
वेष्टितं रक्तवर्णेन कामबीजेन प्रोक्ष्य तत् ॥९०४॥

वाग्भवेनैव संताड्य शक्त्या कुशाक्षतादिकम् ।
न्यस्य शक्त्यासने स्थाप्य प्रणवं मूलमुच्चरन् ।।६०५।।

प्रादक्षिण्येन सूर्यस्य कलाः कुंभे प्रपूज्य च ।
मूलेन मायया चैव कुलतोर्थं विनिःक्षिपेत् ।।६०६।।

वर्णौषधिक्वाथतोयं कर्पूरं गंधपुष्पकम् ।
दद्यात् पठन् विलोमेन मातृकां विंदुसंयुताम् ।।६०७।।

अंते मूलं स्मरन्नेवं कुंभमापूर्य यत्नतः ।
गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।।६०८।।

ह्लदप्रश्रवणाः पुण्याः सपातालमहोगताः ।
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु संनिधिम् ।
इति मंत्रं पठन् स्पृष्ट्वा लक्ष्म्या च पंचपल्लवम्।।६०६।।

कूर्चेन पूगं निक्षिप्य स्त्रीबीजेन स्थिरं स्मरेत् ।
हृदाणुना गंधवस्त्रे सिंदूरं ललनाणुना ।।६१०।।

कामवीजेन पुष्पं तु दूर्वां प्रणवमुच्चरन् ।
देवरूपं स्मरन् प्राज्ञस्तत्रार्चेत् स्वरजाः कलाः ।।६११।।

अमृताद्याश्च संपूज्य प्रादक्षिण्येन साधकः ।
तदग्रे स्थापयेत् शंख सामान्यार्घविधानतः ।।६१२।।

शंखं कलशजातीयजलेन परिपूरयेत् ।
तत्र चंदनकर्पूरकाश्मीररोचनास्तथा ।।६१३।।

जटामासीं सिल्हकं च निःक्षिपेदर्घ्यपात्रके ।
वन्हेर्दशकलास्तत्र सूर्यस्य द्वादश स्मृताः ।।६१४।।

षोडशेन्दोः कलास्तद्वत् समावाह्य विधानतः ।
तासां प्राणान् प्रतिष्ठाप्य पूजयेच्च विधानवित् ।।६१५।।

प्रणवस्य कलास्तद्वत् पंचाशत् पूर्ववर्त्मना ।
पंचभागेन ऋक्पंचयुतेन च यथाविधि ।।६१६।।

मूलविद्यां त्रिः सकृद्वा जपेत् शंखं च संस्पृशन् ।
श्रीदेवीं हृदये ध्यात्वा तज्जलं कुंभके क्षिपेत् ॥६१७॥

कल्पद्रुमधिया तत्र विल्वपत्राणि चाक्षिपेत् ।
तत् सजातीयमपरं पात्रं तंडुलपूरितम् ॥६१८॥

निधाय कुंभवदने नारिकेलसमन्वितम् ।
कल्पवृक्षफलाकारं ध्यायन्नेकाग्रमानसः ॥६१९॥

नीलरक्तक्षौमवस्त्रयुग्मेन परिवेष्टयेत् ।
एवं प्रधानकुंभं च संस्थाप्याशासु चाष्टसु ॥६२०॥

कुंभाष्टकं तथैवात्र स्थापयेत् क्रमशः सुधीः ।
पूर्वकुंभे ध्रुवं पूज्य दक्षिणे च धरां यजेत् ॥६२१॥

पश्चिमे वाक्पतिं तद्वदुत्तरे विष्णुमीश्वरम् ।
अमृतामग्निकोणे तु दुर्जयां निर्ऋतौ यजेत् ।
सिद्धार्थां वायुकोणे च मंगलामीशकोणके ॥६२२॥

कुंभेष्वेवं समभ्यर्च्य दिग्धवान् पूर्वतोऽर्चयेत् ।
स्वबीजसहितान् ङेन्तान् स्वशक्तिसहितानपि ॥६२३॥

स्वाधिपत्ययुतान् सास्त्रान् यजेत् कुंभे स्वदिग्गते ।
एवं संपूज्य च पुनः पूर्वाद्यष्टघटे यजेत् ॥६२४॥

गजानष्टौ यथान्यायं तेषां नामानि चोच्यते ।
ऐरावतः पुंडरीको वामनः कुमुदोऽञ्जनः ॥६२५॥

पुष्पदंतः सार्वभौमः सुप्रतीकश्च ते गजाः ।
इत्थं संपूज्य च गुरुः शंखाद् दक्षिणतः क्रमात् ॥६१६॥

श्रीपात्रादिक्रमेणैव पात्राणि स्थापयेत् ततः ।
गुरोः स्वर्णभवं तद्वत् तच्छक्त्यै राजतादिजम् ६२७॥

भोगपात्रं नारिकेलभवं कापालजं तथा ।
वलिपात्रं योगिनीनां पात्रं वीरादिकं तथा ॥६२८॥

एवं पात्राणि संस्थाप्य स्वपद्धत्युक्तमार्गतः ।
समष्टिविद्यया मूर्ति परिकल्प्य समाहितः ॥६२९॥

आवाहयेन्मध्यकुंभे आवाहिन्यादि दर्शयेत् ।
आवाहिनीं स्थापिनीं च सन्निधीं संनिरोधिनीम् ॥६३०॥

अवगुंठनिकां तद्वत् सकलीकरणीं तथा ।
परमीकरणीं कृत्वा प्राणस्थापनमाचरेत् ॥६३१॥

ततः सर्वोपचारैश्च समाराध्य विधानवित् ।
नैवेद्यान्ते तिथिनित्यां श्रीचक्रदेवतायुताम् ॥६३२॥

संपूज्य तर्पयेत् तद्वदमृतैः पात्रसंभवैः ।
तृप्तां परशिवां ध्यात्वा वलिदानं विधाय च ॥६३३॥

आपोशानं च संपाद्य राजपूजां विधाय च ।
तांबूलं विनिवेद्याथ कृत्वात्रारात्रिकं ततः ॥६३४॥

मूलविद्यामष्टपूर्वशतं जप्त्वा समाहितः ।
जपं देव्यै समर्प्याथ नत्वा स्तुत्वा ततो गुरुः ।
अग्निस्थापनकं कर्म कुर्यात् कुंभसमीपके ॥६३५॥

कुंडं वा स्थंडिलं वापि निर्माय चतुरस्रकम् ।
प्राङ्मुखः श्रुक्श्रुवौ तत्र संस्थाप्य चार्घ्यपात्रकम् ॥६३६॥

कुशान् पवित्रत्रितयं शुष्ककाष्ठं यथोदितम् ।
आज्यस्थालीमाज्यपूर्णां धूपदीपादिकं तु यत् ॥६३७॥

स्ववामे स्थाप्य तत् सर्वं गुर्वादिवंदनं चरेत् ।
प्राणायामं ततः कृत्वा षडंगानि विधाय च ॥६३८॥

देवीं ध्यात्वा स्वहृत्पद्मे मानसैः पूज्य संयतः ।
कुशस्थानि च पात्राणि अधोमुखगतानि च ।
कुशोदकेन चाभ्युक्ष्य स्ववामे जलभाजनम् ॥६३९॥

साधारं सजलं तत्र निधाय मूलमंत्रतः ।
अभिमंत्र्यामृतीकृत्य प्रोक्षिण्यां निःक्षिपेच्च तत् ॥६४०॥

तज्जलेन कुशैः कुंडं स्थंडिलं वा यथाविधि ।
प्रोक्ष्य मूलं समुच्चार्य दिननित्यां तथैव च ॥६४१॥
प्रागग्रं चोदगग्रं च कुर्याद् रेखाचतुष्टयम् ।
कुशमूलेन ताः प्रोक्ष्य सूर्यकान्तोद्भवं तथा ॥६४२॥
श्रोत्रियागारजं वापि शिलोद्भवमथापि वा ।
कांस्यपात्रे समानीय ज्वलनं धूमवर्जितम् ॥६४३॥

चतुस्तारी च क्रव्यादेभ्यो हुँ फट् मंत्रमुच्चरन् ।
क्रव्यादांशं च नैर्ऋत्यां त्यजेत् किंचित् ततः परम् ॥६४४॥
शेषं देवांशकं ज्ञात्वा निधायाग्रेऽभिमंत्र्य तम् ।
मूलेनामृतदृष्ट्या च संचित्यादाय पात्रकम् ॥६४५॥

जानुभ्यामवनीं गत्वा त्रिःपरिभ्राम्य कुंडकम् ।
शिवरेतो धिया मध्यकोष्ठेऽग्निं स्थापयेद् गुरुः ॥६४६॥

कुशांस्तदुपरि स्थाप्य तथा शुष्केन्धनानि च ।
मूलं च दिननित्यां च संस्मरन् मुखतो धमेत् ॥६४७॥
प्रज्वाल्य प्रणमेद् वन्हिं वह्निमंत्रेण मंत्रवित् ।
अग्निं प्रज्वलितं वंदे जातवेदं हुताशनम् ॥६४८॥
सुवर्णवर्णममलं समिद्धं विश्वतो मुखम् ।
प्रणम्य सप्तजिह्वाख्यां मुद्रां बध्वा पठेन्मनुम् ॥६४९॥
चतुस्तारी च सकलजगत्कारणशब्दतः ।
वन्हे गर्भाधानशब्दादादिकाश्च क्रिया वदेत ॥६५०॥

संपाद्यतामिति प्रोच्य मुद्रां संदर्शयेद् गुरुः ।
उत्तानीकृत्य पात्राणि प्रोक्षयेत् प्रोक्षणीजलैः ॥६५१॥
प्रोक्ष्य प्रणीतापात्रं च अस्त्रमुच्चार्य पूरयेत् ।
कुशोदकेनाक्षतांश्च पवित्रं तत्र निःक्षिपेत् ॥६५२॥
शक्तिबीजं ततोऽस्त्राय फडित्युक्त्वा ततो गुरुः ।
उत्तानहस्तयुगलांगुष्ठानामिकया च तत् ॥६५३॥

पवित्राग्रभूते संधृत्य जलबिन्दुं भुवि क्षिपेत् ।
कुशेषु स्थापयेत् तच्च स्ववामे कुंडसन्निधौ ॥६५४॥

प्रणीतामपि प्रक्षाल्य समापूर्य कुशोदकैः ।
तत्र किंचित् प्रणीतास्थं जलं निक्षिप्य तेन च ॥६५५॥

सर्वोपकरणं प्रोक्ष्य त्रिभागं तच्च कारयेत् ।
प्रोक्षिण्यां भागमेकं तु संपाताज्यस्य पात्रके ॥६५६॥

अपरं निजभागं च तत्रैव स्थापयेत् क्रमात् ।
संपाताज्यस्य पात्रं तु कुशोपरि निधापयेत् ॥६५७॥

प्रोक्षिण्या वन्हिमासिंचेन्मूलेन दिननित्यया ।
दर्भैरीशादिमारम्य तदन्तं च परिस्तरेत् ॥६५८॥

ब्रह्मासनं समास्तीर्य स्वदक्षे ब्रह्मचारिणम् ।
दीक्षितं तत्र मतिमानुपवेश्यातिभक्तितः ॥६५९॥

सोपकरणैश्च वृणुयात् ब्रह्मत्वेन तमर्चयेत् ।
त्वं मे ब्रह्मा भवेत्युक्त्वा कर्मण्यस्मिन् समाहितः ॥६६०॥

तदलाभे कुशवटुं षट्पंचाशन्मितं तथा ।
पूज्य वन्हि हेमवर्णं ध्यायेत् तत्र यथोदितम् ।
वराभयकरं देवं शक्तिस्वस्तिकभूषितम् ॥६६१॥

मूलदेवीस्वरूपं च त्रिनेत्रं भूषणान्वितम् ।
इति ध्यात्वावाहनादिपरमीकरणावधि ॥६६२॥

विधाय चाग्निं मतिमान् पूजयेन् नाममंत्रतः ।
पुष्पाञ्जलित्रयं दत्वा पुनस्त्रिस्तं प्रपूजयेत् ॥६६३॥

आसनं च तथार्घ्यं च तत आचमनीयकम् ।
मधुपर्कमाचमनीयं स्नानादिकमथो दिशेत् ॥६६४॥

नैवेद्यान्तं च संपाद्य पूर्वादिसप्तकोष्ठके ।
प्रादक्षिण्येन संपूज्या जिह्वाः सप्त यथाक्रमात् ॥६६५॥

हिरण्या कनका रक्ता कृष्णा च सुप्रभा तथा ।
अतिरक्ता बहुरूपा यथालब्धोपचारकैः ॥६६६॥

पूज्यास्त्रक्षालितायां च स्थाल्यामाज्यं निधाय च ।
मूलेन त्रिः समामंत्र्य अमृतीकृत्य मुद्रया ॥६६७॥

दक्षे पवित्रं संगृह्य कुशमुष्टिं च वामके ।
स्रुवमादाय दक्षेण घृतेन जुहुयाद् गुरुः ॥६६८॥

अग्नये चैव सोमाय अग्नीषोमात्मने ततः ।
स्विष्टकृते पुनर्हुत्वा वामे दक्षे ललाटके ॥६६९॥

मुखे च क्रमशो हुत्वा एकैकामाहुतिं ततः ।
स्रुवलग्नं हविःशेषं संपाताज्यस्य पात्रके ॥६७०॥

निक्षिप्य पश्चाज्जुहुयादग्नये वायवे पुनः ।
सूर्याय व्याहृतीस्तिस्रो त्र्यब्व्यादौ नियोज्य च ॥६७१॥

एकैकामाहुतिं तद्वत् सप्तजिह्वासु वै हुनेत् ।
वन्हौ यथोक्तं श्रीचक्रं विभाव्य पीठपूजनम् ॥६७२॥

कृत्वा देवीं समावाह्य परिवारसमन्विताम् ।
वन्हिदैवतयोरैक्यं भावयन् पंचविंशतिम् ॥६७३॥

चक्रैकीकरणार्थं च मूलेनाज्याहुतिं हुनेत् ।
नाडीसंधानसिद्धयर्थं हुत्वा चैकादशाहुतीः ॥६७४॥

नवावरणशक्तीनामेकैकामाहुतिं दिशेत् ।
ततः समष्टिमंत्रेण समस्तप्रकटादिना ॥६७५॥

वौषडंतेन जुहुयात् ततः पूर्णाहुतिं गुरुः ।
तत्र स्थाल्यां ताम्रमय्यां संस्कृताग्नौ चरुं पचेत् ॥६७६॥

गुरुश्चरुं त्रिभागं च कृत्वा तत्र कुशास्तरे ।
अस्त्राभिमंत्रितं वेद्यां यथान्यायं निधाय च ॥६७७॥

एकं भागं तथा देव्यै निवेद्य च तथापरम् ।
भागं घृतान्नपयसा तिलतंडुलसंयुतम् ॥६७८॥

रक्तपुष्पयुतं कृत्वा तदग्नौ मूलविद्यया ।
जुहुयात् पंचविंशत्या हुतो राज्याहुतीस्तथा ॥९७९॥

तृतीयभागं शिष्येण स्वयं भुक्त्वा गुरुस्तदा ।
शिष्यं मूलषडंगेन सकलीकृत्य संयतः ॥९८०॥

सुप्यात् तथासने शुद्धे स्वापयेत् शिष्यमन्तिके ।
अधिवासनमेतद्धि यथाविधमुदीरितम् ॥९८१॥

इति श्रीमदागमरहस्ये सत्सग्रहे उत्तरार्वे दीक्षाभिषेके अधिवासान्तकथनं नाम पचमः पटलः । आदितस्त्रयस्त्रिशत् ॥

## अथ षष्ठः पटलः ।

प्रातरुत्थाय च गुरुः विधायावश्यकं तथा ।
नित्यकृत्यं समाप्याथ शिष्यमाहूय रात्रिजम् ॥९८२॥

पृष्ट्वा स्वप्नं तद्विचार्य शांतियोग्यं च तच्चरेत् ।
घृतेन सिंहमंत्रेण जुहुयात् पंचविंशतिम् ॥९८३॥

तेन सुस्वप्नतां याति दुःस्वप्नोऽपि न संशयः ।
सद्योधिवासपक्षे तु गुरुशिष्यौ पुनस्तथा ॥९८४॥

चरुशेषं न भुंजीतामाजिघ्रेतां यथाविधि ।
ततो घृतादिना देव्यै प्रदद्यात् षोडशाहुतीः ॥९८५॥

एकैकामाहुतिं दद्यादंगदेवान् यथाविधि ।
ततः षोडशनित्यानां गुरुपङ्क्तित्रयस्य च ॥९८६॥

षडंगयुवतीनां च नवावरणदेवताः ।
अन्यासामपि देवानामेकैकाहुतिमादिशेत् ॥९८७॥

प्रणवादिचतुर्थ्यंतनाम्ना स्वाहांतकेन च ।
एवं संपाद्य वै होमं ततः कुंडस्य दक्षिणे ॥९८८॥

निवेश्य शिष्यं मूलेन प्रणवासनमंडले ।
कुशैर्नाडीं विनिर्माय सार्धहस्तत्रयां ततः ॥९८९॥

मूलाभिमंत्रितां कृत्वा तन्मूलं च शिशोः करे ।
दत्वा संवेष्टितां वामभागेन च तदग्रकम् ॥६६०॥

स्वजानुमध्ये संवेश्य तथावष्टभ्य जंघिकाम् ।
निर्गच्छंतीं शिष्यदेहात् मध्यनाडी सुषुम्णिकाम् ॥६६१॥

विलीनां भावयेदात्मनाड्यामेवं ततो गुरुः ।
मूलमुच्चार्यामुकस्य मध्यनाडी ततः परम् ॥६६२॥

मन्मध्यनाड्यां लीनांते भवत्वनलवल्लभा ।
इत्याहुतित्रयं दत्वा पुनर्मूलं समुच्चरेत् ॥६६३॥

अमुकस्य मध्यनाडी मन्मध्यनाड्यां ततः परम् ।
लीना तथा च संपन्ना भवत्वनलगेहिनी ॥६६४॥

प्रवेशनिर्गमस्य गग्रहणाकर्षहेतवे ।
नाडीसंधानमित्युक्तं संपातमाहुतेश्च यत् ॥६६५॥

देयं तत् शिष्यशिरसि मंत्रमेनं तथोच्चरन् ।
वाग्भवं प्रथमं कूटं संपातं च करोमितः ॥६६६॥

स्वाहाशब्दं प्रयुंजीत कामान्ते स्याद् द्वितीयकम् ।
कूटमुच्चार्य च पुनः पूर्ववत् शक्तिबीजकम् ॥६६७॥

कूटं तृतीयमाभाष्य पूर्ववत् पुनरुच्चरेत् ।
बालाप्रत्येकबीजेन संपातत्रितयं पुनः ॥६६८॥

मूलेनान्ते च संपातमन्यदुक्तवदाचरेत् ।
एवं च शिष्यशिरसि संपातामृतमाक्षिपेत् ॥६६९॥

ततो मूलदशांशेन हुनेदंगेन वै पुनः ।
ततः शिष्यं दिव्यदृष्ट्या विलोक्य योगमार्गतः ॥१०००॥

तदीयं हृदयं विश्य तच्चैतन्यं च स्वात्मनि ।
संयोज्य शिष्यशिरसि श्रीचक्रं च विभावयेत् ॥१००१॥

षडध्वरूपं शिष्यस्य षडध्वानं विशोधयेत् ।
निवृत्त्यादिकलाः पंचयुक्तं शिष्यस्य पादयोः ॥१००२॥

कलाध्वानं विचिंत्याथ तथैव लिंगदेशके ।
आत्मविद्याशिवैस्तद्वदेतैरुत्क्रमयोगतः ॥१००३॥

समस्तैः सप्तसंख्याकैस्तत्त्वाध्वानं विभाव्य च ।
पुनस्तथा नाभिदेशे भुवनानि चतुर्दश ॥१००४॥

तन्मयं भुवनाध्वानं परिकल्प्य तथा हृदि ।
अकारादिक्षकारांतमातृकावर्णरूपकम् ॥१००५॥

वर्णाध्वानं विचिंत्याथ पुनस्तस्य ललाटके ।
वर्णव्यूहमयं ध्यायेत् पदाध्वानं तथा पुनः ॥१००६॥

मंत्रराशिमयं ध्यायेत् मंत्राध्वानं च मूर्धनि ।
इत्यध्वषट्कं शिष्यस्य देहे ध्यात्वा ततो गुरुः ॥१००७॥

स्पृशन् शिष्यं च कूर्चेन तिलैः साज्यैरथाहुतीः ।
अष्टौ च जुहुयान्मंत्री मंत्रमेनं तथोच्चरन् ।
प्रणवं अमुकस्येति कलाध्वानं ततः परम् ॥१००८॥

शोधयामि तथा स्वाहा तत एवं समाचरेत् ।
तत्त्वाध्वनि कलाध्वानं लीनं संभाव्य पूर्ववत् ॥१००९॥

प्रणवं अमुकस्येति तत्त्वाध्वानं ततः परम् ।
शोधयामि तथा स्वाहा इत्यष्टावाहुतीर्हुनेत् ।
ततो विभावयेल्लीनमेनं च भुवनाध्वनि ॥१०१०॥

प्रणवं पूर्ववन्नामषष्ठ्यंतं च समुच्चरन् ।
भुवनाध्वानं शोधयामि स्वाहांते पुनराहुतीः ॥१०११॥

अष्टौ हुत्वा तमध्वानं वर्णाध्वनि विलापयन् ।
पूर्ववत् शब्दमुच्चार्य वर्णाध्वानं समुच्चरेत् ॥१०१२॥

स्वाहांतं शोधयामीति हुनेदष्टौ तथाहुतीः ।
लीनं विभावयेत् तद्वद् वर्णाध्वानं पदाध्वनि ॥१०१३॥

पूर्ववज्जुहुयादष्टावाहुतीर्मंत्रमुच्चरन् ।
पूर्ववत् शब्दमुच्चार्य पदाध्वानं ततः परम् ॥१०१४॥

स्वाहांतं शोधयामीति ततो लीनममुं स्मरन् ।
मंत्राध्वनि तथैवाष्टावाहुतीर्जुहुयाद् गुरुः ॥१०१५॥

प्रणवं पूर्ववत् नाम मंत्राध्वानं ततः परम् ।
शोधयामि तथा स्वाहा मंत्रमेनं समुच्चरन् ॥१०१६॥

विलीनं भावयेन् मंत्राध्वानं च परमात्मनि ।
अध्वानमेवं संशोध्य पुनः सृष्टिक्रमेण च ॥१०१७॥

प्रत्येकमाहुतीरष्टौ दद्यादेवंक्रमेण च ।
तारांते अमुकस्येति सर्वत्र क्रमयोगतः ॥१०१८॥

षड्मंत्राः संभवन्त्येते स्वाहान्ताः शोधयामितः ।
किंचिद् विशेषो मध्ये स्यात् प्रत्येकं प्रथमे तथा ॥१०१९॥

परमात्मनि लीनं च मंत्राध्वानं द्वितीयके ।
मंत्राध्वनि तथा लीनं पदाध्वानं तृतीयके ॥१०२०॥

पदाध्वनि तथा लीनं वर्णाध्वानं चतुर्थके ।
वर्णाध्वनि च भुवनाध्वानं लीनं च पंचमे ॥१०२१॥

भुवनाध्वनि लीनं च तत्त्वाध्वानं च षष्ठके ।
तत्त्वाध्वनि तथा लीनं कलाध्वानमिति स्मृताः ॥१०२२॥

षण्मंत्राश्च ततः स्थाने तत्त्वानि योजयेद् गुरुः ।
स्वात्मस्थं शिष्यचैतन्यं ब्रह्मरंध्रेण तत् तनौ ॥१०२३॥

सुषुम्णावर्त्मनावेश्य शिष्यस्य हृदये तदा ।
स्थापयेद् योगमार्गेण दिव्यदृष्ट्या विलोकयन् ॥१०२४॥

शूद्रसंकरजातीनां संस्कारेणाध्वशोधनम् ।
किंतु पाशनिवृत्त्यर्थं तस्मै दद्यात् पदोदकम् ॥१०२५॥

तेनैव मुक्तजन्मानस्ते भवंति न संशयः ।
एवं शोध्य षडध्वानं जुहुयादाहुतीः पुनः ॥१०२६॥

प्रथमां व्याहृतिं प्रोक्ता ङेन्तोऽग्निः पृथिवी तथा ।
महांस्तद्वत् तथा स्वाहा मंत्रोऽयं प्रथमाहुतौ ॥१०२७॥

द्वितीया व्याहृतिस्तद्वत् ङेऽन्तो वायुस्तथा पुनः ।
अंतरिक्षं मरुत् तद्वत् स्वाहान्तः स्याद्, द्वितीयकः ॥१०२८॥

तृतीया व्याहृतिस्तद्वत् ङेऽन्तः सूर्यो दिवं मरुत् ।
स्वाहान्तः स्यात् तृतीयेयं पुनस्तद्वत् चतुर्थकः ॥१०२९॥

व्याहृतित्रयमुच्चार्य ङेऽन्तश्चैव प्रजापतिः ।
त्रिलोकाश्च मरुत् तद्वत् स्वाहांतः स्याच्चतुर्थकः ॥१०३०॥

एवं प्रत्येकस्वाहांते ङेनमोऽन्तं तथाधिपम् ।
उच्चार्य जुहुयादेवं चतुस्तारादिकं तथा ॥१०३१॥

कर्मबंधविमुक्त्यर्थं घृतेनैकाहुतिं चरेत् ।
ब्रह्मार्पणेन मनुना ततश्च पावकं नमेत् ॥१०३२॥

ॐ सहस्रार्चिर्महातेजा नमस्ते सर्वरूपधृक् ।
सर्वाशिने सर्वगाय पावकाय नमोऽस्तु ते ॥१०३३॥

एवमग्निं प्रणम्याथ मंत्रेणानेन प्रार्थयेत् ।
ॐ त्वं रौद्रघोरकर्मा च घोरहा त्वं नमामि ते ॥१०३४॥

विष्णुस्त्वं लोकपालोऽसि शांतिमत्र प्रयच्छ मे ।
इत्येवमग्निं संप्रार्थ्य घृतेनापूर्य वै स्रुचम् ॥१०३४॥

पुष्पं दत्वा तदुपरि न्यस्य चाधोमुखं स्रुवम् ।
कराभ्यां स्रुक्स्रुवौ धृत्वा संपुटाभ्यां च शंखवत् ॥१०३६॥

निधाय च तयोर्मूलं स्वनाभौ वामपादकम् ।
कृत्वाग्रे वौषडंतेन मूलेन च परामुखे ॥१०३७॥

परमामृतबुद्ध्या तु जुहुयाद् गुरुसत्तमः ।
एवं पूर्णाहुतिं दत्वा देवीमग्नौ पुनर्यजेत् ॥१०३८॥

सांगां सावरणां चैव देवीं कुंभे विसर्जयेत् ।
भो भो वन्हे च मन्त्रेण स्वात्मन्युद्वासयेत् वसुम् ॥१०३९॥

विभूतिधारणं कृत्वा वौषट्मंत्रं समुच्चरन् ।
वस्त्रेण शिष्यनेत्रे च समाच्छाद्य च तत्करौ ॥१०४०॥

गृहीत्वापूर्य पुष्पैस्तदंजलिं मूलमुच्चरन् ।
कुंभस्थदेवतायै तदंजलिं दापयेद् गुरुः ॥१०४१॥

नेत्रबन्धं विसृज्याथ संवेश्य कुशसंस्तरे ।
पाठयेन् मंत्रमज्ञानतिमिरांधस्यसंज्ञकम् ॥१०४२॥

पंचोपचारैः श्रीदेवीं गुरुः संपूज्य वै पुनः ।
भूतशुद्धिविधानेन शिष्यदें वशोध्य च ॥१०४३॥

तस्य प्राणान् प्रतिष्ठाप्य मातृकां च तदंगके ।
न्यस्त्वा च कलशे देवीं सकलीकृत्य मंत्रवित् ॥१०४४॥

साधकैः शक्तिभिश्चैव पंचवाद्यपुरःसरम् ।
चालयेत् तद्घटं मंत्री मंत्रमेनं समुच्चरन् ॥१०४५॥

उत्तिष्ठ ब्रह्मन् कलश साधकाभीष्टसिद्धिद ।
कुलतीर्थांबुसंपूर्ण पूरयास्य मनोरथान् ॥१०४६॥

एवं कुम्भं समुद्धृत्य मूलमंत्रं समुच्चरन् ।
तन्मुखस्थपत्रपुष्पान् शिष्यमूर्ध्नि निधाय च ॥१०४७॥

विलोममातृकां मूलमुत्तराभिमुखो जपन् ।
स्थितं शिष्यं पूर्वमुखमभिसिंचेद् यथाविधि ॥१०४८॥

अथाभिषेकमंत्राणां दक्षिणामूर्तिरीरितः ।
ऋषिश्छन्दस्तथानुष्टुप् श्रीशक्तिर्देवता स्मृता ।
बीजं स्याद् वाग्भवं कूटं शक्तिकूटं च शक्तिकम् ॥१०४९॥

कामकूटं कीलकं च नियोगः सर्वसिद्धये ।
ॐ राजराजेश्वरीशक्तिर्भैरवी रुद्रभैरवी ॥१०५०॥

श्मशानभैरवी देवी त्रिपुरानंदभैरवी ।
त्रिकूटा त्रिपुरादेवी तथा त्रिपुरसुंदरी ॥१०५१॥

त्रिपुरेशी महादेवी तथा त्रिपुरमालिनी ।
त्रिपुरानंदिनी देवी तथा त्रिपुरभैरवी ॥१०५२॥

एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ।
छिन्नमस्ता महादेवी तथा चैकजटेश्वरी ॥१०५३॥

तारा च जयदुर्गा च शूलिनी भुवनेश्वरी ।
त्वरिताख्या महादेवी तथा बाला त्रिकंटकी ॥१०५४॥

नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा ।
एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ॥१०५५॥

अश्वारूढा महेशानी नित्या महिषमर्दिनी ।
दुर्गा च वनदुर्गा च श्रीदुर्गा भगमालिनी ॥१०५६॥

तथा भगंदरी देवी भगक्लिन्ना भगेश्वरी ।
सर्वचक्रेश्वरी भद्रा तथा नीलसरस्वती ॥१०५७॥

सर्वसिद्धिकरी देवी सिद्धगंधर्वसेविता ।
उग्रतारा महादेवी तथा दक्षिणकालिका ॥१०५८॥

एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ।
क्षेमंकरी महामाया अनिरुद्धसरस्वती ॥१०५९॥

मातंगी चान्नपूर्णा च भद्रकाली महेश्वरी ।
एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ॥१०६०॥

उग्रचंडा प्रचंडा च चंडोग्रा चंडनायिका ।
चंडा चंडवती चैव चामुंडा चंडिका तथा ॥१०६१॥

एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ॥१०६२॥

उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा करालिका ।
भीमसेना विशालाक्षी मंगला विजया जया ॥१०६३॥

एतास्त्वामभिषिंचंतु मंत्रपूतेन वारिणा ।
मंगला नंदिनी भद्रा लक्ष्मीः कीर्ति यशस्विनी ॥१०६४॥

पुष्टिर्मेधा शिवा साध्वी यशःशोभा जया धृतिः ।
श्रीनंदा च सुनंदा च नंदिनी नंदपूजिता ॥१०६५॥

एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
विजया मंगला भद्रा धृतिः शांतिः शिवा क्षमा ॥१०६६॥

सिद्धिस्तुष्टिरुमा बुद्धिः श्रीसिद्धिश्च रतिस्तथा ।
एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ॥१०६७॥

विद्या कांति र्यशोलक्ष्मीरीश्वरी विश्वरूपिणी ।
शाक्री जयावती स्वाहा जयंती चापराजिता ॥१०६८॥

एतास्त्वामभिषिचंतु मंत्रपूतेत वारिणा ।
अजिता मानवी सीता दितिश्चादितिरेव च ॥१०६९॥

मायावती महामाया मोहिनी क्षोभिणी तथा ।
वैवस्वती च कौमारी तथा माहेश्वरी परा ॥१०७१॥

वैष्णवी च महालक्ष्मीः कार्तिकी कौशिकी तथा ।
शिवदूती च चामुंडा मुंडमालाविभूषणा ॥१०७१॥

एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
अरुणा विमला गौरी शरण्यामतिरेव च ॥१०७२॥

दुर्गा क्रियारुंधती च घंटाकर्णा कपालिनी ।
रौद्री कृष्णा च कौमारी त्रिनेत्रा चापराजिता ॥१०७३॥

स्वरूपा बहुरूपा च रिपुघ्नी सुरपूजिता ।
चर्चिका चापरा सर्वा अंबिका सुरनायिका ॥१०७४॥

एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
वाग्वादिनी च कामाख्या कमला बहुरूपिणी ।
प्रत्यंगिरा भवानी च बाला धूमावती तथा ॥१०७५॥

षट्कूटा भैरवी बाला तथा त्रिपुरभैरवी ।
चैतन्यभैरवी रुद्रभैरवी रुरुभैरवी ॥१७०६॥

भुवनेश्वरी भैरवी च तथान्नपूर्णाभैरवी ।
विमला वरदा वाणी विंध्या झर्झरवासिनी ॥१०७७॥

एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
इन्द्रो वन्हिर्यमश्चैव निऋति र्वरुणस्तथा ॥१०७८॥
पवनो धनदेशानौ ब्रह्मानंतो दिगीश्वराः ।
एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ॥१०७९॥
संवत्सरश्चायनं च मासपक्षदिनानि च ।
तिथयश्चाभिषिचंतु मंत्रपूतेन वारिणा ॥१०८०॥
रविः सोमः कुजः सौम्यो गुरुशुक्रशनैश्चराः ।
राहुः केतुश्च सततमभिषिचंतु ते ग्रहाः ॥१०८१॥
नक्षत्रं करणं योगः अमृतं सिद्धिरेव च ।
दुग्धं पापं तथा भद्रा योगवारक्षणास्तथा ॥१०८२॥
वारवेला कालवेला दंडा वृद्धोदयास्तथा ।
अभिषिचंतु सततं मंत्रपूतेन वारिणा ॥१०८३॥
असितांगो रुरुश्चंडः क्रोध उन्मत्तसंज्ञकाः ।
कपाली भीषणश्चैव संहारोऽष्टौ च भैरवाः ॥१०८४॥
अभिषिचंतु सततं मंत्रपूतेन वारिणा ।
डाकिनीपुत्रकाश्चैव राकिनीपुत्रकास्तथा ॥१०८५॥
शाकिनीपुत्रकाश्चान्ये लाकिनीपुत्रकाः परे ।
काकिनीपुत्रकाः ये च हाकिनीपुत्रकास्तथा ॥१०८६॥
ततश्च याकिनीपुत्राः देवीपुत्रास्ततः परम् ।
मातॄणां च तथा पुत्रा ऊर्ध्वमुख्याः सुताश्च ये ॥१०८७॥
अधोमुख्याः सुताश्चान्ये कालमुख्याः सुताः परे ।
अभिषिचंतु सततं मंत्रपूतेन वारिणा ॥१०८८॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
देव्याः पंचमहाप्रेता अभिषिचंतु सर्वदा ॥१०८९॥
पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश ।
आत्मनश्च गुणाश्चैव स्थूलं सूक्ष्मं ततः परम् ॥१०९०॥

एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
वेदादिबीजं श्रीबीजं बीजं मकरकेतनम् ॥१०९१॥
शक्तिबीजं रमाबीजं बीजं चैव सुधाकरम् ।
चिंतारत्नं महाबीजं नारसिंहं च शांकरम् ॥१०९२॥
मार्तंडं भैरवं दौर्गं बीजं श्रीपुरुषोत्तमम् ।
गाणपत्यं वराहं च कालीबीजं भयापहम् ॥१०९३॥
एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
गंगा गोदावरी रेवा नर्मदा च सरस्वती ॥१०९४॥
आत्रेयी भारती चैव सरयू गंडकी तथा ।
करतोया चंद्रभागा श्वेतगंगा च कौशिकी ॥१०९५॥
भोगवती च पाताले स्वर्गे मंदाकिनी तथा ।
एतास्त्वामभिषिचंतु मंत्रपूतेन वारिणा ॥१०९६॥
भैरवो भीमरूपश्च शोणो घर्घर एव च ।
सिंधुश्चैव नदाश्चैव तथा पातालसंभवाः ॥१०९७॥
एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
यानि कानि च तीर्थानि पुण्यान्यायतनानि च ॥१०९८॥
एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ।
जंबूद्वीपादयो द्वीपाः सागराः लवणादयः ॥१०९९॥
अनंताद्यास्तथा नागाः सर्पाः ये तक्षकादयः ।
एते त्वामभिषिचंतु मंत्रपूतेन वारिणा ॥११००॥
रतिश्च वल्लभा वन्हे वषट्कूर्चमतःपरम् ।
वौषट्कारं च फट्कारमभिषिचंतु वारिणा ॥११०१॥
नश्यंतु प्रेतकूष्मांडा राक्षसा दानवाश्च ये ।
पिशाचाः गुह्यका भूता अभिषेकेन ताडिताः ॥११०२॥
अलक्षका लक्षकाश्च पापानि सुमहांति च ।
नश्यंतु चाभिषेकेन तारावीजेन ताडिताः ।
रोगाः शोकश्च दारिद्र्यं दौर्बल्यं चित्तविक्रियाः ॥११०३॥

नश्यंतु चाभिषेकेन वाग्बीजेनैव ताडिताः ।
लोकानुरागत्यागाश्च दौर्भाग्यमपि दुर्यशः ।
नश्यंतु चाभिषेकेन मन्मथेनैव ताडिताः ॥११०४॥

तेजोह्रासो बुद्धिह्रासो शक्तिह्रासस्तथैव च ।
नश्यंतु चाभिषेकेन कालीबीजेन ताडिताः ॥११०५॥

नश्यंतु विपदः सर्वाः संपदः संतु सुस्थिराः ।
अभिषेचनमात्रेण पूर्णाः संतु मनोरथाः ॥११०६॥

शिष्यं दंतमितै मंत्रैरभिषिच्य यथाविधि ।
षडंगमंत्रैः सकलीकुर्यात् तं गुरुसत्तमः ॥११०७॥

तत उत्थाप्य तं धौते वाससी परिधाप्य च ।
कृतांजलि तथा मौनमाचमय्य स्वसन्निधौ ॥११०८॥

स्थापयित्वा विनीतं च बोधयेदेवमेव हि ।
एवं भावय स्वात्मानं गतमायीयकंचुकम् ॥११०९॥

प्रकाशरूपं परमं शिवाकारमकल्मषम् ।
ततो गुरुस्तमुत्थाप्य श्रीचक्रे सूपवेश्य तम् ॥१११०॥

प्रागुद्घृते च संक्रान्तां तस्मिन् वै स्वेष्टदेवताम् ।
पंचोपचारैः संपूज्य सावधानेन चेतसा ॥११११॥

शिष्यदैवतयोरैक्यं चिंतयन् करुणानिधिः ।
गुरुः श्रीपात्रतत्त्वेन शिष्यस्य तत्त्वशोधनम् ॥१११२॥

कारयित्वा तस्य पाशच्छेदं कुर्यात् समाहितः ।
शिष्यदेहे तथा मूलाधारादिध्रुवमंडलम् ॥१११३॥

यावत् तावत् षोडशार्णबीजानि षोडशस्थले ।
संचिंत्य षोडशीं दद्यात् सृष्टिमार्गेण देशिकः ॥१११४॥

पंचदश्युपदेशे तु तस्य पंचदशस्थले ।
न्यसेत् पंचदशार्णानि षोडशाब्जे तु वै पुनः ॥१११५॥

बिंदुयुक्तं वामनेत्रस्वरं कामकलाभिधम् ।
विचिंत्य दद्यात् शिष्याय श्रीमत्पंचदशाक्षरीम् ॥१११६॥

षोडशाक्षरसंलीनाः सत्त्वादिगुणरूपिणः ।
गुणातीतस्वरूपाश्च जाग्रदादिचतुष्कजाः ॥१११७॥

कलाः षोडश संचिंत्य दिव्यदृष्ट्या विलोकयन् ।
धनपुत्राबद्धमूले नानापातकपत्रके ॥१११८॥

अभिलाषाप्रसूनाढ्ये पुण्यपापफलान्विते ।
दृष्टादृष्टस्थूलशाखाद्वये संसारवृक्षके ॥१११९॥

निषण्णं मोहमात्सर्यकामक्रोधमदात्मकैः ।
कल्यहंकारलोभादिच्छदैर्युक्तं तु पक्षिणम् ॥११२०॥

मनोरूपं च संकल्पविकल्पाभ्यां क्रमेण च ।
पक्षाभ्यां शोभितं तद्वत् चंचलाभ्यां विशेषतः ॥११२१॥

तृष्णाचंचुपुटं कृत्याकृत्यरूपपदद्वयम् ।
एवं शिष्यमनोरूपपक्षिणं चिंत्य वै गुरुः ॥११२२॥

ज्ञानोपदेशपाशेन बद्ध्वा ज्ञात्वा सुनिश्चलम् ।
संवीक्ष्य करुणादृष्ट्या छिन्नपाशं च पक्षिणम् ॥११२३॥

उन्मनीभावमापन्नं भवपाशविवर्जितम् ।
एवं शिष्यं विचिंत्याथ सुपुष्पेण फलेन वा ॥११२४॥

ब्रह्मरंध्रं स्पृशन् तस्य दक्षहस्तेन वै गुरुः ।
स्वस्वरूपं च यद्वस्तु तच्छिष्ये संप्रयोज्य च ॥११२५॥

ब्रह्मैवायमित्यवेहि संबोध्यैवं ततो गुरुः ।
सहस्रारस्थितं तत्त्वं गुरुरूपं प्रबोध्य च ॥११२६॥

तत्राजपायाः संकल्पं षट्चक्रस्य निरूपणम् ।
यथातथं निरूप्याथ स्मृत्वा देवीं च पादुकाम् ॥११२७॥

शिष्यमस्तकमाच्छाद्य गुरुश्च नववाससा ।
तस्य दक्षिणकर्णे च प्रथमं पादुकां दिशेत् ॥११२८॥

गणेशादीन् ततो दत्वा ततो बालां समर्पयेत् ।
पंचपंचिकविद्यां च पुनश्चक्रेश्वरीं दिशेत् ॥११२९॥

ततः पंचदशीं चैव नित्यामंत्राँस्ततःपरम् ।
चतुराम्नायविद्याश्च ततश्चरणरूपिणीम् ॥११३०॥

पराप्रासादमंत्राश्च ततः श्रीषोडशाक्षरीम् ।
दत्वा महापादुकां च महावाक्यादिसंयुताम् ॥११३१॥

यथान्यायं यथाम्नायं श्रीविद्यायामयं क्रमः ।
स्यात् कुलद्वयदीक्षायां षडाम्नायविधिक्रमः ॥११३२॥

दीक्षां दत्वा स्रुक्स्रुवौ च ज्ञानखड्गं च पुस्तकम् ।
छत्रं च पादुकां दत्वा पुनश्चोपदिशेदिदम् ॥११३३॥

शैवेन विधिना स्नानं संध्या तर्पणपूजने ।
विधिना प्रत्यहं कार्यमाशौचेऽपि न हापय ॥११३४॥

सूतके मृतके वापि नित्यकर्म न हापय ।
यदि त्यजसि वै मोहाल्लोभाद् वा स्मृतिदर्शनात् ॥११३५॥

शिवस्याध्वशतं जप्त्वा ततः शुद्धो भविष्यसि ।

तथा च स्वायभुवे—

आदौ ब्राह्मीं ततः शैवीं संध्यां कुर्यादतंद्रितः ।
नित्यं संध्यामुपासीत लोपे चोपवसेद् दिनम् ॥११३६॥

निरुजः सरुजश्चापि सद्योजातं शतं जपेत् ।
एवं शिष्यं श्रावयित्वानंदनाथान्तकं शुभम् ॥११३७॥

तन्नाथोदयनाम्ना वा तन्नामाद्यक्षरादिकम् ।
यद्वा तत्स्पृष्टस्वांगोत्थमातृकाक्षरसंभवम् ॥११३८॥

नाम कुर्याद् यथाम्नायं तत्र शिष्याय बोधयेत् ।
अमुकानंदनाथोऽसि शिष्यो वाढं तदा ब्रुवन् ।
गुरोराज्ञां पुरस्कृत्य तत्रैव गुरुसन्निधौ ॥११३९॥

प्राणायामं विधायाथ ऋष्यादिन्यासपूर्वकम् ।
षडंगं चैव विन्यस्य ध्यात्वा देवीं च मानसैः ॥११४०॥
उपचारैः प्रपूज्याथ सावधानेन चेतसा ।
श्रीमूलविद्यां च ततो जपेदष्टोत्तरं शतम् ॥११४१॥
गुरुदैवतमंत्राणामैक्यं संभावयन् धिया ।
देवात्मकं गुरुं ध्यायन् दण्डवत् प्रणिपत्य च ॥११४२॥
तत् पादपद्मं शिरसि निधायैवं मुहुर्वदेत् ।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृपया तव शंकर ॥११४३॥
त्राहि नाथ कुलाचारपवित्रत्राणकारक ।
त्वत्पादांबुरुहच्छायां मूर्ध्नि देहि यशोधनम् ॥११४४॥
उत्त्थापयेद् गुरुस्तं च वदन्नेवं प्रहर्षितः ।
उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ॥११४५॥
कीर्तिः श्रीकांतिमेधायु र्बलारोग्यं सदास्तु ते ।
समुत्त्थाप्य च मूर्धानं जिघ्रन् तं परिरभ्य च ॥११४६॥
यथाधिकारं समयाचारांश्च परिबोधयेत् ।
मंत्रंमुद्रामात्मनाम शिष्यादन्यत्र नो वद ॥११४७॥
मत्तेभं सहकारं च अशोकं पुष्पितद्रुमम् ।
श्मशानं द्रव्यसौगंध्यमेकवृक्षं च कोकिलम् ॥११४८॥
सुवासिनीकुमारीणां समूहं मदिराघटम् ।
आममांसं कौलशास्त्रपुस्तकं दर्शने नमः ॥११४९॥
पशुहस्तगतं नैव कार्यं च कुलपुस्तकम् ।
श्रद्धाभक्तिकराभ्यां तु कौलिको भवसागरम् ॥११५०॥
तरत्येकेन हीनोऽपि गभीरे मज्जति ध्रुवम् ।
कुलशास्त्रप्रमाणोक्तं कुर्यात् शक्त्यनुरोधतः ॥११५१॥
आलस्येन त्यजन् सद्यः पतत्येव न संशयः ।
कुलशास्त्रं सर्वदैव चिंतनीयं प्रयत्नतः ॥११५२॥

पशुशास्त्राणि सर्वाणि दूरतः परिवर्जयेत् ।
पशोस्तु रक्षणं तद्वत् धर्मस्यास्य तथाचरेत् ॥११५३॥

गुह्यर्थं कर्मणां लोपे न पापं विद्यते क्वचित् ।
मातृदोषो यथा गोप्यस्तथा धर्मः स्वयं सदा ।
योषितामप्रियं नैव कुर्यात् कार्यं प्रियं सदा ॥११५४॥

अपराधसहस्रेऽपि स्वस्त्रियं वा परस्त्रियम् ।
न क्लेशयेन् मंडले तु सर्वेषां प्रियमाचरेत् ॥११५५॥

काम्यकर्म न कर्तव्यं नित्यं नैमित्तिकं चरेत् ।
भक्त्या शक्त्या कृतं कर्म देवतायै समर्पयेत् ॥११५६॥
अन्यमंत्रार्चने श्रद्धां न कुर्यात् तु कदाचन ।
न नग्नां स्त्रियमीक्षेत कुरूपां प्रकटस्तनीम् ॥११५७॥
दृष्ट्वा तु विकृतां वापि नोपहासं समाचरेत् ।
मंडले तु स्त्रियात्युक्तस्ताडितोऽपि तु तां नमेत् । ११५८॥

न स्वपेत् कुलवृक्षाधस्तत्पत्रे नैव भोजनम् ।
तच्छेदं नैव कुर्याच्च नमस्कुर्याच्च दर्शने ॥११५९॥

कुलशास्त्रं तदाचारं कदापि न विकल्पयेत् ।
विभीतकार्ककारंजस्नुहीछायां न संश्रयेत् ॥११६०॥

पुंड्रेक्षुभक्षणं तद्वत् छेदनं च परित्यजेत् ।
गुरुस्त्रिवारमाचारं शिष्याय कथयेत् स्फुटम् ॥११६१॥
तन्न गृह्णाति शिष्यश्चेत् तदा पापं गुरो नंहि ।
गुरूपदिष्टं संधार्य शिष्यः संहृष्टमानसः ॥११६२॥
ततः शिष्यश्च स्वात्मानं गुरवे विनिवेद्य च ।
प्रतिज्ञापूर्वकं दद्याद् दक्षिणां गुरवे च सः ॥११६३॥
सर्वस्वं वा तदर्धं वा तदर्धं वा दशांशकम् ।
वित्तशाठ्येन रहितो गां पृथ्वीं च हिरण्यकम् ॥११६४॥
वस्त्राभरणभूषादि गजमश्वं गृहादिकम् ।
आरामं च तथा दासं दासीं दत्वा प्रणम्य तम् ॥११६५॥

विनयेन च संतोष्य कारयेद् वीरमंडलम् ।
यथाविधि समाहूय कुमारीश्च सुवासिनीः ॥११६६॥

ततः सामयिकांश्चैव यथान्यायं प्रपूज्य तान् ।
उन्मनोल्लासपर्यन्तं संतर्प्य शक्तिसाधकान् ॥११६७॥

संप्रार्थ्य दीक्षासाफल्यं वस्त्रालंकारभूषणैः ।
नानाविधै र्भक्ष्यभोज्यै र्लेह्यपेयैश्च तोष्य तान् ॥११६८॥

श्रीगुरुं प्रार्थ्य तत्कर्म संप्राप्ताशीः समापयेत् ।
ततोऽपरदिने कुर्यात् पवित्रारोपणं गुरुः ।
ज्ञानार्णवोक्तमार्गेण कर्मसांगत्वपूर्तये ॥११६९॥

नवतंतुमयं कुर्यादेकहस्तप्रमाणकम् ।
स्वर्णजं रौप्यजं वापि यद्वा कार्पासजं शुभम् ॥११७०॥

नवग्रंथियुतं कृत्वा तदेकादशमाचरेत् ।
उपविश्यासने शुद्धे नित्यकृत्यं समाप्य च ॥११७१॥

पात्रे पवित्रे संस्थाप्य तथास्त्रेण च प्रोक्षणम् ।
कवचेनावगुंठ्याथ वर्मणा वेष्टयेच्च तम् ॥११७२॥

सविधिस्थापिते वह्नौ मूलेनैव प्रतापनम् ।
कृत्वा पात्रे च संस्थाप्य ससंपातं घृतं हुनेत् ॥११७३॥

पुनस्तस्मिन् यजेच्चैता क्रमयोगेन देशिकः ।
प्रणवाद्यं च प्रणवं विधुं वह्निं यजेत् तथा ॥११७४॥

ब्रह्माणं च तथा नागान् गुहं चैव रविं तथा ।
ततः सदाशिवं चैव सर्वान् देवान् ततः परम् ॥११७५॥

शिवतत्त्वं तथा ह्येते देवनामार्णसंयुताः ।
ङेनमोन्ताश्च ते पूज्याः पवित्रे दशदिक्षु च ॥११७६॥

आकाशाद्यं सदा पूर्वं शिवतत्त्वं तथेश्वरम् ।
ईंकाराद्यं तथा मायातत्त्वं सुखार्णभूषितम् ॥११७७॥

पृथ्वीमुखं कालतत्त्वं तथा नियतितत्त्वकम् ।
वरुणाद्यं तत् पुरुषतत्त्वं वायुमुखं तथा ॥११७८॥

कामं च कर्णविद्वाढ्यं तथा प्रकृतितत्त्वकम् ।
वायुयुक्तं पृथिव्यादि मायांतव्यापकार्णकम् ।
ङेऽन्तं तथात्मतत्त्वं च नमोन्तं पूजयेत् ततः ॥११७९॥

जटालं कर्णबिन्दुस्थं विद्यादिशब्दतः सदा ।
शिवान्तव्यापकायान्ते विद्यातत्त्वाय वै नमः ॥११८०॥

भृगुः सर्गी शिवतत्त्वव्यापकाय ततः शिवः ।
तत्त्वायांते नमश्चैवं संपूज्य भैरवान् यजेत् ॥११८१॥

कपालेशं च प्रथमं द्वितीयं शिखिवाहनम् ।
तृतीयं क्रोधराजं च विकरालं चतुर्थकम् ॥११८२॥

पंचमं मन्मथं चैव मेघनादं च षष्ठकम् ।
सप्तमं सोमराजं च विद्याराजं तथाष्टमम् ॥११८३॥

स्वनाम्नोऽन्ते तथाष्टौ ते भैरवान्ताः प्रकीर्तिताः ।
ङेनमोऽन्ताः स्वस्वबीजयुताश्च प्रणवादिकाः ॥११८४॥

तानि बीजानि कथ्यन्ते योज्यानि क्रमशो बुधैः ।
संवर्तकमहाकालवायवः केशसंस्थिताः ॥११८५॥

कथितं प्रथमं बीजं द्वितीयं कूर्चबीजकम् ।
तृतीयं वामकर्णस्थक्रोधं स्याच्चान्तिमं तथा ॥११८६॥

चतुर्थं पंचमं तद्वद् व्योमवारुणषष्ठगम् ।
व्योमवायू केशसंस्थौ षष्ठं वर्म च सप्तमम् ॥११८७॥

व्योमाग्न्यंत्यमहाकालशक्रतोययशस्कराः ।
केशस्थाश्चाष्टमं प्रोक्तं बीजाष्टकमुदीरितम् ॥११८८॥

बिंदुयुक्तानि ज्ञेयानि ततः पूज्याश्च मातरः ।
तासां मंत्राः प्रवक्ष्यंते क्रमेणात्र शुभप्रदाः ॥११८९॥

संवर्तकस्तथा वायु र्नृसिंहोऽग्निश्चतुर्थकः ।
एते मनुस्वरोपेता नादबिंदुविभूषिताः ॥११६०॥
अक्षोभ्याद्यष्टकपदं सहितायै ततो वदेत् ।
ब्राह्मण्यै नम इत्यन्तमंत्रेणैतां प्रपूजयेत् ॥११६१॥
तारं वज्रीवामनेत्रचंद्राढ्यश्च कलामयो ।
बिंदुयुक्ता महीकीर्तिविद्याढ्या च ततः परम् ॥११६२॥
इलाद्यष्टकमाभाष्य सहितायै पुन र्वदेत् ।
माहेश्वर्यै नमोंतेन मंत्रेणैनां प्रपूजयेत् ॥११६३॥
कूर्चं बिंदुयुतं केशं मुखवृत्तं सचंद्रकम् ।
वामनेत्रं चन्द्रयुतं हुताशनपदं ततः ॥११६४॥
आद्यष्टकान्ते सहितायै कौमार्यै नमः पदम् ।
संपूज्यैतेन कौमारीं वैष्णवीं च ततो यजेत् ॥११६५॥
प्रणवं दार्दुरं नासां विन्द्वाढ्यां च रविं तथा ।
नारायणेन्दुसंयुक्तं वामाक्षीं नादभूषिताम् ॥११६६॥
सर्वज्ञानाद्यष्टकान्ते सहितायै पुन र्वदेत् ।
वैष्णव्यै हृदयांतोऽयं मंत्रस्तस्याः प्रपूजने ॥११६७॥
प्रणवं षण्मुखं चंद्रभूषितं गण्डयुग्मकम् ।
सचंद्रं च वक्रं चंद्रभूषितं वामनेत्रकम् ॥११६८॥
बिंदुयुक्तं ततश्चांते तालजंघा पदं वदेत् ।
आद्यष्टकसमायुक्तं सहितायै ततः परम् ॥११६९॥
वाराह्यै च नमोन्तोऽयं मंत्रेणानेन तां यजेत् ।
तारं दामोदरारूढं वृषं वाग्भवमेव च ॥१२००॥
नेत्रे सबिन्दुके दक्षवामे स्यात् तदनन्तरम् ।
स्यात् चम्वाद्यष्टकपदात् सहितायै पुनर्वदेत् ॥१२०१॥
ऐन्द्र्यै नमश्च मंत्रोऽयमैन्द्रीमेतेन पूजयेत् ।
मनुचंद्रयुतं तोयं तत्पुटं च मनुं तथा ॥१२०२॥

सचन्द्रं मन्मथकलाबीजं स्यात् तदनन्तरम् ।
वामन्याद्यष्टकपदं सहितायै पदं पुनः ॥१२०३॥

चामुंडायै च हृदयं मंत्रः तस्याः समर्चने ।
अनंतर्बिदुसंयुक्तशक्रसंपुटिताव्ययम् ॥१२०४॥

सविसर्गं च वामाक्षों सचन्द्रां तदनन्तरम् ।
यमजिह्वाद्यष्टकाग्रे सहितायै पुन र्वदेत् ।
महालक्ष्म्यै नमोऽन्तोयं मंत्रो लक्ष्मीप्रपूजने ॥१२०५॥

एवं मातॄः समाराध्य मातृकां दफमालिनोम् ।
संपूज्य पूजयेद् देवं नियमेश्वरसंज्ञकम् ॥१२०६॥

स्वस्वमंत्रेण ते मंत्राः कथ्यन्ते क्रमशस्तथा ।
जीवः प्राणः कृष्णवर्त्मा नादवृत्तसमन्वितः ॥१२०७॥

कादिक्षान्ताः पंचत्रिंशन्मातृकान्ते ततः परम् ।
स्यात् प्रासादपरे चैव मनुनादविभूषिते ॥१२०८॥

मातृकायै नमोऽन्तोयं मातृकापूजने मनुः ।
प्रणवं च तथा नादि नासिके गंडसंस्थिते ॥१२०९॥

तां तं कूर्मं तथा मोनमग्नि सेवनमेव च ।
कर्णं तोयं कवर्गं च नेत्रं केशवमम्बु च ॥१२१०॥

कुंडलं च तथा वायुं कौमारीं निर्गुणं तथा ।
कुंडलं किकरं चैव कृशानु कालसंज्ञकम् ॥१२११॥

कार्तिकेयं तथा कुक्षि कुलीरं च तथा क्रियाम् ।
नारायणं कालभद्रं रेफाक्रान्तं सर्सागि तत् ॥१२१२॥

व्योमकोषं तथा कोपं श्रवणं च तथा वक्रम् ।
पाशं कर्णमथोऽष्टौ च पश्चात् सद्यमनू पुनः ॥१२१३॥

ङेन्तां नमोंतां प्रवदेत् तथैव दफमालिनीम् ।
अनेन मंत्रवर्येण पूजयेद् दफमालिनीम् ॥१२१४॥

पश्चादनेन प्रयजेन्नियमेश्वरसंज्ञकम् ।
तारमग्निं नंदिपादं मनुर्बिंदुविभूषितम् ॥१२१५॥

द्विवारमनलं पांतकर्णचन्द्रविभूषितम् ।
व्योमाग्न्यंतयमहाकालवज्रीवरुणवायवः ॥१२१६॥

वामकर्णं बिंदुयुतं हंसः पूरय युग्मकम् ।
मुखवृत्तं च नियमेश्वरं ङेन्तं द्विठान्तिमम् ॥१२१७॥

प्रणवं च परासर्गो भृगुः पवित्रशब्दतः ।
कर्मार्पयामि हृदयं मंत्रोऽयं समुदीरितः ।
एभि र्मनूत्तमैः देवान् पवित्रे पूज्य प्रार्थयेत् ॥१२१८॥

आमंत्रितोऽसि देवेश महादेव्या मरुद्गणैः ।
मंत्रेशै र्लोकपालैश्च सहितः परिचारकैः ॥१२१९॥

निवेदयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ।
नियमं च करिष्यामि परमेश तवाज्ञया ॥१२२०॥

कालात्मना त्वया देव यत् कृतं मामके विधौ ।
कृतं कृष्टं समुत्कृष्टं व्रतं गुप्तं च सत्कृतम् ॥१२२१॥

तदस्तु कृष्टमुत्कृष्टं कृतं चेष्टं तवाज्ञया ।
सर्वात्मनामुना शंभो पवित्रेण त्वदिच्छया ॥१२२२॥

ससूत्रस्त्वं महेशान पवित्रः पापनाशनः ।
त्वया पवित्रितं सर्वं जगत् स्थावरजंगमम् ॥१२२३॥

खंडितं यन्मया देव कृतं कैवल्ययोगतः ।
एकीभवतु तत् सर्वं तवाज्ञा सूत्रगुंफितम् ॥१२२४॥

अपवित्रे तु सर्वत्र पवित्रे तु प्रकाशकः ।
अस्पृहाय नमस्तुभ्यं पवित्राय चिदात्मने ॥१२२५॥

सर्वसंकरदोषघ्नीं सर्वलोकैकघातिनीम् ।
शक्तिसूत्रपरिस्पंदप्रसूतां संविदं स्तुमः ॥१२२६॥

त्वं गतिः सर्वभूतानां संस्थितस्त्वं चराचरे ।
अंतश्चारेण भूतानां स्रष्टा त्वं परमेश्वर ॥१२२७॥
कर्मणा मनसा वाचा त्वत्तो नान्या गति र्मम ।
मंत्रहीनं क्रियाहीनं द्रव्यहीनं च यद्गतम् ॥१२२८॥
जपहोमार्चनै र्हीनं कृतं नित्यं मया तव ।
अकृतं विधिहीनं च तत् पूरय महेश्वर ॥१२२९॥
एवं प्रार्थ्य ततः शिष्यः पवित्रानर्पयेत् क्रमात् ।
प्रत्येकमंत्रसंपातयुतान् श्रीगुरवे ततः ॥१२३०॥
कलशाय ततश्चैव श्रीचक्राय च ब्रह्मणे ।
पुस्तकाय तथा क्षेत्रपालेभ्यश्च ततः परम् ॥१२३१॥
एकं शिष्याय च ततः स्रुच्यग्रे विनिधाय तत् ।
मूलमुच्चार्य सघृतं मंत्रमेनं समुच्चरन् ॥१२३२॥
प्रणवं च ततः कूर्चं पूरय द्वितयं पुनः ।
मखव्रतं च नियमेश्वरायात्मपदं ततः ॥१२३३॥
विद्याशिवान्ते तत्त्वाधिपतये भैरवाय च ।
वौषडंतेन मनुना दद्यात् पूर्णाहुतिं गुरुः ॥१२३४॥
शेषं कृत्यं समाप्याथ वैश्वदेवादिकं चरेत् ।
ब्राह्मणान् भोजयित्वाथ दत्त्वा तेभ्यश्च दक्षिणाम् ।
क्षेत्रपालं समभ्यर्च्य यथाम्नायं समापयेत् ॥१२३५॥

इति श्रीमदागमरहस्ये सत्सग्रहे उत्तरार्धे अभिषेककथन
नाम षष्ठ पटल । आदितश्चतुस्त्रिंशत् ॥

## अथ सप्तमः पटलः ।

अथ प्रसंगात् पूर्णाभिषिक्तप्रशसा कुलार्णवे—

एकैकाम्नायजा मंत्राः भुक्तिमुक्तिफलप्रदाः ।
उपमंत्राश्च तावंतः शावराः समुदीरिताः ॥१२३६॥
मयैव कथितास्तेऽपि लोकानुग्रहकारकाः ।
सर्वेषामपि मंत्राणां देवतास्तत्फलप्रदाः ॥१२३७॥

आवयोरंशसंभूताः षडाम्नायभिदि स्थिताः ।
सर्वमंत्रानहं वेद्मि नान्यो जानाति कश्चन ॥१२३८॥
मत्प्रसादेन यः कोऽपि वेत्ति मानवकोटिषु ।
एकाम्नायं च यो वेत्ति स मुक्तो नात्र संशयः ॥१२३९॥
किं पुनश्चतुराम्नायवेत्ता साक्षात् शिवो भवेत् ।
चतुराम्नायविज्ञानादूर्ध्वाम्नायः परः स्मृतः ॥१२४०॥
तस्मात् तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः ।
ऊर्ध्वत्वात् सर्वधर्माणामूर्ध्वाम्नायः प्रशस्यते ॥१२४१॥
ऊर्ध्वं नयत्यधस्स्थं च ऊर्ध्वाम्नाय इतीरितः ।
ऊर्जितत्वात् कुलेशानि ध्वस्तसंसारसंकटात् ॥१२४२॥
ऊर्ध्वलोकैकसेव्यत्वादूर्ध्वाम्नायः प्रकीर्तितः ।
तस्माद् देवेशि जानीहि भोगमोक्षैकसाधनम् ॥१२४३॥
सर्वाम्नायाधिकं पुण्यमूर्ध्वाम्नायं परात्परम् ।
नानाजन्मार्जिताचारपुण्यकर्मफलोदयात् ॥१२४४॥
ऊर्ध्वाम्नायं विजानीयात् नान्यथा वीरवंदिते ।
धन्यो मनुष्यलक्षेषु जानाति कुलदर्शनम् ॥१२४५॥
तेषां लक्षेषु यः कश्चिदूर्ध्वाम्नायं प्रवेत्ति वै ।
ऊर्ध्वाम्नायं विजानाति यः कश्चिच्छ्रीगुरोर्मुखात् ॥१२४६॥
शास्त्रमार्गेण स नरो जीवन्मुक्तो न संशयः ।
ऊर्ध्वाम्नायमीदृशं हि यो जानातीह तत्त्वतः ॥१२४७॥
स वंद्यः स गुरुः सोऽर्च्यः स दैवज्ञः स मांत्रिकः ।
स सेव्यः स च संस्तुत्यः स द्रष्टव्यः स सात्त्विकः ॥१२४८॥
स व्रती स तपस्वी च साऽनुष्ठाता स पूजकः ।
स वेदागमशास्त्रादिसर्वविद्याविशारदः ॥१२४९॥
स चाचार्यः स मतिमान् स यतिः स च कौलिकः ।
स च यज्वा स पूतात्मा स जापी स च साधकः ॥१२५०॥

स योगी स कृतार्थस्तु स वीरः स च सत्तमः ।
स पुण्यात्मा स सर्वज्ञः स मुक्तः स शिवः प्रिये ॥१२५१॥

तत्कुलं पावनं देवि धन्या तज्जननी स्मृता ।
तत्पिता च कृतार्थः स्यात् मुक्तास्तत्पितरः प्रिये ॥१२५२॥

पुण्यास्तद्वंशजाः सर्वे पूतास्तन्मित्रबांधवाः ।
वहुनेह किमुक्तेन चोर्ध्वाम्नायपरस्य च ।
पूर्णाभिषेकयुक्तस्य दर्शनं वंदनं तथा ॥१२५३॥

संभाषणं च कुरुते राजसूयफलं लभेत् ।
पूर्वाम्नायः सृष्टिरूपः स्थितिरूपश्च दक्षिणः ॥१२५४॥

संहारः पश्चिमो देवि उत्तरोऽनुग्रहो भवेत् ।
मंत्रयोगं विदुः पूर्वं भक्तियोगं च दक्षिणम् ॥१२५५॥

पश्चिमं कर्मयोगं तु ज्ञानयोगं तथोत्तरम् ।
पूर्वाम्नायस्य संकेतश्चतुर्विंशतिरीरितः ॥१२५६॥

दक्षिणाम्नायसंकेतः पंचविंशतिरीरितः ।
पश्चिमाम्नायसंकेतो द्वात्रिंशत् समुदीरितः ॥१२५७॥

विदुः षट्त्रिंशदाम्नाये संकेतः श्रीमदुत्तरे ।
ऊर्ध्वाम्नायस्य चैतानि न संति कुलनायिके ॥१२५८॥

साक्षात् ज्ञानस्वरूपत्वात् न किंचित् कर्म विद्यते ।
ऊर्ध्वाम्नायस्य माहात्म्यमहं वेद्मि न चेतरः ॥१२५९॥

मत्स्नेहात् त्वं च जानासि सत्यमेतद् वरानने ।
आवयोः करुणा यत्र सुलभोऽन्यत्र दुर्लभः ।
ऊर्ध्वाम्नायस्य माहात्म्यमिति ते कथितं मया ॥१२६०॥इति।

तथा च कौलतंत्रे—

पूर्णाभिषेकसंयुक्तः षडाम्नायक्रमस्थितः ।
अधिकारी भवेद् देवि देवार्चासु च सर्वदा ।
नित्ये नैमित्तिके काम्य इति शास्त्रस्य निश्चयः ॥१२६१॥

योगिनीये—

अभिषेकं विना यस्तु पुरश्चर्यां समाचरेत् ।
पुरश्चर्याशतेनापि तस्य सिद्धि र्न जायते ॥१२६२॥

कुब्जिकातन्त्रे—

अभिषेकं विना विप्रः प्रधानत्वं चरेत्तु यः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोधनम् ।
अंते च नरकं याति योनौ भ्रमति नित्यशः ॥१२६३॥

प्रधानत्व पचाधिकारित्वम् । यच्च समयातन्त्रे—

अभिषेकविहीनैश्च मपंचव्रतधारिभिः ।
चक्रमध्येर्ऽचिता देवी रुष्टा सर्वान् विनाशयेत् ॥१२६४॥

कुलार्चनतन्त्रे च—

अभिषेकविहीनस्तु पशुरेव न संशयः ।
तेन पृष्टा च दृष्टा च पूजा सा निष्फला यते ।
तस्मात् सर्व प्रयत्नेन तत्संगं परिवर्जयेत् ॥१२६५॥

निरुत्तरतन्त्रे—

अभिषेकं विना विप्रो मपंचकमथाचरेत् ।
स महापातकी च स्यान्न स्पृशेत् तं कदाचन ॥१२६६॥

कालीकुलसद्भावेऽपि—

अभिषेकं विना विप्रो न सेवेत् मादिपंचकम् ।
अभिषेके कृते विप्रे सुरापानो विधीयते ॥१२६७॥
विजयां वानुकल्पे च सुराभावे निवेदयेत् ।
अभिषेकं विना देवि महामायां यजेत्तु यः ।
तावत् कालं वसेद् घोरे यावच्चन्द्रदिवाकरौ ॥१२६८॥

कुलागमे—

अभिषेकं विना विप्रो नाधिकारी मपंचसु ।
विशोध्य प्रोक्तमार्गेण समभ्यर्च्य कुलेश्वरीम् ।
निवेद्य शक्तिवीरेभ्यः शक्त्युच्छिष्टं स्वयं पिबेत् ॥१२६९॥

कुलार्णवेऽपि—

शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टं तु चर्वणम् ।
शक्त्यु च्छिष्टं विना देवि देहशुद्धि र्न जायते ।।१२७०।।

अतएव कुलावली-कालीकुलसर्वस्व-कौलसर्वस्व-श्रीक्रमसंहिता-यामलादिषु शक्त्युच्छिष्टस्यावश्यकत्वमुक्तम् । तत्र तत्रैव चोच्छिष्टयोग्या शक्तिरप्युक्ता । यच्च यामले—

शक्त्युच्छिष्टमविचार्य पिबेत् चक्रेश्वरो यदि ।
घोरं च नरकं याति यावदिन्द्राश्चतुर्दश ।।१२७१।।

विचारणा तु इयमभिषिक्ता किमनभिषिक्तेति । चक्रेश्वर इत्युपलक्षणम् । अभिषिक्तोऽनभिषिक्ताया न पिबेदिति रहस्यविदः । यच्चानभिषिक्त-शक्त्युच्छिष्टग्रहणे कालीकल्पलताकारेणायुतसंख्याकतत्तद्देवतागायत्रीजपपूर्वक पुनरभिषेकः साधकार्थमुद्दिष्टः । अतस्तन्महदनर्थकरम् । एतदेव समयातंत्रे विजयाकल्पेऽप्युक्तम्—

लक्षं श्रीपादुकां जप्त्वा तस्मात् पापाद् विमुच्यते ।
प्रजप्यायुतगायत्रीमभिषेकं पुनश्चरेत् ।।१२७२।।

यामलेऽपि—

पिबेदनभिषिक्तायाश्चोच्छिष्टं यदि साधकः ।
तस्याभिषेकजा शक्ती रुष्टानर्थकरी सदा ।।१२७३।।

वीरोच्छिष्टविषये तु—

परोच्छिष्टं यदा चक्रे कौलिको भक्षयेत् प्रिये ।
सिद्धिहानि र्भवेत् सद्यो योगिन्यो भक्षयंति तम् ।।१२७४।।

अतएव—

आत्मोच्छिष्टं न दातव्यं परोच्छिष्टं न भक्षयेत् ।

समयाचारतंत्रेऽपि—

महद् रागाच्च दंभाच्च स्वोच्छिष्टं गौरवाय चेत् ।
दद्यात् स नारकी च स्यादंते चापि पशुर्भवेत् ।।१२७५।।

तेनात्र कनिष्ठश्रद्धालवे देय न ज्येष्ठेभ्य ।

कामाख्यातन्त्रे—

मद्यैर्मांसैस्तथा मत्स्यैर्मुद्राभिर्मैथुनैरपि ।
स्त्रिया साकं सदा साधुरर्चयेत् जगदंबिकाम् ।
अन्यत्र तु महानिंदा गीयते त्रिदशैरपि ॥१२७६॥

अत्रान्यत्रेति ग्रहणात् पूजनादन्यत्रेति ।

यच्च समयाचारतन्त्रे—

सौत्रामण्यां कुलाचारे ब्राह्मणो मदिरां पिबेत् ।
अन्यत्र कामतः पीत्वा प्रायश्चित्तीभवेद् द्विजः ॥१२७७॥

कुलाचारे कुलार्चनकाले, तदन्यत्र नेति । स्वेच्छया यस्मिन् कस्मिन् समये निवेद्य पीत्वा प्रायश्चित्तीभवेदित्यर्थः ।

एतदेव कुलावल्याम्, कुब्जिकातन्त्रे च—

पूजाकालं विनान्यत्र न मया परिकीर्तितम् ।
अन्यत्र कालतः पीत्वा प्रायश्चित्तं समाचरेत् ॥१२७८॥

कौलसर्वस्वे—

मत्स्यमांससुरादीनां पदार्थानां विशेषतः ।
पूजाकालं विनान्यत्र न मया परिकीर्तितम् ॥१२७९॥

ग्रहणमिति शेष ।

समयाचारे, आचारसारतन्त्रेच—

पूजाकालं विनान्यत्र सुरां पीत्वा द्विजोत्तमः ।
ब्राह्मण्यं हीयते तद्वद् दीक्षापि विफलायते ॥१२८०॥

आगमकल्पद्रुमेऽपि—

पूजाकालं विनान्यत्र सुरां यो दुर्मतिः पिबेत् ।
स याति नरकं घोरमेकविंशतिभिः कुलैः ॥१२८१॥

ब्राह्मणो मदिरां दद्याद् यथाविधि विधानतः ।
निषेधविधिमुल्लंघ्य योऽर्चयेत् स तु पातकी ॥१२८२॥

येनैव नरकं याति तेनैव मुक्तिसाधनम् ।
तस्मात् सावहितो विप्रः कुलधर्मं समाचरेत् ।
हालाहलं हन्ति चैकं हाला तु सार्धपौरुषम् ॥१२८३॥

कलार्णवेऽपि—

श्रीगुरोः कुलशास्त्रेभ्यः सम्यग् विज्ञाय वासनाम् ।
पंचमुद्रां निषेवेत चान्यथा पातकी भवेत् ॥१२८४॥

आवृत्ति गुरुपङ्क्तिं च वटुकादीनपूज्य यः ।
वीरोऽप्येवं वृथा पानाद् देवताशापमाप्नुयात् ॥१२८५॥

अयष्ट्वा भैरवीं देवीमकृत्वा मंत्रतर्पणम् ।
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ॥१२८६॥

अज्ञात्वा कौलिकाचारमयष्ट्वा गुरुपादुकाम् ।
योऽस्मिन् शास्त्रे प्रवर्तेत तं त्वं पीडयसि ध्रुवम् ॥१२८७॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः ।
स सिद्धिमिह नाप्नोति न सुखं न परां गतिम् ॥१२८८॥इति।

अथैतत् धर्मलक्षणम् आगमकल्पलतायाम्, कौलसर्वस्वेऽपि—

अतिगुप्तेन कर्तव्यं कुलार्चनकुलीनकैः ।
गोपनात् धर्मरक्षा स्यात् व्यक्तात् धर्मो विनश्यति ॥१२८९॥

प्रकाशात् सिद्धिहानिः स्यात् प्रकाशात् मृत्युरेवच ।
प्रकाशात् कुप्यते देवी धनं पुत्रान् विनाशयेत् ॥१२९०॥

पंचतत्त्वेन कौलानां समो नास्ति जगत्त्रये ।
विपरीतफलं तत्र प्रकाशान्नास्ति संशयः ॥१२९१॥

निशीथे पूजनं कार्यं नो दिवा तु कदाचन ।
दिवा कृता चेत् भवति विफला सर्वथा हि सा ॥१२९२॥

पंचतत्त्वै दिवा पूजा अभिचाराय कल्प्यते ।
श्रुतिस्मृतिविधानेन दिवाधर्मप्रवर्तकः ॥१२९३॥

रात्रौ द्वितीयप्रहरात् कर्तव्यं गोपनेन च ।
प्रकाशात् साधकानां तु कुलधर्मो विनश्यति ॥१२९४॥

कुलमार्गं समासाद्य यः करोति प्रकाशनम् ।
स महापातकी देवि तत् संगं नैव कारयेत् ॥१२९५॥

सहस्रकोटियोगिन्यस्तावंतो भैरवा अपि ।
नियुक्ताः परयोगेन धर्मसंरक्षणाय च ।
अतः सावहितो मंत्री कुलधर्मं समाचरेत् ॥१२९६॥

नीलतंत्रे, कुलचूडामणावपि—

अतिगुप्तस्थले देवि देवीपूजां समाचरेत् ।
पातालमंडपे वापि गह्वरे वा नियंत्रिते ॥१२९७॥

निश्छिद्रमंडपे वापि न कार्यं जनसन्निधौ ।
किंवा पक्षिपतंगादिदर्शनेनैव कारयेत् ॥१२९८॥

कुलपुष्प कुलद्रव्यं कुलपूजां कुलस्मृतिम् ।
कुलं कुलपतिं चैव कुलमालां कुलाकुलम् ॥१२९९॥

कुलचक्रं कुलध्यानं सर्वथा न प्रकाशयेत् ।
प्रकाशात् सिद्धिहानिः स्यात् प्रकाशान्निर्धनो भवेत् ॥१३००॥

प्रकाशात् मंत्रनाशः स्यात् प्रकाशात् कुलहिंसनम् ।
प्रकाशात् मूलनाशः स्यात् न प्रकाश्यं कदाचन ॥१३०१॥

पूजाकाले यदा दैवात् कोऽप्यागच्छति शांकरि ।
दर्शयेद् वैष्णवीं मुद्रां विष्णोर्नामोच्चरेद् भृशम् ॥ १३०२॥

गोपनेऽपि यदि व्यक्तिस्तत् प्रकाशात् न दूषणम् ।
प्रमादात् स्नेहतो वापि न प्रकाश्यं कदाचन ॥१३०३॥

वरं पूजापरित्यागो न च व्यक्तिः कदाचन ।
गोपयेत् सर्वतोपास्ति पशुभ्यो मातृजारवत् ॥१३०४॥
गुह्यार्थं कर्मलोपेऽपि न तद् दोषमवाप्नुयात् ।

अन्यच्च कुलचूडामणौ—

अंतःशाक्तो बहिःशैवः सभायां वैष्णवोत्तमः ।
सर्वदा विष्णुभावस्तु भवेत् साधकपुंगवः ॥१३०५॥

अथ कौलानां कार्याकार्यनिरूपणम्—

कार्यं च समयाचारपालनं धर्मरक्षणम् ।
अकार्यं तीर्थयात्रादि मनुष्यसेवनादिकम् ॥१३०६॥

अथ समयाचार —

कुलागमे कौलतंत्रे कुलावल्यां कुलार्णवे ।
यदुक्तं समयाचारे तदेव कथ्यतेऽधुना ॥१३०७॥

शिववाक्यम्—

अथातः संप्रवक्ष्यामि समयाचारमुत्तमम् ।
येन हीना न सिध्यन्ति कुलचर्यापरायणाः ॥१३०८॥

उदारचित्तः सर्वत्र वैष्णवाचारतत्परः ।
परनिन्दासहिष्णुः स्यादुपकाररतः सदा ॥१३०९॥

सर्वस्माद् देवतायां तु भक्तिः कार्या विशेषतः ।
मुख्याभक्तिस्तदेकात्मदृष्टिः सर्वत्र सर्वदा ॥१३१०॥

मध्या तद् दृष्टिरहितः काले तु सगुणात्मके ।
देवताग्रहणध्यानमानसार्चाक्रमाश्रयः ॥१३११॥

अधमाऽल्पभावनादियोगेन सगुणात्मके ।
आश्रित्य सेवकत्वं वै तत् कर्मपरता भवेत् ॥१११२॥

यथा देव्यां गुरौ तद्वत् यतितव्यं न चान्यथा ।
स्वशास्त्रार्थेषु विश्वासः सर्वसंशयवर्जनात् ॥१३१३॥

योषित्सु देवताभावपूर्वकं प्रियमाचरेत् ।
पशुभ्यो गोपयेत् स्वस्योपास्ति लोकोत्तरां सदा ॥१३१४॥

त्यजेत् तृष्णां शास्त्रवर्त्मविरुद्धां सर्वनाशिनीम् ।
प्रातःकृत्यादिकं कर्म शक्त्या कुर्यान्न लोपयेत् ॥१३१५॥

सर्वस्वं देवतार्थं वै भावयेन् नान्यथा क्वचित् ।
गुरुं यथोक्तकाले तु प्रणमेद् भक्तिभावतः ॥१३१६॥

स्थिरसूत्यादिकं देव्या गुरुं वा चिरकालतः ।
रिक्तहस्तो नोपगच्छेद् दर्शनार्थं च साधकः ॥१३१७॥

गुरुं शिवात्मकं ध्यायन् हितं तस्य सदा चरेत् ।
गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धितास् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥१३१८॥

विविक्षुर्देशिकावासं शांतचित्तोऽतिभक्तिमान् ।
व्यजनं पादुकां छत्रं वसनं वाहनादिकम् ॥१३१९॥
तांबूलमुल्वणं वेषमुत्सृज्य प्रविशेत् शनैः ।
पादप्रक्षालनं स्नानमभ्यंगं दंतधावनम् ॥१३२०॥
मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवनम् ।
वीरासनं च दुर्वाक्यमतिहासांगमोटनम् ॥१३२१॥
केशमोचनमुष्णीषं कंचुकं नग्नता तथा ।
पादप्रसारणं चैव कलहं दूषणं प्रिये ॥१३२२॥
अंगवाद्यांगभंगादिकरस्पर्शनधूननम् ।
द्यूतं कुक्कुटमल्लादियुद्धमित्यादि वाम्बिके ॥१३२३॥
गुरुयोगिमहासिद्धपीठक्षेत्राश्रमादिषु ।
नाचरेदाचरेन् मोहात् देवता शापमाप्नुयात् ॥१३२४॥
सच्छास्त्रधर्म देवादिनिंदां न शृणुयात् क्वचित् ।
क्वचित् स्यात् धर्मगुप्त्यर्थं मुखवैवर्ण्यमुत्सृजेत् ॥१३२५॥
अलक्षितो नयेत् तांश्च वार्तयान्यप्रसंगके ।
सर्वथा तां न शृणुयात् व्रजेद्वान्यत्र युक्तितः ॥१३२६॥
समर्थश्चेत् निंदकांस्तु युक्त्या दंडेन योजयेत् ।
गुरूणां समवाये तु पूर्वं निजगुरुं यजेत् ॥१३२७॥
तदाज्ञया च परमादीन् पश्चाद भक्तितो यजेद् ।
शिष्यान्यं न वदेद् दीक्षां नाममुद्रां मनुं क्वचित् ॥१३२८॥
न दर्शयेत् पशुभ्यस्तु कुलशास्त्रं कदाचन ।
आद्यात्रयं सुवासिन्या मंडलं कुलशाखिनम् ॥१३२९॥
श्मशानमत्तेभाशोककोकिलान् पुष्पितद्रुमान् ।
द्रव्यगंधमेकवृक्षं कुमारीगणमेव च ॥१३३०॥
कुलशास्त्रादिकं तद्वद् दर्शनात् प्रणमेत् सदा ।
कुलवृक्षस्य छायायां स्वापं पर्णेषु भोजनम् ।
देवतार्थं विना शाखाछेदनं च विवर्जयेत् ॥१३३१॥

कुलवृक्षास्तु—

अशोकः केसरः कर्णिकारश्चूतः तिलस्तथा ।
नमेरुश्च प्रियालश्च सिंधुवारकदंबकौ ।
मरुचः चंपकश्मो कुलवृक्षाश्च द्वादश ॥१३३२॥

तिलः = तिलक = नमेरु = रुद्राक्ष. । केसरो = वकुलः । कर्णिकारः = लघुकृतमाल. । प्रियाल. = राजादनः ।

तिष्ठन्ति कुलयोगिन्यः सर्वेष्वेतेषु सर्वतः ।
पर्वते विपिने चैव निर्जने शून्यमंडपे ॥१३३३॥

चतुष्पथे लतामध्ये यदि दैवाद् गतिर्भवेत् ।
क्षणं स्थित्वा मनुं जप्त्वा नत्वा गच्छेत् यथासुखम् ॥१३३४॥

चतुष्पथे=देव्या पीठे ।

यथोक्तं यामले—

चतुष्पथः स विज्ञेयो यत्रास्ते तारिणी शिला ।

तारणकर्तृत्वात् तारिणीत्यर्थ. । पीठ त्वेकपंचाशत् । पीठन्यासे तूक्तमेव न्यासप्रकरण ।

कुलार्णवे च—

एकलिंगं श्मशानं च समूहं योषितामपि ।
नारीं च रक्तवसनां दृष्ट्वा वंद्य मनु जपेत् ॥१३३५॥

गृध्रं वीक्ष्य महाकालीं जंवुकीं यमदूतिकाम् ।
कृष्णमार्जारभूकाकौ श्येनं क्षेमंकरीं तथा ॥१३३६॥

कुररीं च नमस्कुर्यादिदं मंत्रं समुच्चरन् ।
घोरदंष्ट्रे कोटराक्षि किटि शब्दप्रसारिणि ॥१३३७॥

गुरुघोररवास्फाले नमस्ते चितिवासिनि ।
रक्तवस्त्रं रक्तपुष्पं विलोक्य त्रिपुरांविकाम् ॥१३३८॥

प्रणम्य दण्डवद् भूमाविमं मंत्रं समुच्चरेत् ।
वंधूकपुष्पसंकाशे त्रिपुरे भयनाशिनि ॥१३३९॥

भाग्योदयसमुत्पन्ने नमस्ते वरवर्णिनि ।
कृष्णवस्त्रं कृष्णपुष्पं राजानं राजपुत्रकम् ॥१३४०॥

हस्त्यश्वरथशस्त्राणि फलकान् वीरपूरुषान् ।
महिषं कुलदेवीं च दृष्ट्वा महिषमर्दिनीम् ।
प्रणमेत् जयदुर्गां च स च विघ्नैर्न लिप्यते ॥१३४१॥

फलकान् = नटान् ।

जयदेवि जगद्धात्रि त्रिपुरेशि त्रिदैवते ।
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ॥१३४२॥

मद्यभाण्डं समालोक्य मत्स्यं मांसं वरस्त्रियम् ।
दृष्ट्वा च भैरवीं देवीं प्रणमेद् विमृशन् मनुम् ॥१३४३॥

घोरविघ्नविनाशाय कुलाचारसमृद्धये ।
नमामि वरदे देवि मुण्डमालाविभूषिते ॥१३४४॥

रक्तधारासमाकीर्णे वरदे त्वां नमाम्यहम् ।
सर्वविघ्नहरे देवि नमस्ते हरवल्लभे ॥१३४५॥

यः शिवारुदितं श्रुत्वा शिवदूतीं शुभप्रदाम् ।
प्रणम्य संस्मरेत् मूलं तस्य कामः करे स्थितः ॥१३४६॥

एतेषां दर्शनेनैव यदि नैवं प्रकुर्वते ।
शक्तिमंत्रं पुरस्कृत्य तस्य सिद्धिर्न जायते ॥१३४७॥

एतेषां मारणोच्चाटे भर्त्सनं क्रूरचेष्टितम् ।
कुरुते यदि पापात्मा देवीभक्तः कथं भवेत् ।
एवं कर्तुमशक्तो यः कुलस्तोत्रं सदा पठेत् ॥१३४८॥

कुलस्तोत्रं कुलचूडामणितन्त्रोक्तम्, तत् पश्चाल्लिखामः ।

विण्मूत्रोच्छिष्टशंकाभियुक्तः कर्म करोति यत् ।
तपोऽर्चनादि तत् सर्वमपवित्रं भवेत् प्रिये ।
एतान् धर्मान् सर्वथैव शक्त्या सेवेत साधकः ॥१३४९॥

अन्यच्च तन्त्रान्तरे—

ज्ञानश्रद्धाभक्तिहीनं कुतर्ककसमाश्रयम् ।
पशुशास्त्रं वर्जयेच्च कुलशास्त्रपरो भवेत् ॥१३५०॥

वर्जयेत् काम्यकर्माणि तथान्यदेवतार्चनम् ।
स्त्रियं तु सर्वथा पश्येत् देवतारूपिणीं सदा ॥१३५१॥

पूजाकालं विना नैव पश्येत् शक्तिं दिगंबराम् ।
पूजाकालं विना नैवमुपेया सा हि साधकैः ॥१३५२॥

पुंड्रेक्षुच्छेदनं साक्षाद् भक्षणं तद्विवर्जनम् ।
पित्रादिजनसंबन्धिजने सति सलक्षणे ॥१३५३॥

कुर्यात् नान्यं गुरुं क्वापि चान्यथा गुरुघातकः ।
तथा गुरोः सन्निधाने तदाज्ञामन्तरा क्वचित् ॥१३५४॥

मंत्रप्रदानं नो कुर्यात् तद्योग्ये च तथेतरे ।
विद्याया अप्रदानेन प्रदानेनापि शास्त्रहा ॥१३५५॥

सर्वत्रादौ गुरुज्येष्ठो ज्येष्ठानादौ तदाज्ञया ।
ऋणादिव्यवहारं तु वर्जयेद् गुरुभिः सह ॥१३५६॥

पादुकोपासको भारं न वहेत् मस्तके क्वचित् ।
देवतागुरुसान्निध्ये प्रपदं नैव दर्शयेत् ॥१३५७॥

गुरोरासनवस्त्रांगच्छायां न च विलंघयेत् ।
गुरोरुच्चे नोपविशेत् वर्जयेत् कलहादिकम् ।
गुरुनाम न भाषेत जपकालादृते क्वचित् ॥१३५८॥

प्रकाशं श्रीगुरोः कुर्यात् मंत्रगुप्ति तथैव च ।
स्वनामसंयुतां योग्यादपि दीक्षां विवर्जयेत् ॥१३५९॥

दत्वा योग्ये संप्रदायमदत्वार्हे च तं पुनः ।
विद्याद्रोही च पतितो भवेत् सर्वगुणोऽपि सन् ॥१३६०॥

रहस्यधर्माष्टकं च साधकस्य निरूप्यते ।
आद्यो मंडलरक्षा च तदुच्छिष्टप्रमार्जनम् ॥१३६१॥

द्वितीयं श्रीगुरोराज्ञापालनं स्यात् तृतीयकम् ।
पूजोपस्करदानं तु चतुर्थं स्त्रीषु मातृवत् ॥१३६२॥

वर्तनं पंचमं षष्ठं मंडले सर्वतोषरणम् ।
सप्तमं देवताबुद्धिः सर्वत्र स्यात् तथाष्टमम् ॥१३६३॥
कौलशास्त्रे परा श्रद्धा चैव धर्माष्टकं स्मृतम् ।
एतद् धर्मसमायुक्तः साक्षात् शिवपदं लभेत् ॥१३६४॥
अधर्माष्टकमप्येवं महानर्थकरं भवेत् ।
आद्यं स्त्रीणां मंडले तु प्रेक्षणं कामपूर्वकम् ।
द्वितीयं कामवत्या वै योग्याया: प्रतिषेधनम् ॥१३६५॥
पशुसंगं तृतीयं स्यात् तुर्यो विघ्नस्तु मंडले ।
निर्माल्यस्य स्वीकृतस्य पदास्पर्शस्तु पंचमः ॥१३६६॥
नैवेद्यस्य परित्यागः षष्ठः स्यात् सप्तमस्ततः ।
निंदनं कुलमार्गस्य मंडले कटुभाषणम् ।
अष्टमं चेति संप्रोक्तं वर्ज्यास्त्वेते च सर्वथा ॥१३६७॥

अथ साधकाना शमाष्टकम्, यथा कुलावल्याम्—

गोपयेद् घातयेद् देवि न निंदेन् न निरीक्षयेत् ।
पूजयेत् वर्जयेच्चैव भावयेच्च जुगुप्सयेत् ॥१३६८॥

अथ गोपनम्—

मंत्रं मुद्रां तथा मालां मपंचकमतः परम् ।
योगिनीवीरमेलापं वीराचारं च गोपयेत् ॥१३६९॥

घातनम्—

कामं क्रोधं च मात्सर्यं विकारमिन्द्रियोद्भवम् ।
निद्रां तन्द्रां तथा शंकां लज्जां च घातयेत् सदा ॥१३७०॥

अनिंद्यम्—

देवं गुरुं तथा विद्याज्येष्ठं वीरं च योषितम् ।
संकेतवीरकर्माणि निंदयेन् न कदाचन ॥१३७१॥

अनिरीक्ष्यम्—

कन्यायोनिं पशुक्रीडामुन्मत्तां प्रकटस्तनीम् ।
धिक्कृतं पापिनं क्लीबं न निरीक्षेत् कदाचन ॥१३७२॥

पूज्यम्—

देवान् गुरून् तथा साधून् मातरं पितरं तथा ।
कन्यकां वटुकं चैव वीरान् नारीं यजेत् सदा ॥१३७३॥

वर्ज्यम्—

रागं मोहं तथा क्षोभं धूर्तमुन्मत्तवंचकौ ।
तद्गोष्ठीं च तथा द्यूतं वर्जयेत् साधकोत्तमः ॥१३७४॥

भावनीयम्—

गुरुवाक्यं शास्त्रवाक्यं सिद्धोक्तं तीर्थदेवते ।
स्वधर्मं च कुलाचारं भावयेत् साधकोत्तमः ॥१३७५॥

जुगुप्स्यम्—

विण्मूत्रं समयाचारनिंदकं वीरदूषकम् ।
वीरघ्नं च तथा गोघ्नं ब्रह्मघ्नं च जुगुप्सयेत् ॥१३७६॥

कौलतंत्रे—

रात्रौ पर्यटनं चैव रात्रौ च शक्तिपूजनम् ।
श्मशानगमनं चैव शिवाबलिमतः परम् ॥१३७७॥

कुमारीपूजनं चैव तथैव मुडसाधनम् ।
न करोति यदेवैतत् साधकः कौलिकः कथम् ॥१३७८॥

कुलार्णवे—

श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि च ।
भक्त्या श्रीपूर्वकं देवि प्रणम्य परिकीर्तयेत् ॥१३७९॥

गुरुं नाम्ना न भाषेत जपकालादृते क्वचित् ।
श्रीनाथ देव स्वामीति विवादे साधने वदेत् ॥१३८०॥

श्रीगुरोः पादुकां मुद्रां मूलमंत्रं स्वपादुकाम् ।
शिष्यादन्यत्र देवेशि न वदेद् यस्य कस्यचित् ॥१३८१॥
पारंपर्यागमाम्नायमंत्राचारादिकं प्रिये ।
सर्वं गुरुमुखाल्लब्धं सफलं स्यात् न चान्यथा ॥१३८२॥

श्रीशास्त्राश्रयभूतं च पुस्तकं देववत् प्रिये ।
नित्यं समर्चयेद् भक्त्या पशुगेहे न निःक्षिपेत् ॥१३८३॥

स्वदारवन् निषेवेत कुलशास्त्राणि पार्वति ।
पशुशास्त्राणि सर्वाणि वर्जयेद् परदारवत् ॥१३८४॥

स्वचर्मस्थं यथाक्षीरमपेयं स्याद् द्विजोत्तमैः ।
तथा पशुमुखो धर्मो न श्रोतव्यश्च कौलिकैः ॥१३८५॥

यः शृणोति कुलाचारं यथाशास्त्रं च यो वदेत् ।
तावुभौ गच्छतः साक्षाद् योगिनीवीरमेलनम् ॥१३८६॥

अश्रद्दधाना ये चात्र कुलधर्मे कुलेश्वरि ।
नरकान् न निवर्तन्ते यावदाभूतसंप्लवम् ॥१३८७॥

ऊढाहृता च प्रीता च मौल्येन च समावृता ।
सकृत् कामगतावापि पंचधा गुरुयोषितः ॥१३८८॥

अलंघ्याः पूजनीयाः स्युर्गुरुवद् गुरुयोषितः ।
गुरुशक्ति वीरभार्यां कुमारीं व्रतधारिणीम् ॥१३८९॥

व्यंगांगीं विकृतांगीं च क्षुब्धामपि न कामयेत् ।
संततं भगिनीं पुत्रीं स्नुषां भातृप्रियामपि ॥१३९०॥

न कामयेद् गुरोरग्रे कुर्यात् नान्योपगूहनम् ।
कृष्णां शुक्लीं कृष्णवर्णां, कुमारीं च कृशोदरीम् ॥१३९१॥

मनोहरां यौवनस्थामर्चयेद् देवताधिया ।
एकदापि न सेवेत बलेन कुलयोगिनीम् ॥१३९२॥

चक्रमध्ये स्वयं क्षुब्धां कामयेन् न कदाचन ।
आममांसं सुराकुंभं मत्तेभं सिंहदर्शनम् ।
सहकारमशोकं च क्रीडालोलाः कुमारिकाः ॥१३९३॥

एकवृक्षं श्मशानं च समूहं योषितामपि ।
नारीं च रक्तवसनां दृष्ट्वा वंदेत भक्तितः ॥१३९४॥

गुरुशक्तिसुतज्येष्ठकनिष्ठकुलदेशिकान् ।
कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥१३९५॥

प्रेरकान् सूचकांश्चापि वाचकान् दर्शकान् तथा ।
शिक्षकान् बोधकान् योगियोगिनीसिद्धपूरुषान् ॥१३९६॥

कन्याः कुमारकान् नग्नानुन्मत्तानपि योषितः ।
न निंदेन् न जुगुप्सेत न हसेत् नावमानयेत् ॥१३९७॥

नाप्रियं नानृतं ब्रूयात् कस्यापि कुलयोषितः ।
कुरूपेत्यतिकृष्णेति न वदेत् कुलयोषितम् ॥१३९८॥

परीक्षयेन् न भक्तानां वीराणां च कृताकृते ।
न पश्येत् पतितां नग्नामुन्मत्तां प्रकटस्तनीम् ॥१३९९॥

न दिवा सेवयेन्नारीं न तद्योनिं निरीक्षयेत् ।
या काचिदंगना लोके सा मातृकुलसंभवा ॥१४००॥

कुप्यन्ति कुलयोगिन्यो वनितानामतिक्रमात् ।
स्त्रियं शतापराधां वा पुष्पेनापि न ताडयेत् ॥१४०१॥

दोषान् न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत् ।
तिष्ठन्ति कुलयोगिन्यः कुलयोगेषु सर्वदा ॥१४०२॥

प्रायश्चित्तं भृगोः पातं सन्यासं व्रतधारणम् ।
तीर्थयात्राभिगमनं कौलः पंच विवर्जयेत् ॥१४०३॥

वीरहत्या वृथापानं वीरस्त्रीगमनं तथा ।
वीरद्रव्यापहरणं तत् संसर्गश्च पंचमः ।
महापातकमित्युक्तं कौलिकानां कुलान्वये ॥१४०४॥

अस्यायमर्थं—प्रायश्चित्त तत्रोक्तभिन्नम्। व्रतधारणमपि तथैव । तीर्थयात्राभिगमनमिति स्मार्तप्रकारेण। पीठयात्रायास्तत्रेषु विहितत्वात्। वीरस्त्रीगमन च तत्स्वाम्यनुज्ञाभिन्नम्।

यच्च कुलार्णवे—

भगिनीं वा सुतां भार्यां यो दद्यात् कुलयोगिने ।
मधुमत्ताय देवेशि तस्य पुण्यं न गण्यते ॥१४०५॥

देवतागुरुशास्त्रादिसिद्धाचारविडंबकः ।
विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ॥१४०६॥
गुरुं तुंकृत्य हुंकृत्य वीरान् निर्भत्स्यं वा प्रिये ।
विकल्प्य गुरुशास्त्राणि भवति ब्रह्मराक्षसः ॥१४०७॥
श्रीचक्रगतवृत्तांतं शुभं वा यदि वाशुभम् ।
कदाचित् नैव वक्तव्यमित्याज्ञा पारमेश्वरी ॥१४०८॥
कुलधर्मप्रसंगं तु पशूनां पुरतः शिवे ।
कदाचिन्नैव कुर्वीत शूद्राग्रे वेदपाठवत् ॥१४०९॥

फेत्कारिणीतन्त्रे च—

सर्वदा गोपयेदेनं मनुं च गुरुमेव च ।
तेन वीर्यवती विद्या निर्वीया स्यात् प्रकाशतः ॥१४१०॥

एवं पूर्वोक्तधर्मम् ।

नोपवेश्यं महानीरे न शय्या तिमिरान्तरे ।
भस्मस्नानं प्रकुर्वीत ह्यन्तर्वृत्तिः सदा भवेत् ॥१४११॥
वज्रपुष्पांकितं यंत्रं वज्रपुष्पेण पूजयेत् ।
पूजाकाले विशेषेण न स्मरेत् हरिनाम च ॥१४१२॥
अन्यगंधं परित्यज्य चंदनं रक्तचंदनम् ।
रक्तपुष्पेणार्चयेद् वा विल्वपत्रेण वार्चयेत् ॥१४१३॥
तुलसी मालती धात्री मरुवकेन नार्चयेत् ।
शक्तिं विनापि देवेशि जपहोमादितर्पणम् ॥१४१४॥
ध्यानपूजादिकं सर्वं सिद्धिरोधाय जायते ।
पैष्टी पौष्पादिकं द्रव्यं सर्वदा च परित्यजेत् ॥१४१५॥
नोपवासं प्रकुर्वीत न चान्यद् व्रतमाचरेत् ।
पीठक्षेत्रागमाम्नायसद्विद्याचारकौलिकान् ।
कुलद्रव्यादिकं देवि न वदेत् पशुसन्निधौ ॥१४१६॥
यथा रक्षन्ति चौरेभ्यो धनं धान्यांबरादिकम् ।
कुलधर्मं तथा देवि पशुभ्यः परिपालयेत् ॥१४१७॥

कुलधर्ममिदं देवि सर्वावस्थासु सर्वदा।
गोपयेच्च प्रयत्नेन जननीजारगर्भवत् ॥१४१८॥

सुगुप्तकौलिकाचारमनुगृह्णन्ति देवताः।
वाञ्छासिद्धिं प्रयच्छन्ति नाशयन्ति प्रकाशकान् ॥१४१९॥

गुरुं प्रकाशयेन् मंत्री मंत्रं यत्नेन गोपयेत्।
अप्रकाशप्रकाशाभ्यां क्षीयते संपदायुषम् ॥१४२०॥

शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनां प्रिये।
कुलभ्रष्टस्य देवेशि न दृष्टा निष्कृतिः क्वचित् ॥१४२१॥

कुलधर्मं समाश्रित्य ह्याचारं यो न पालयेत्।
यथेष्टाचारिणस्तस्य महापातकिनः प्रिये ॥१४२२॥

आपदो दुरितं रोगा दारिद्र्यं कलहो भयम्।
योगिनीनां प्रकोपश्च स्खलितानि पदे पदे ॥१४२३॥

ध्वस्तमानः प्रनष्टश्च तेजोहीनोऽतिदुःखितः।
निंदितः सर्वविद्विष्टो विह्वलः संगवर्जितः ॥१४२४॥

देशदेशान्तरं याति कार्यहानिश्च सर्वदा।
तत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालिकाः।
भक्षयन्ति पुरा तासां वरो दत्तो मयैव तु ॥१४२५॥

तस्मादाचारवान् देवि योगिनीनां प्रियो भवेत्।
सदाचारेण देवत्वं योगिनीवीरमेलनम् ॥१४२६॥

संप्राप्नुवन्ति तिर्यक्त्वं कौलिकास्तद्विपर्ययात्।
आज्ञासिद्धमिदं कौलमनाचाराद् विनश्यति ॥१४२७॥

आचारपालनात् सत्यमाज्ञासिद्धिं भविष्यति।
नाभिषेको न मंत्रो वा न शास्त्रपठनादिकम् ॥१४२८॥

कारणं कुलधर्मस्य सदाचारं कुलेश्वरि।
बालां श्रीपादुकां तत्त्वत्रयाचारादिवासनाम् ॥१४२९॥

कर्पूरागरुभिश्चैव तथा मृगमदेन च ।
रोचनाकुकुमैश्चैव नानागंधसमन्वितैः ॥१४५३॥
एवमुद्वर्तनं कृत्वा गंधतैलं विलेपयेत् ।
देव्यानीतसहस्रैस्तु स्वर्णकुंभामृतै र्जलैः ॥१४५४॥
सुस्नातां चिंतयेद् देवि तथा च परदेवताम् ।
दुकूलैर्मार्जितं गात्रं दुकूले परिधाय च ॥१४५५॥
केशान् संस्कृत्य कंकतया विधिवद् बंधनं तथा ।
पट्टगुच्छं केशपाशे नानारत्नोपशोभितम् ॥१४५६॥
ललाटे तिलकं दद्यात् सिंदूरं केशमध्यके ।
नागेन्द्ररत्नरचितं करे शंखं मनोहरम् ॥१४५७॥
तथा केयूरकं चैव कंकणं कटकं करे ।
पादांगुलीयकं दद्यान् नानारत्नोपशोभितम् ॥१४५८॥
पादयोर्नूपुरं दद्यान् नासाग्रे गजमौक्तिकम् ।
तारहारं पुष्पमालां यथाशक्त्या विभूषणम् ॥१४५९॥
सर्वांगे लेपनं कार्यं चंदनै र्यक्षकर्दमैः ।
कांचनांचितकंचोलीशोभितं हृदयोपरि ॥१४६०॥
षोडशैरुपचारैस्तु हृदिस्थां पूजयेत् शिवाम् ।
रत्नसिंहासनं दद्यात् स्वागतं कुशलं वदेत् ॥१४६१॥
पाद्यं च पादयोर्देवि शिरस्यर्घं निवेदयेत् ।
परामृतमाचमनीयं मुखे चैवं प्रदापयेत् ॥१४६२॥
मधुपर्कं मुखे दद्यात् त्रिधा आचमनं मुखे ।
हेमपात्रगतं दिव्यं परमान्नं सुविस्तृतम् ॥१४६३॥
कपिलाघृतसंयुक्तं नानाव्यंजनसंयुतम् ।
सुधांभोधिं मांसशैलं मत्स्यराशिं तथैव च ॥१४६४॥
भक्ष्यं भोज्यं तथा लेह्यं चर्व्यं चोष्यं तथैव च ।
सकर्पूरं च तांबूलं मानसं परिकल्पयेत् ।
आवरणं ततो देव्याः पूजनं मनसैव हि ॥१४६५॥

इत्थमंतः समाराध्य मनसैव जपेन् मनुम् ।
सहस्रादिजपं कृत्वा देव्यै सोदकमर्पयेत् ॥१४६६॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एतदेव महादेव्याः पर्यंकत्वमुदाहृतम् ॥१४६७॥
ततः फेननिभां शय्यां नानापुष्पोपशोभिताम् ।
पुष्पशय्यां च संस्कृत्य तत्र देवीं सुरेश्वरीम् ॥१४६८॥
चिंतयेत् साधको योगी नानासुखविलासिनीम् ।
नृत्यगीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम् ॥१४६९॥
ततो होमं प्रकुर्वीत पूजासाफल्यहेतवे ।
अथ होमं प्रवक्ष्यामि येन चिन्मयत लभेत् ॥१४७०॥
अथाधारमये कुंडे चिदग्नौ होमयेत् ततः ।
आत्मान्तरात्मा ज्ञानात्मा परमात्मा प्रकीर्तितः ॥१४७१॥
एतद्रूपं तु चित्कुंडं चतुरस्रं विभावयेत् ।
आनंदमेखलारम्यं बिंदुत्रिवलयान्वितम् ॥१४७२॥
अर्धमात्रायोनिरूपं ब्रह्मानंदमयं भवेत् ।
वामभागे इडानाडी दक्षिणे पिंगला पुनः ॥१४७३॥
सुषुम्णां मध्यतो ध्यात्वा कुर्याद् होमं यथाविधि ।
धर्माधर्मौ साधकेन्द्रो हविष्ट्वेन प्रकल्पयेत् ॥१४७४॥
मूलमंत्रं समुच्चार्य ततः श्लोकं पठेदमुम् ।
नाभिचैतन्यरूपाग्नौ हविषा मनसा स्रुचा ॥१४७५॥
ज्ञानप्रदीपिते वन्हावक्षवृत्तीर्जुहोम्यहम् ।
वन्हिजायान्तमंत्रेण दद्याच्च प्रथमाहुतिम् ॥१४७६॥
मूलान्ते मंत्रमपरमुच्चार्य होमयेत् ततः ।
धर्माधर्महविर्दीप्तमात्माग्नौ मनसा स्रुचा ॥१४७७॥
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।
वन्हिजायान्तमंत्रेण द्वितीयाहुतिमादिशेत् ।
मूलमंत्रं समुच्चार्य ततः श्लोकं पठेदमुम् ॥१४७८॥

यो वेत्ति स महेशः स्यात् कौलिकश्चापि शांभवि ।
तावन्न कौलिको देवि यावन्न समयोकृतः ॥१४३०॥

देहपाते विमोक्षः स्यात् समयाचारपालनात् ।
संस्कारेण विहीनत्वाद् गुरुवाक्यस्य लंघनात् ।
आचारवर्जनाद् देवि कौलिकः पतितो भवेत् ॥१४३१॥

इति श्रीमदागमरहस्ये सत्सग्रहे कौलाचारकथन नाम
सप्तमः पटल । आदितः पञ्चत्रिशत् ।

## अष्टमः पटलः ।

कौलाचारश्च द्विविधः परश्चापर एव च ।
अंतर्यागः परो ज्ञेयो बाह्याचारस्तथापरः ॥१४३२॥

तद्यथा मामले—

आत्मस्थां देवतां त्यक्त्वा बहिर्देवं विचिंतयेत् ।
करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ॥१४३३॥

प्रत्यक्षीकृत्य हृदये सर्वात्मानं समर्चयेत् ।
यस्य यस्य च देवस्य यथाभूषणवाहनम् ॥१४३४॥

तदेव चिंतनं तस्य पूजनं परिकीर्तितम् ।
अथान्तर्यजनं वक्ष्ये येन देवमयो भवेत् ॥१४३५॥

सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः ।
स्वकीयहृदये ध्यायेत् सुधासागरमुत्तमम् ॥१४३६॥

रत्नद्वीपं तु तन्मध्ये सुवर्णवालुकामयम् ।
मंदारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ॥१४३७॥

सर्वतोऽलंकृतं दिव्यं नित्यपुष्पफलद्रुमैः ।
नानासुगंधकुसुमगंधामोदितदिङ्मुखम् ॥१४३८॥

उत्फुल्लकुसुमामोदप्रहृष्टमृगसंकुलम् ।
कूजत्कोकिलसंघैश्च वाचालितदिगन्तरम् ।
सर्वतोऽलंकृतं दिव्यं लसत्कांचनपंकजम् ॥१४३९॥

तन्मध्ये संस्मरेद् देवि कल्पवृक्षं मनोहरम् ।
चतुःशाखाचतुर्वेदगुणत्रयसमन्वितम् ॥१४४०॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
पीतं कृष्णं तथा श्वेतं रक्तं पुष्पं च सुंदरि ॥१४४१॥
हरितं च विचित्रं च नानापुष्पविराजितम् ।
कोकिलै र्भ्रमरैर्देवि शोभितं बहुपक्षिभिः ॥१४४२॥
धर्मार्थकाममोक्षाख्यचतुर्विधफलान्वितम् ।
एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम् ॥१४४३॥
तत्रोपरि महद् व्याप्तं चिंतयेद् रत्नमण्डपम् ।
उद्यदादित्यसंकाशं रत्नसोपानमंडितम् ॥१४४४॥
स्वस्वस्थानस्थितावस्थै र्लोकपालैरधिष्ठितम् ।
सिद्धचारणगंधर्वैं विद्याधरमहोरगैः ॥१४४५॥
किंनरैरप्सरोभिश्च समन्तात् परिवारितम् ।
नृत्यवादित्रनिरतैः सर्वतः स्त्रीगणैर्वृतम् ॥१४४६॥
किंकिणीजालसंबद्धपताकाभिरलंकृतम् ।
महामाणिक्यवैडूर्यदण्डचामरभूषितम् ॥१४४७॥
स्थूलमुक्ताफलोद्दामलंबमानैरलंकृतम् ।
चंदनागरुकस्तूरीगंधाद्यैरनुलेपितम् ॥१४४८॥
तन्मध्ये संस्मरेद् देवि महामाणिक्यवेदिकाम् ।
उद्यदादित्यकिरणां चतुःसोपानशोभिताम् ॥१४४९॥
ध्यायेत् सिंहासनं तत्र पंचप्रेतमयं शुभम् ।
सिंहासने महादेवि प्रसूनतूलिकां स्मरेत् ॥१४५०॥
पीठपूजा तत्र कुर्यात् स्वकल्पोक्तक्रमेण च ।
प्रेतपद्मासने तत्र चिंतयेत् परदेवताम् ॥१४५१॥
आत्मन्यभीष्टरूपां तां ध्यात्वा संपूजयेत् ततः ।
श्रीरत्नपादुके दत्वा नीत्वा तां स्नानमंदिरे ।
सिंहासनोपविष्टायामुद्वर्तनमथाचरेत् ॥१४५२॥

प्रकाशाकाशहस्ताभ्यामवलंब्योन्मनीस्त्रुचम् ।
ज्ञानप्रदीपितेवन्हावक्षवृत्ती र्जुहोम्यहम् ॥१४७९॥

वन्हिजायान्तमंत्रेण तृतीयाहुतिमाचरेत् ।
मूलमंत्रं समुच्चार्य ततः श्लोकं पठेदमुम् ॥१४८०॥

अन्तर्निरंतरनिरिंधनमेधमाने
मायांधकारपरिपंथिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशिभूमौ
विश्वं जुहोमि वसुधादि शिवावसानम् ॥१४८१॥

अनेन मनुना कृत्वा पूर्णाहुतिमनंतरम् ।
लिंगत्रयविशेषज्ञः षडाधारविभेदतः ॥१४८२॥

पीठस्थानानि चागत्य महापद्मवनं व्रजेत् ।
आमूलाधारमाब्रह्मरंध्रं गत्वा पुनः पुनः ॥१४८३॥

चिच्चन्द्रकुंडलीशक्तिसामरस्यसुखोदयः ।
व्योमपंचकनिष्यंदसुधापानरतो भवेत् ॥१४८४॥

इदंतापात्रभरितमहंतापरमामृतम् ।
पराहंतामये वन्हौ जुहोमि शिवताप्तये ॥१४८५॥

वन्हिजायान्तमंत्रेण दद्यात् पंचाहुतिं प्रिये ।
मधुपानमिदं प्रोक्तमितरे मद्यपायिनः ॥१४८६॥

पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं नयेच्चित्तं पलाशी स निगद्यते ॥१४८७॥

मानसादिंद्रियगणं संयम्यात्मनि योजयेत् ।
स मीनाशी भवेत् देवि शेषाः स्युः प्राणिहिंसकाः ॥१४८८॥

अप्रबुद्धा पशोः शक्तिः प्रबुद्धा कौलिकस्य च ।
शक्तिं तां सेवयेद् यस्तु स भवेत् शक्तिसेवकः ॥१४८९॥

पराशक्त्यात्ममिथुनसंयोगानंदनिर्भरः ।
य आस्ते मैथुनं तत् स्यादपरे स्त्रीनिषेवकाः ॥१४९०॥

इत्यादि पंचमुद्राणां वासनां कुलनायिके ।
ज्ञात्वा गुरुमुखाद् देवि यः सेवेत स मुच्यते ॥१४९१॥

इत्यन्तर्यजन कृत्वा साक्षाद् ब्रह्ममयो भवेत् ।
एवमेव महेशानि पूजयन्ति परेश्वरीम् ॥१४९२॥

योगिनो मुनयश्चैव सदा तद्भावमाश्रिताः ।
सर्वासु बाह्यपूजासु अन्तःपूजा विशिष्यते ।
अन्तःपूजा महेशानि बाह्यात् कोटिगुणा स्मृता ॥१४९३॥इति।

भूतशुद्धौ—

यदि बाह्यार्चनद्रव्यैः संपत्तिरस्ति पार्वति ।
अन्तर्यागं विधायेत्थं वहिर्यागं समाचरेत् ॥१४९४॥

पूजाभावे महेशानि हृदये चिंतयेत् शिवाम् ।
सर्वपूजाफलं देवि प्राप्नोति पूजकः प्रियः ॥१४९५॥

न केवलं मानसेन फलमाप्नोति वै गृही ।
अन्तर्यागवहिर्यागौ गृहस्थः सर्वदा चरेत् ।
ततः सिद्धिमवाप्नोति नान्यथा कल्पकोटिभिः ॥१४९६॥

परारहस्ये, कुलार्णवे च—

दीक्षाभिषेकसहितो वेदशास्त्रार्थतत्त्ववित् ।
देवतागुरुभक्तश्च नियतात्मार्चनप्रियः ॥१४९७॥

कुलागमरहस्यज्ञो देवताराधनोत्सुकः ।
गुरूपदेशसंयुक्तः पूजयेत् कुलनायिके ॥१४९८॥

शुद्धात्मा चातिसंतुष्टः क्रौर्यलौल्यविवर्जितः ।
पशुव्रतादिविमुखः सुमुखस्तर्पयेत् प्रिये ॥१४९९॥

तदा पुंसः कृतार्थस्य कालेन वहुना प्रिये ।
मत्प्रसादेन भूयाच्चेद् दृढभक्तिसमागमः ॥१५००॥

तदूर्ध्वं तर्पणं कुर्याद् द्रव्यैः श्रीभैरवोदितैः ।
गुरूपदेशविधिना चान्यथा पतनं भवेत् ॥१५०१॥

मंत्रयोगेन देवेशि कुर्यात् श्रीचक्रपूजनम् ।
तदहं च त्वया सार्धं गृह्णामि स्वयमादरात् ।
भैरवोऽहमिति ज्ञात्वा सर्वज्ञोऽहं गुणान्वितः ॥१५०२॥

इति संचित्य योगीन्द्रः कुलपूजां समारभेत् ।
एकान्ते विजने रम्यदेशे बाधाविवर्जिते ॥१५०३॥

सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः ।
अमृताब्धौ मणिद्वीपे कल्पवृक्षवनोज्ज्वले ॥१५०४॥

वज्रप्राकारसंदीप्तं स्मरेन् माणिक्यमंडपम् ।
पुष्पमालावितानाढ्यं दिव्यपट्टांबरावृतम् ॥१५०५॥

कर्पूरदीपोज्ज्वलितं धूपामोदसुवासितम् ।
तन्मंडपस्थमात्मानं ध्यात्वानाकुलचेतसा ॥१५०६॥

श्रीगुर्वानुज्ञया देवि कुलपूजां समाचरेत् ।
आत्मस्थानमनुद्रव्यदेवशुद्धिश्च पंचमी ॥१५०७॥

यावन् न कुरुते देवि तावद् देवार्चनं न हि ।
सुस्नानभूतसंशुद्धिप्राणायामादिभिः प्रिये ॥१५०८॥

षडंगाद्यखिलन्यासैरात्मशुद्धिरुदीरिता ।
संमार्जनोपलेपाद्यैः दर्पणोदरवत् कृतम् ॥१५०९॥

वितानधूपदीपादिपुष्पमालादि शोभितम् ।
पंचवर्णरजश्चित्रं स्थानशुद्धिरितीरिता ॥१५१०॥

ग्रथित्वा मातृकावर्णैः मूलमंत्राक्षराणि च ।
क्रमोत्क्रमात् त्रिरावृत्तिर्मंत्रशुद्धिरियं भवेत् ॥१५११॥

पूजाद्रव्याणि संप्रोक्ष्य मूलास्त्राभ्यां विधानवित् ।
दर्शयेद् धेनुमुद्रां च द्रव्यशुद्धिः प्रकीर्तिता ॥१५१२॥

पीठे देवं प्रतिष्ठाप्य सकलीकृत्य मंत्रवित् ।
मूलमंत्रेण दीपिन्या मालिन्यार्घोदकेन च ॥१५१३॥

त्रिवारं प्रोक्षयेद् विद्वान् देवशुद्धिरियं प्रिये ।
पंचशुद्धिं विधायेत्थं पश्चाद् यजनमाचरेत् ॥१५१४॥

सा पूजा सफला ज्ञेया चान्यथा निष्फला भवेत् ।
शृणु देवि प्रवक्ष्यामि शोधनं च यथाक्रमात् ।
मकाराणां च सर्वेषां सर्वसाधारणं शिवे ॥१५१५॥

यैरेव पातकी देवि साधको द्रव्यसंकरैः ।
शुद्धैस्तैरेव पूजायां भवेद् भोगापवर्गभाक् ॥१५१६॥

यदा प्रभृति लोकेऽस्मिन् सुरा ख्यातिमुपागता ।
तदा सर्वे सुरा देवि ब्रह्मविष्णुहरादयः ॥१५१७॥

तत् संसर्गोद्भवानंदनिर्भरान्तरमानसाः ।
असुरा राक्षसा यक्षा गंधर्वा मानवादयः ॥१५१८॥

भजन्ति च सुरां दिव्यां मंत्रसंस्कारमंत्रिताम् ।
कालेन कलशस्थाभूत् पुरा देवी सुरेश्वरि ॥१५१९॥

कलिना कालरूपेण बाधिते जगति प्रिये ।
शप्ता शुक्रेण देवेशि कचकारणहत्यया ॥१५२०॥

शुक्रशापवशाद् देवाः ब्रह्मविष्णुशिवादयः ।
ब्रह्मर्षयः सुरायै च ददुः शापं सुदुःसहम् ॥१५२१॥

ब्रह्महत्या सुरापानं समं ज्ञेयं महेश्वरि ।
सुरा शप्ता यदा देवैस्तदा दैत्या मुदं ययुः ॥१५२२॥

सुरां पीत्वा तु दितिजै र्देवा बलविवर्जिताः ।
स्वर्गान् निराकृता देवि पुरंदरपुरःसराः ॥१५२३॥

तदा विष्णुं पुरस्कृत्य देवा यज्ञमतन्वत ।
तदा सदाशिवो देवि प्रादुर्भूत्वाब्रवीच्च तम् ॥१५२४॥

वरं वृणु यथाऽभीष्टं देवनायक सांप्रतम् ।
तं तवाशु प्रयच्छामो गच्छामो निलयं स्वकम् ॥१५२५॥

तदा शक्रोऽब्रवीद् देवि पुरस्कृत्य गुरुं तथा ।
तृणाग्रबिंदुमात्रेण सुरायाः प्रासितेन च ।।१५२६।।

या तृप्ति र्जायतेऽस्माकं न साऽमृतघटीशतैः ।
सा शप्ता ब्रह्मणा देवि विष्णुना शंकरेण च ।।१५२७।।

तां विना निर्बला याता वयं सर्वे पराजिताः ।
तदर्थं देवदेवेश स्तुमस्त्वां परमेश्वरम् ।
एकाक्षराय रुद्राय अकारायात्मरूपिणे ।।१५२८।।

उकारायाधिदेवाय विद्यादेहाय वै नमः ।
तृतीयाय मकाराय शिवाय परमात्मने ।।१५२९।।

सूर्याग्निसोमवर्णाय यजमानाय वै नमः ।
नमस्ते भगवन् रुद्र भास्करामिततेजसे ।।१५३०।।

नमो भवाय देवाय शर्वाय च कपर्दिने ।
शिवाय क्षितिरूपाय सदा सुरभये नमः ।।१५३१।।

ईशानाय नमस्तुभ्यं संस्पर्शाय नमोनमः ।
पशूनां पतये चैव पावकामिततेजसे ।।१५३२।।

भीमाय व्योमरूपाय शब्दमात्राय ते नमः ।
महादेवाय सोमाय अमृताय नमोनमः ।।१५३३।।

उग्राय यजमानाय नमस्ते कर्मरूपिणे ।
इति स्तुत्वा परं देवं भैरवं शिवमीश्वरम् ।।१५३४।।

प्रणेमुः सकला देवाः ब्रह्मविष्णुहरादयः ।
तदा वागुदभूद् व्योम्नः पंच व्योमशरीरिणी ।।१५३५।।

सुरेयं सर्वदा सेव्या सकलैस्तु मुमुक्षुभिः ।
युक्त्यानया प्रसंगेन यथावदनुपूर्वशः ।।१५३६।।

चतुर्धा वेदरूपोऽहमृग्यजुःसामरूपवान् ।
अथर्वाऽहं च मंत्रात्मा परमात्मा शिवोऽव्ययः ।।१५३७।।

वेदानालोड्य वेदार्थं मंत्ररूपं विधाय च ।
कुरुकुल्लां महाविद्यां सदाशिव प्रकाशय ॥१५३८॥
आगमं नाम शास्त्रं च चतुःषष्ट्यात्मकं परम् ।
तस्मिन् सुरादिशुद्धिं तु प्रकाशय मनूत्तमैः ॥१५३९॥
इति वाणी शिवोद्भूता विरराम यदा तदा ।
सदाशिवं महेशानं तुष्टुवुः प्रणताः सुराः ॥१५४०॥
ॐकाररूपिणे देव नमस्ते विश्वरूपिणे ।
नमो देवाधिदेवाय महादेवाय वै नमः ॥१५४१॥
अर्धनारीशरीराय सांख्ययोगप्रवर्तिने ।
वेदशास्त्रार्थगम्याय शाश्वताय नमोनमः ॥१५४२॥
दीनार्त्तित्राणकर्त्रे च नमस्ते दिव्यचक्षुषे ।
नमः सहस्रशीर्षाय नमः सहस्रकाङ्घ्रये ॥१५४३॥
नमो मंत्राय चिद्व्योमवासिने परमात्मने ।
इति स्तुत्वा महादेवं महात्मा श्रीसदाशिवः ॥१५४४॥
प्रोवाचागमशास्त्रं तु मोक्षमार्गं महात्मनाम् ।
देव देवीति या देवी भवानी शास्त्रविश्रुता ॥१५४५॥
सदाशिव प्रणम्याशु प्रोवाच श्लक्ष्णया गिरा ।
वद देवागमं शास्त्रं रहस्यं परमाद्भुतम् ॥१५४६॥
यस्योच्चारणमात्रेण शापहीना भवेत् सुरा ।
शृणु देवि प्रवक्ष्यामि सुराशुद्धिं यथाक्रमम् ॥१५४७॥
मकाराणां तु सर्वेषां शोधनं सिद्धिवर्धनम् ।
वेदो निष्कलशब्दो वै वेदार्थश्चागमः प्रिये ॥१५४८॥
वेदागमार्थतत्त्वज्ञैः सुरा सेव्या मुमुक्षुभिः ।
न वेदागमयोर्भेदः सर्वथेति विनिश्चयः ॥१५४९॥इति।
सूर्यमंडलसंभूता यथेयमभवत् पुरा ।
उमाबीजमयी चेयं तदेवात्र विविच्यते ॥१५५०॥

यदुक्तं कुलोत्तरे देवीवाक्यम्—

सुरा देवी कथं देव सूर्यमंडलसंभवा ।
समुद्रजाता सा देवी सूर्यमंडलसंश्रया ।
केन वै कारणेनेश वद मे करुणानिधे ॥१५५१॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
समुद्रमथने जाता सुरा देवी पुरा शिवे ॥१५५२॥

आनंदरूपिणी सर्वलोकानां च प्रियंकरी ।
सा देव तैर्यदा शप्ता स्वात्मानं लोप्तुमिच्छती ॥१५५३॥

कांतारं तं समाश्रित्य तपस्तेपे सुदारुणम् ।
तपंतीं तपसा तां तु साक्षाल्लक्ष्मीसहोदरीम् ।
तरुणीं चारुसर्वांगीमुपतस्थे दिवाकरः ॥१५५४॥

सा प्रार्थिता तु सूर्येण सम्यगाश्वासिता तदा ।
विवेश मंडलं तस्य तत्र संभाविता सुरा ॥१५५५॥

स्थिता बहुतिथं पश्चात् सुराहीना वसुंधरा ।
नराः सुरास्तथा देवि निरानंदास्तदाभवन् ॥१५५६॥

प्रसाद्य तपसा लोकधातारं तेन चोदिताः
तपसाराध्य मार्तंडं सुरां देवी तु वव्रिरे ॥१५५७॥

तदा सुरोत्तमेनोक्ता गच्छ देवि महीतलम् ।
संभाविता सर्वलोकैरित्युक्ता सा परात्परा ॥१५५८॥

तरुणारुणवर्णाभा चारुसर्वांगसुंदरी ।
निर्गता दिननाथस्य मंडलात् परमेश्वरी ॥१५५९॥

वरान् लब्ध्वा स्वाभिमतान् लोकानंदनहेतवे ।
आगता वसुधायां सा सर्वलोकप्रियंकरी ॥१५६०॥इति।

उमाबीजमयत्वमपि तत्रैवोक्तम्—

शृणु देवि प्रवक्ष्यामि यथोमा बीजतां गता ।
पुरा कैलासशिखरे लीलाखेलनतत्परा ॥१५६१॥

सुरया प्रियया सख्या चोमा शंकरवल्लभा ।
सुप्रीता सखिभावेन वरं तस्यै ददौ तदा ॥१५६२॥

सा वव्रे च सुरादेवी गौरीं शिवसतीं तदा ।
देवि गौरि नमस्तुभ्यं यदि तुष्टासि मे शिवे ॥१५६३॥

वरं ददासि चेन् मह्यमहं शप्ता पुरा किल ।
बुद्धिभ्रंशकरी चेति जनानामस्मि शांकरि ॥१५६४॥

मां समुद्धर तस्मात्तु शापात् परशिवप्रिये ।
आत्मविद्यास्वरूपा त्वमुमा भगवती मता ॥१५६५॥

अहं पीता येन तस्मै प्रसीद त्वं च सत्वरम् ।
मया संतर्पिता च त्वं द्रुत प्रीतिं समावह ॥१५६६॥

इति तद्वाक्यमाकर्ण्य संतुष्टा प्राह शांकरी ।
शृणु वत्से सुरे देवि न यावत् तर्पिता त्वया ।
न मे प्रीति र्भवेत् तावत् सत्यं सत्यं न संशयः ॥१५६७॥

यस्त्वां मह्यं समर्प्याथ सेवते भक्तिभावतः ।
प्रविष्टा त्वं तस्य चान्तर्विद्यां मां जनयिष्यसि ॥१५६८॥

मम विद्यास्वरूपायाः कारणं भव सत्वरम् ।
अधुना शृणु देवेशि सुराशोधनमुत्तमम् ॥१५६९॥

येन शोधनमात्रेण सर्वदेवप्रिया भवेत् ।
मंडलं वामतः कृत्वा जलेन रजसापि वा ॥१५७०॥

कुंकुमेनाष्टगंधेन ह्यथवा वीरभस्मना ।
त्रिकोणं बिंदुसंयुक्तं वृत्तं च चतुरस्रकम् ॥१५७१॥

प्रणवं भुवनेशानीं तत आधारशक्तये ।
नमोऽन्तेनार्चयेत् तं च गंधाक्षतप्रसूनकैः ॥१५७२॥

सामान्यार्घोदकेनास्त्रं पठन् प्रोक्ष्य च सुन्दरि ।
तत्राधारं च संस्थाप्य वन्हिमंडलमर्चयेत् ॥१५७३॥

रकारं बिंदुसंयुक्तं ङेयुतं वन्हिमंडलम् ।
दशकलात्मने विश्वमिति मंत्रेण पूजयेत् ॥१५७४॥

प्रादक्षिण्याद् दशाग्नेयीस्तदुपर्यर्च्चयेत् कलाः ।
धूम्रार्च्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी ॥१५७५॥

सुश्री सुरूपा कपिला हव्यकव्यवहे तथा ।
पूज्या गंधादिभि र्यादिदशवर्णादिकाश्च ताः ॥१५७६॥

कलाश्रीपादुकां पूजयामीति पदमुच्चरेत् ।
नाम्नामन्ते ततस्तासां प्राणस्थापनमाचरेत् ॥१५७७॥

ततः कलशमानीय यथालाभं सुशोभनम् ।
हैमं वा राजतं मार्त्तं संक्षाल्यास्त्रं समुच्चरन् ॥१५७८॥

षट्त्रिंशदंगुलायामं षोडशांगुलमुच्चकम् ।
चतुरंगुलकं कंठं मूलं तस्य षडंगुलम् ॥१५७९॥

धूपितं पुरकर्पूरचंदनागरुभिस्तथा ।
रक्तवस्त्रेण संवेष्टय स्थापयेद् वीरमुद्रया ।
शोभितं पुष्पमालाभि मंत्रमेनं समुच्चरन् ॥१५८०॥

शंभुना च यथा पूर्वं विष्णुना च यथा पुरा ।
ब्रह्मणा च यथा पूर्वं तथा त्वां स्थापयाम्यहम् ॥१५८१॥

इति संस्थाप्य कलशं सूर्यमंडलमर्चयेत् ।
अमर्कमंडलं ङेन्तं द्वादशान्ते कलात्मने ॥१५८२॥

विश्वमन्ते प्रयोक्तव्यं मनुनानेन पूजयेत् ।
कला द्वादश तत्पश्चात् कभाद्याः चठडान्तगाः ॥१५८३॥

प्रदक्षिणक्रमादर्च्यास्ताः क्रमेणोच्यतेऽधुना ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥१५८४॥

सुषुम्णा भोगदा विश्वा बोधिनो धारिणी क्षमा ।
एताः पूर्ववदभ्यर्च्य प्राणस्थापनपूर्वकम् ॥१५८५॥

सुरया पूरयेत् कुभं विलोमै र्मातृकाक्षरैः ।
तदिदं चामृतं साक्षाच्चंद्ररूपं विचिन्तयन् ॥१५८६॥

मंत्रेणानेन देवेशि चंद्रमंडलमर्चयेत् ।
भृगुं सबिन्दुमुच्चार्य ङेयुतं सोममंडलम् ॥१५८७॥

विश्वांचलोऽयं देवेशि षोडशान्ते कलात्मने ।
अनेन मंडलं पूज्य कलाः षोडश पूजयेत् ॥१५८८॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चंद्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा ॥१५८९॥

पूर्णा पूर्णामृता चेति कथिता स्वरजाः कलाः ।
पूर्ववत् पूजनीयास्ताः प्राणस्थापनपूर्वकम् ॥१५९०॥

एताः समर्च्य मंत्रैस्तु यजेद् देवीं च भैरवम् ।
मूलेन तत्र कलशे त्रिकोणं च विभावयेत् ॥१५९१॥

बिंदुर्विबे परां ध्यात्वा पूजयेदिष्टदेवताम् ।
गंधाक्षतप्रसूनैश्च प्रणवं मूलमुच्चरन् ॥१४९२॥

ततस्तारं च माया च परमस्वामिनीति च ।
परमाकाशशून्यांते वाहिनीति समुच्चरेत् ।
चंद्रार्काग्निभक्षिणीति पात्रे विशयुगं वदेत् ॥१५९३॥

ठद्वयान्तामिमां विद्यां जपेत्तु दशधा घटे ।
तत्रैव मातृकान्ते च जपेदृचमिमां प्रिये ॥५१९४॥

आकृष्णेन रजसेति नाम्नीं परमपावनीम् ।
दशधैनामृचं देवि मधुवाताऋताभिधाम् ॥१५९५॥

तत्रानंदेशगायत्रीं जपेत्तु दशधा प्रिये ।
वाङ्माया मा समुच्चार्य तथानन्देश्वराय च ॥१५९६॥

विद्महे श्रीसुरादेव्यै धीमहीति ततो वदेत् ।
तन्नोऽर्धनारीशब्दांते प्रचोदयात् समुच्चरेत् ॥१५९७॥

अग्निमीले पुरोहितं त्रिः संजप्य तु कौलिकः ।
रकारदीर्घषट्काढ्यं प्रोच्चार्य तदनन्तरम् ॥१५९८॥

वह्निशापमोचितायै सुरादेव्यै द्विठान्तकम् ।
दशधा प्रजपेत् विद्यामिषेत्वेति ऋचं जपेत् ।
तारं मायाग्निषड्दीर्घं प्रोच्चार्य च ततः सुधे ॥१५९९॥

शुक्रशापं मोचय द्विर्वनालो मनुरीरितः ।
अग्न आयाहीति ऋचं दशधा प्रजपेत् प्रिये ॥१६००॥

शुक्रशापहरां विद्यां प्रजपेदुच्यतेऽधुना ।
सूर्यमंडलसंभूते वरुणालयसंभवे ॥१६०१॥

उमाबीजमये देवि शुक्रशापात् विमुच्यताम् ।
वेदानां प्रणवो बीजं ब्रह्मानंदमयं यदि ।
तेन सत्येन ते देवि ब्रह्महत्या व्यपोहतु ॥१६०२॥

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥१६०३॥

ब्रह्मशापनिनिर्मुक्ता त्वं मुक्ता विष्णुशापतः ।
विमुक्ता रुद्रशापेन पवित्रा भव सांप्रतम् ॥१६०४॥

एतै मंत्रैस्त्रिस्त्रिवारं समंत्र्य कौलिकः प्रिये ।
शन्नो देवीति ऋचं दशधा प्रजपेद् घटे ।
ततो मायां रमां देवि पं गुं षड्दीर्घसंयुतम् ॥१६०५॥

छुरिकाकारिण्युच्चार्य शोभिनीति ततो वदेत् ।
विकारानस्य शब्दान्ते हरयुग्मं च ठद्वयम् ॥१६०६॥

छुरिकाख्यां जपेद् विद्यां दशधा कलशोपरि ।
यो विश्वचक्षुरिति तामृचं च दशधा जपेत् ॥१६०७॥

गुरुं ध्यात्वा सहस्रारे हृत्पद्मेऽपीष्टदेवताम् ।
प्रणम्य कौलिको ध्यात्वा श्रीतिरस्करिणीं जपेत् ॥१६०८॥

नीलतोयदसंकाशां नीलकुंतलशोभिताम् ।
नीलांबरधरां देवीं नीलोत्पलविलोचनाम् ॥१६०९॥

नीलपुष्पविभूषाढ्यां नीलालंकारभूषिताम् ।
नीलांगरागसंछन्नां नीलवैदूर्यमालिनीम् ॥१६१०॥

इंद्रनीलनिबद्धांशुमहौघमणिभूषणाम् ।
नीलवाजीसमारूढां नीलखड्गायुधां पराम् ।
निद्रापुटेन नीलेन भुवनानि चतुर्दश ॥१६११॥

मोहयंती महामायां द्रव्यानंदकभक्षिणीम् ।
वीरपानरतान् वीरान् पालयंतीं समंततः ॥१६१२॥

संकेतमंडलं दिव्यं छादयंतीं स्ववाससा ।
परमानंदवपुषं परमानंदभैरवीम् ॥१६१३॥

परमानंदजननीं प्रणमामि पराम्बिकाम् ।
इति ध्यात्वा जपेद् विद्यां यथावद् वर्ण्यते मया ॥१६१४॥

वाक्कामम्मठमायाश्च तिरस्करिणि संवदेत् ।
सकलजनं प्रोच्चार्य वाग्वादिनि ततो वदेत् ॥१६१५॥

सकलजनपशु च वदेत् व्रातमनः पदम् ।
चक्षुः श्रोत्रजिह्वाघ्राणादीनि चेति तिरस्कुरु ॥१४१६॥

तिरस्कुरु ततः पद्मत्रयं ठद्वयमुद्धरेत् ।
श्रीतिरस्करिणीं विद्यां संजपेद् दशधा घटे ॥१६१७॥

पवमानः परब्रह्म शुद्धं ज्योतिः सनातनम् ।
पितॄंस्तस्योपतिष्ठन्ति क्षीरसर्पिर्मधूदकैः ॥१६१८॥

ऋचमेनां जपेत् तत्र त्रिवारं त्रिर्जपेत् ततः ।
पवमानः परं ब्रह्म पवमानः परो रसः ॥१६१९॥

पवमानं परं ज्ञानं तेन त्वां पात्रयाम्यहम् ।
इति जप्त्वा गुरुं ध्यात्वा जपेद् वरुणबीजकम् ॥१६२०॥

हंस इत्यर्कमंत्रं च देवीं कुडलिनीं स्मरेत् ।
प्रसुप्तभुजगाकारां सार्धत्रिवलयां शिवाम् ॥१६२१॥

सूर्यकोटिकरालाभां चंद्रकोटिसुशीतलाम् ।
वन्हिकोटिदुराधर्षां विसतंतुतनीयसीम् ।
षट्चक्राणि विभिद्याशु सुषुम्णा वर्त्मना नयेत् ॥१६२२॥

सहस्रारस्थिते देवं नत्वा शिवपदे लयेत् ।
शिवशक्त्यो र्महज्ज्योति ध्यात्वा चंद्रकलासुतम् ॥१६२३॥

अमृतं वामनासाग्रात् निःसार्य कलशे क्षिपेत् ।
अमृतीकृत्य तद्द्रव्यं धेनुमुद्रां प्रदर्शयेत् ॥१६२४॥

मायां रमां कामकन्नां अमृतेऽतोऽमृतोद्भवे ।
अमृतवर्षिण्युच्चार्य अमृतं श्रावयद्वयम् ॥१६२५॥

अं आं विष्णुकलां ते च पठेत् पार्वति कौत्रिकः ।
विश्वां तममृतेश्वर्यै मनुमेनं जपेद् घटे ॥१६२६॥

ध्यात्वामृतमयं दिव्यं कर्पूरादिसुवासितम् ।
एलालवंगकस्तूरीचंदनोशीरमिश्रितम् ॥१६२७॥

विधाय मूलमंत्रेण तीर्थान्यावाहयेद् घटे ।
तारं शिवं शिवं भूर्ति मूलमेतत् समुद्धरेत् ॥१६२८॥

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिंधु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥१६२९॥

इत्यावाह्य महादेवि मुद्रयांकुशरूपया ।
सर्वतीर्थमयं दिव्यं ध्यायेत् परमपावनम् ॥१६३०॥

द्रव्यमध्ये त्रिकोणं च अकथादिविभूषितम् ।
हलक्षान्तःकोणयुतमंशुकं सर्गिज मध्यगम् ॥१६३१॥

विभाव्य योनिमाबध्य ध्यायेदानंदभैरवम् ।
सूर्यकोटिप्रतीकाशं चंद्रकोटिसुशीतलम् ॥१६३२॥

अष्टादशभुजं देवं पंचवक्त्रं त्रिलोचनम् ।
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् ॥१६३३॥

वृषारूढं नीलकंठं सर्वाभरणभूषितम् ।
कपालखट्वांगधरं घंटाडमरुवादिनम् ॥१६३४॥

पाशांकुशधरं देवं गदामुसलधारिणम् ।
खड्गखेटकपट्टीशमुद्गरोच्छूलकुंतिनम् ॥१६३५॥

विचित्रखेटकं मुंडं वरदाभयपाणिनम् ।
लोहितं देवदेवेशं भावयेत् साधकोत्तमः ॥१६३६॥

दत्वा पुष्पांजलिं कुंभे यजेदानंदभैरवम् ।
हकारं च भृगुं देवं भेकं पृथ्वीं ततो जलम् ॥१६३७॥

अग्निं वायुं वामकर्णं ङेऽन्तमानंदभैरवम् ।
नेत्रमंते च दशधा जप्त्वा ध्यायेच्च भैरवीम् ॥१६३८॥

भावयेच्च सुधां देवीं चन्द्रकोट्ययुतप्रभाम् ।
हिमकुन्देन्दुधवलां पंचवक्त्रां त्रिलोचनाम् ।
अष्टादशभुजैर्युक्तां सर्वानंदकरोद्यताम् ॥१६३९॥

प्रहसन्तीं विशालाक्षीं देवदेवस्य संमुखीम् ।
एवं ध्यात्वा यजेद् देवीं मंत्रेणानेन तज्जले ॥१६४०॥

शक्तिं शिवं निर्जरार्णं भेकीं भूबीजमेव च ।
मेघं वन्हि समीरार्णं केशं चैव समुद्धरेत् ॥१६४१॥

सुरादेव्यै कुटं चान्ते विद्यां च दशधा जपेत् ।
भैरवं भैरवीं देवीं जप्त्वा पार्वति कौलिकः ॥१६४२॥

महामुद्रां धेनुमुद्रां योनिं मत्स्यं प्रदर्शयेत् ।
बध्वा च लेलिहानाख्यां मुद्रां कुंडलिनीं पुनः ॥१६४३॥

मूलाधारात् समुत्थाप्य सुषुम्णा वर्त्मना प्रिये ।
द्वादशान्तं समानीय सोऽहं हंस इति स्मरन् ।
शिवेन सह संयोज्य परानन्दमयः सुधीः ॥१६४४॥

तदुद्भूतामृतवृष्टिमुत्सृजेद् वासनासया ।
प्रणवेन च देवेशि परद्रव्ये नियोजयेत् ॥१६४५॥

साक्षादमृततत्त्वाढ्यं ध्यायेत् कलशमुत्तमम् ।
वारुणं बीजमुच्चार्य मूलं च दशधा जपेत् ॥१६४६॥

पुनः संपूजयेत् पुष्पैर्गंधाक्षतपुरःसरैः ।
नानाविधैश्च मालाभिः गंधद्रव्यैः मनोहरैः ॥१६४७॥

संपूज्य कलशं दिव्यं घंटानिःस्वनपूर्वकम् ।
धूपै दीपै र्मनोत्साहैः परमैर्विविधौषधैः ॥१६४८॥

संपूज्य परया भक्त्या प्रणमेत् स्तुतिपूर्वकम् ।
सर्वदेवमयं कुंभं ध्यायन् साधकसत्तमः ॥१६४९॥

ततः कलशवक्त्रं तु पात्रेणाच्छाद्य केनचित् ।
जलोद्धरणपात्रं तु सूक्ष्मं तस्योपरि न्यसेत् ॥१६५०॥

तस्मिन् नमोद्यां सूक्ष्मां च नंदां शांतां प्रपूजयेत् ।
चतुर्थीनमसा युक्तां गंधाक्षतप्रसूनकैः ॥१६५१॥

एवं क्रमेण वरदा कलशस्था भवेत् सुरा ।
तृप्तिदा सर्वदेवानां सर्वदेवमयी हि सा ॥१६५२॥

सिद्धिदात्री ज्ञानदात्री भवबंधविमोचिनी ।
या सुरा सा उमा देवी यद् द्रव्यं तन्महेश्वरः ॥१६५३॥

यो गंधः स भवेद् ब्रह्मा यो मोहः स जनार्दनः ।
स्वादे च संस्थितः सोमः फेनायामनलस्थितः ॥१६५४॥

इच्छायां मन्मथो देवश्छर्द्यामुच्छिष्टभैरवः ।
द्रावे गंगा स्थिता देवि घटस्थाः सप्त सागराः ॥१६५५॥

सर्वतेजोमयं द्रव्यं परमानंदनिर्भरम् ।
सर्वशापविनिर्मुक्तं सर्वमंत्रप्रतर्पकम् ॥१६५६॥

योजयेदिष्टपूजायां स्वकल्पोक्तेन वर्त्मना ।
ततस्तृप्ता महेशानी लयांगशिवभैरवैः ।
ददातीष्टान् वरान् देवि भुक्तिमुक्तिफलात्मकान् ॥१६५७॥

माहेश्वरैर्महावीरैर्महाचीनक्रमस्थितैः ।
महाशक्तिमयैर्मान्यैः सेव्यं द्रव्यमिदं प्रिये ॥१६५८॥

संतर्प्य देवतामिष्टा योगिनीगणमैश्वरम् ।
वटुकं क्षेत्रपालं च त्रित्रिंशत्कोटिदेवताः ॥१६५९॥

मातृर्मातृगणान् सर्वान् भूतप्रेतादिसंयुतान् ।
संतर्प्य विधिवद् देवि गुरुं गुरुवरांस्ततः ॥१६६०॥

गुरुं ध्यात्वा परां ध्यायेद् वीरान् संपूज्य शक्तितः ।
शक्तियुक्तो भजेत् पात्रमित्याज्ञा पारमेश्वरी ॥१६६१॥

मद्यं मांसं तथा मीनं मुद्रां मैथुनमेव च ।
मपंचकं वीरशक्तिदेवीदेवप्रतोषकम् ॥१६६२॥

शक्तिहीनं वृथापानं तथैव पललं विना ।
तस्मात् संशोधयेन् मांसं देवयोग्यं यथा भवेत् ॥१६६३॥

पूजायां यद् यदानीतं भक्ष्यं भोज्यं च लेह्यकम् ।
पेयं चोष्यं फलं पुष्पं मंत्रितं देवप्रीतिदम् ॥१६६४॥

विनाभिमंत्रणेनैतत् योऽर्पयेद् भक्षयेदथ ।
स मांत्रिकोऽपि देवेशि सहसा निरयी भवेत् ॥१६६५॥

चतुरस्रं विलिख्याथ मांसपात्रं निधापयेत् ।
शोषयेद् दाहयेद् देवि प्लावयेत् स्वस्वबीजतः ॥१६६६॥

मुद्रात्रयं प्रदर्श्याथ ततश्चैनं पठेन् मनुम् ।
छागलाजेन मांसेन कृतरूपाय विष्णवे ॥१६६७॥

वल्यर्थं देवदेव्योस्तं प्रपद्ये विष्णुमव्ययम् ।
प्रतर्पयामि वल्यर्थं पवित्राभव सांप्रतम् ॥१६६८॥

त्रिः पठित्वा ऋचं देवी प्रजपेत् कौलिकोत्तमः ।
प्रतद्विष्णुरिति स्मृत्वा प्रणमेद् योनिमुद्रया ॥१६६९॥

चतुरस्त्रं लिखेद् बिबं मीनं तत्र निधाय च ।
शोषणं दाहनं देवि प्लावनं मनुना चरेत् ॥१६७०॥

ततश्च प्रजपेद् विद्यां यथोक्तां कुलनायकः ।
कृतावतारो हरिणा कलिना पीडितं जगत् ॥१६७१॥

वलिना निगृहीतं च कौलिकानां हितेच्छया ।
भैरवीपरितोषार्थं स्वयं मीनोऽभवद् हरिः ॥१६७२॥

मायां हरांते विश्वं च जपेदृचमतः परम् ।
त्र्यंवकं यजामहेति मंत्रं त्रिः संजपेत् सुधीः ॥१६७३॥

प्रपूज्य गंधपुष्पाद्यैः प्रणमेद् देवतां पराम् ।
मुद्रापात्रं समानीय स्थापयेच्चतुरस्रके ॥१६७४॥

शोषणं दाहनं चैव प्लावनं पूर्ववच्चरेत् ।
मुद्रात्रयं च संदर्श्य प्रपठेत् पूर्ववन्मनुम् ॥१६७५॥

देवता पूजनीयानि सौरभेयानि सांप्रतम् ।
वल्यर्थं देवदेव्योश्च पवित्राणीह सिद्धये ॥१६७६॥

मूलं च दशधा जप्त्वा जपेदृचमनुत्तमाम् ।
तद्विष्णोः परमं मंत्रं प्रजप्योपरि कौलिकः ॥१६७७॥

प्रणम्य भक्तिभावेन कुण्डगोलं च शोधयेत् ।
चतुरस्रे च संस्थाप्य शोषयेद् दाहयेत् सुधीः ॥१६७८॥

आप्लावयेच्च तैर्बीजैः मुद्राभिरभिरक्षयेत् ।
मूलं च दशधा जप्त्वा जपेदृचमथोपरि ॥१६७९॥

विष्णुर्योनिमिति स्मृत्वा स्वेष्टं च प्रणमेत् ततः ।
सर्वेषु देवद्रव्येषु समानीतेषु कौलिकैः ॥१६८०॥

ऋचमेतां जपेत् सम्यङ् मंत्रमेनं तथा जपेत् ।
ग्लुं स्लुं म्लुं प्लुं न्लुं देवेशि स्वान्तं खं कामकौलिकः ॥१६८१॥

अमृतेऽथामृतोद्भूतेऽथामृतेश्वरि चामृतम् ।
स्रावयद्वयमुद्धृत्य ठद्वयं च समुच्चरेत् ॥१६८२॥

इयं शापहरी विद्या मकाराणां महेश्वरि ।
एवं संशोध्य द्रव्याणि शक्तिशोधनमाचरेत् ॥१६८३॥

शक्तिशेषार्थमथवा प्राप्त्यर्थं कुंडगोलयोः ।
संशोधनमकृत्वा तु तद्द्रव्यं वाथ शेषकम् ।
गृह्णाति पूजां वा कुर्यात् तत् सर्वं निष्फलं भवेत् ॥१६८४॥

कृतेऽपि सिद्धिहानिः स्यात् क्रुद्धा भवति चंडिका ।
अभिषेकाद् भवेत् शुद्धिः तथा मंत्राभिमंत्रणात् ॥१६८५॥

नटी कापालिकी वेश्या रजकी नापितांगना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥१६८६॥

मालाकारस्य कन्या च नव कन्याः प्रकीर्तिताः ।
एतासु कांचिदानीय संशोधनमथाचरेत् ॥१६८७॥

तत्र देवं गुरुं ध्यात्वा कृत्वा विष्टरशोधनम् ।
भूतशुद्धिं विधायाथ कुर्यात् प्राणार्पणं सुधीः ॥१६८८॥

विधाय मातृकान्यासं प्राणायामं ततश्चरेत् ।
विनियोगं ततः कुर्याद् यथावद् वर्ण्यते मया ॥१६८९॥

शक्तिशोधनमंत्रस्य ऋषिः प्रोक्तः सदाशिवः ।
त्रिष्टुप् छन्द इति ख्यातं देवता श्रीपरांत्रिका ॥१६९०॥

वाग्बीजं बीजमीशानि शक्तिः शक्तिरितीरिता ।
कामं कीलकमीशानि दिग्बंधो हरमीश्वरि ॥१६९१॥

भोगापवर्गसिद्ध्यर्थं विनियोगः प्रकीर्तितः ।
ऋष्यादिकं यथास्थाने वामाबीजैः क्रमोत्क्रमैः ॥१६९२॥

षडंगकं विधायाथ ध्यात्वा देवीं परांबिकाम् ।
स्वकल्पोक्तविधानेन पूज्य संप्रार्थ्य पार्वतीम् ॥१६९३॥

शक्तिचक्रं स्ववामे तु सिंदूरेण विभावयेत् ।
त्रिकोणमथ षट्कोणं चतुरस्रं विभावयेत् ॥१६९४॥

त्रिकोणमध्ये तन्मंत्रं लिख्य तामेव पूज्य च ।
तस्मिन्नासनमास्तीर्य कन्यां भैरववल्लभाम् ॥१६९५॥

मुक्तकेशीं वीतलज्जां सर्वाभरणभूषिताम ।
सर्वशृंगारशोभाढ्यां तारुण्यमदगर्विताम् ॥१६९६॥

आनंदानद्धहृदयां सौंदर्यातिमनोहराम् ।
शोधयेत् शुद्धिमंत्रेण सुरानंदामृतांबुभिः ।
बालाबीजत्रयं देवि प्रोच्चार्य तदनंतरम् ॥१६९७॥

त्रिपुरायै ततो विश्वं तदन्ते नामपूर्वकम् ।
रमां शक्ति पवित्रीति कुरुयुग्मं समुद्धरेत् ॥१६९८॥

मम शक्ति कुरुयुगं वन्हिजायां समुद्धरेत् ।
मंत्रेणानेन देवेशि कामिनीमभिषिंचयेत् ॥१६९९॥

अभिषिच्य ततः शक्ति न्यासजालं प्रविन्यसेत् ।
मातृकावन्महेशानि कामबाणांस्ततो न्यसेत् ॥१७००॥

चन्द्रबीजद्वयं देवि कामराजं च मोहनम् ।
शक्तिबीजं ततो देवि यथावद् विन्यसेत् प्रिये ॥१७०१॥

ललाटे वदने न्यस्य हृदये योनिमंडले ।
सर्वसंक्षोभणं बाणं सर्वविद्रावणं तथा ॥१७०२॥

सर्वाकर्षणसंज्ञं च सर्वसंमोहनं तथा ।
वशीकरणबाणं च पंचैतान् विन्यसेत् प्रिये ॥१७०३॥

विन्यस्य बाणमुद्राश्च पंच ता देवि दर्शयेत् ।
योनिबिंबे जपेन् मंत्रान् नव यान् वर्णयाम्यहम् ॥१७०४॥

तारं चंद्रं च वाग्बीजं कामं शक्ति ततो वदेत् ।
नटिनीति महासिद्धि मम देहियुगं वदेत् ।।१७०५।।

ठद्वयं प्रजपेदंते मंत्रोऽयं नटिनीप्रियः ।
कालीं कूर्च परां शक्ति कामं कापालिनि प्रिये ।।१७०६।।

रेतो मुंचयुगं ब्रूयादन्ते दहनवल्लभा ।
देवि कापालिकामंत्रः कामदेववशंकरः ।।१७०७।।

तारद्वन्द्वं च हरितं मेघं षड्दीर्घपूर्वकम् ।
वेश्या काम उच्चैरेतो मुंचयुग्माग्निवल्लभा ।।१७०८।।

वेश्याशोधनमंत्रोऽयं सर्वकौलिकवल्लभः ।
वेदाद्यं वाग्भवं कामं शक्ति लक्ष्मीं परां ततः ।।१७०९।।

रजकीति महासिद्धि देहि मे हर ठद्वयम् ।
रजकीशुद्धिमंत्रोऽयं कुलयोषिद्वशंकरः ।
तारं तारात्रयं वस्त्रं प्रोच्चार्य नापितांगने ।।१७१०।।

हरयुग्मं च मे विघ्नान् तुरगं ठद्वयं ततः ।
नापितस्त्रीशुद्धिमंत्रो महामांगल्यदायकः ।।१७११।।

वेदाद्यं भूतिबीजं च तारं मायां धनुस्तथा ।
ब्राह्मणि स्मरवीर्यं च मुंच मुंचेति सर्वदा ।।१७१२।।

सिद्धि मे देहि देहीति हरं दहनवल्लभा ।
ब्राह्मणीशुद्धिमंत्रोऽयं महासिद्धिप्रदायकः ।।१७१३।।

तारं रमा रमा तारं शूद्राणि चरति प्रिये ।
रेत स्तंभय मे सिद्धि देहियुग्मं ततो वनम् ।
शूद्राणीशुद्धिमंत्रोऽयं कामिनीजनमोहनः ।।१७१४।।

तारकं शिवषड्दीर्घसंयुतं मठबीजकम् ।
गोपालि मे सिद्धि देहि द्रावयद्वयमुद्धरेत् ।।१७१५।।

ठद्वयांतो महामंत्रो गोपीशोधनकारकः ।
तारद्वयीसंपुटितां मृद्वीकां दीर्घसंयुताम् ।।१७१६।।

उद्धृत्य मालिनि प्रांते कुरुयुग्मं ततो वदेत् ।
तुरगं ठद्वयं प्रान्ते मंत्रोऽयं मालिनीप्रियः १७१७॥

एवं शोधनमंत्रास्ते वर्णिताश्च पृथङ् मया ।
योनौ जपेत् कुमारीणां कौलिकः करमालया ॥१७१८॥

संजप्य वामकर्णे च मूलमंत्रं त्रिरुच्चरेत् ।
अदीक्षितापि देवेशि दीक्षितैव भवेत् तदा ॥१७१९॥

तथाभिषिक्ता च भवेत् शेषपूजाधिकारिणी ।
एवं सुसंस्कृतां शक्तिं भजेद् वीरोऽर्थसिद्धये ॥१७२०॥

तारं व्योषमास्मरीकं शिवायेति स्वयंभुवम् ।
संपूज्य शिवमंत्रं च जपेत् संस्तभ्य स्वं ध्वजम् ॥१७२१॥

जप्त्वा निरुध्य तद्दण्डं करभीतुण्डमुद्रया ।
आनंदतर्पितां कांतां वीरश्चानंदनिर्भरः ॥१७२२॥

पठन् प्रणवमूले च तया निधुवनं चरेत् ।
धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥१७२३॥

स्वाहान्तं प्रणवादिं च पठन् रेतो विसर्जने ।
जपन् मूलं पठेन् मंत्रमिमं देवीं परां स्मरन् ॥१७२४॥

तारद्वयान्तरगतं परमानंदकारणम् ।
प्रकाशाकाशहस्ताभ्यामवलंब्योन्मनीस्रुचा ॥१७२५॥

धर्माधर्मकलास्नेहं पूर्णवन्हौ जुहोम्यहम् ।
स्वाहान्तेन च मंत्रेण रेतो दानं विधाय च ॥१७२६॥

तारसंपुटमूलेन तत् समादाय पार्वति ।
पुष्पेन पात्रे संस्थाप्य शोधयेदुक्तवर्त्मना ॥१७२७॥

निःक्षिप्य कलशे भूयस्तर्पयेज्जगदंबिकाम् ।
तृप्तानेन महादेवो सर्वाभीष्टं प्रयच्छति ॥१७२८॥

अहं चैव त्वया सार्धं शक्तिवीरसमागमे ।
प्रीत्या गृह्णामि तां पूजां शक्तिद्रव्येण तर्पितः ॥१७२९॥

मद्यकुंभसहस्रैश्च मांसभारशतैरपि ।
न तुष्यामि वरारोहे भगलिंगामृतं विना ॥१७३०॥

उत्तमे वीर्यरजसी मध्यमं केवलं रजः ।
अधमं केवलं वीर्यं तदन्यच्चाधमाधमम् ॥१७३१॥

सकामो न स्त्रियं गच्छेदनिच्छन्तीमदीक्षिताम् ।
संस्कारशुद्धां संगच्छेत् पंचमांगप्रपूर्तये ॥१७३२॥

पंचमेन विना देवी क्रुद्धा शापं प्रयच्छति ।
एवं संशोध्य द्रव्याणि स्वे स्वे कर्मणि योजयेत् ॥१७३३॥इति।

कालीकुले श्रीकुले वा मनाग् भेदोऽस्ति श्रीकुले ।
कलशे चैव श्रीपात्रे तद्भेदं विलिखाम्यथ ॥१६३४॥

यच्च श्रीललिताविलासे, कुलार्णवे च—

यक्षकर्दमसायाद्यपूजांगत्वेन कल्पयेत् ।
तत् पंकलिप्तवामाग्रभूतले मंडलं लिखेत् ॥१७३५॥

मंडलेन विना पूजा विफला कथिता यतः ।
तस्मान्मंडलमालिख्य विधिवत् तत्र पूजयेत् ॥१७३६॥

अखंडमंडलाकारं विश्वं व्याप्य व्यवस्थितम् ।
त्रैलोक्यं मंडितं येन मंडलं तत् सदाशिवम् ॥१७३७॥

उड्यानं चतुरस्रं स्यात् कामरूपं च वर्त्तुलम् ।
जालंधरमर्धचन्द्रं त्र्यस्रं पूर्णगिरिर्भवेत् ॥१७३८॥

तल्लेखनक्रमं वक्ष्ये यथावत् परमेश्वरि ।
उपविश्यासने मंत्री जानुभ्यामवनिं गतः ॥१७३९॥

वहन् करोर्ध्वहस्ताभ्यां जपँस्तारत्रयं बुधः ।
चतुरस्रं वर्त्तुलं च षट्कोणं च त्रिकोणकम् ॥१७४०॥

अन्तरान्तर्विलिख्याथ मध्ये कामकलां लिखेत् ।
इत्थं मंडलमालिख्य पूजयेत् गंधपुष्पकैः ॥१७४१॥

शंखमुद्रामुद्रितेन संस्पृशन् वामपाणिना ।
मंडले विद्यया मध्यं त्रिभिः कूटैस्त्रिकोणकम् ॥१७४२॥

द्विरावृत्त्या च षट्कोणं षडंगैश्चतुरस्रकम् ।
षडासनानि षट्कोणेष्वभ्यर्च्याग्रादितः क्रमात् ॥१७४३॥

उड्याणं कामरूपं च जालंध्रं पूर्णशैलकम् ।
अभ्यर्च्य चतुरस्रादि त्र्यस्रांतं रत्नपंचकम् ॥१७४४॥

चतुर्दिक्षु च मध्ये च प्रादक्षिण्येन पूजयेत् ।
गगनं च तथा स्वर्गं मर्त्यं पातालमेव च ॥१७४५॥

नागसंज्ञं स्वस्वबीजमुखं ङे हृदयान्तकम् ।
अनेन मंडलं पूज्य गंधपुष्पाक्षतैर्बुधः ॥१७४६॥

अथाधारं समादाय क्षालितं मूलविद्यया ।

त्रितारवाग्भवांते श्रीमहात्रिपुरशब्दतः ॥१७४७॥
सुंदर्याश्च महाशब्दं कलशाधारमित्यथ ।
स्थापयामीति संस्थाप्य तत्राधारं प्रपूजयेत् ॥१७४८॥

वाग्भवाते वाक्कूटाते ।

वन्हिर्दीर्घत्रयेन्द्राढ्यो रमांते लवरानिलः ।
वामकर्णेन्दुसंयुक्तो रः सेन्दुरग्निमंडला ॥१७४९॥

वायुधर्मप्रददशकलात्मने समन्वितः ।
वाग्बीजं कलशाधारा पवनो नमसान्वितः ॥१७५०॥

तारादिरीरितो मंत्रो भाजनाधारपूजने ।
प्रादक्षिण्याद् दशाग्नेयीस्तदुपर्यर्चयेत् कलाः ॥१७५१॥
सबिंदु यादिवर्णाद्या धूम्राद्याश्च समीरिताः ।
कला श्रीपादुकां पूजयामीति पदमुच्चरेत् ॥१७५२॥

नाम्नामंते ततस्तासां प्राणस्थापनमाचरेत् ।
ततः स्वर्णादिजं पात्रं क्षालयेत् वामपाणिना ॥१७५३॥

हुं हुं ब्रह्मांडशब्दांते चषकायाग्निवल्लभा ।
कलशक्षालने मंत्रो महेशि परिकीर्तित· ॥१७५४॥

वाग्भवांते दीपिनीति प्रोक्ता ज्वालाथ मालिनि ।
व्योमषष्ठस्वरार्धेन्दु हंसश्चास्त्रान्तिको मनुः ॥१७५५॥

मायाबीजांतिकः प्रोक्तः पात्राणां शोधने मतः ।
मंत्रमेनं न्यसेत् कुंभे मुद्रया योनिसंज्ञया ॥१७५६॥

कवचेनावगुंठ्याथ विन्यस्य प्रणवं ततः ।
मायां हूं क्षूं हं च सं च नमोऽन्तं तत्र विन्यसेत् ॥१७५७॥

आदाय कलशं चंद्रचंदनाद्यैःसुधूपितम् ।
त्रितारमध्यकूटांते श्रीमहात्रिपुरेति च ॥१७५८॥

सुंदर्याः पदमुच्चार्य महाकलशमित्यथ ।
स्थापयामीति संस्थाप्य तस्मिन्नाधारके ततः ॥१७५९॥

वियद्दीर्घत्रयेन्द्वाढ्यं ह म मां स वरानिलः ।
अर्घीशबिंदुसंयुक्तः सेंदुः खं सूर्यमंडला ॥१७६०॥

वायुर्वसुप्रदांते स्याद् द्वादशान्ते कलात्मने ।
मन्मथं कलशयेति नमोंतः प्रणवादिकः ॥१७६१॥

अनेन पूज्य कलशं कला द्वादश पूजयेत् ।
तपिन्याद्याः कभाणादि विद्वाढ्याः पूर्ववत्र्मना ॥१७६२॥

त्रितारशक्तिकूटांते महात्रिपुरशब्दतः ।
सुंदर्याः कलशं चेति पूरयामीति चोच्चरन् ।
महाकलशतः तीर्थं सकृदभ्यर्च्य यत्नतः ॥१७६३॥

चंद्रचंदनकस्तूरीसुमनोभिः सुवासितम् ।
मूलविद्यां समुच्चार्य तदन्ते मातृकां जपन् ॥१७६४॥

विलोमां सावधानेन स्पंदस्कंनादिवर्जितम् ।
तेनासवेन कलशं पूरयेत् पुष्पगंधिना ॥१७६५॥

द्वितीयस्पृष्टधारेण तत्त्वमुद्रोद्धृतेन च ।
पात्रस्पंदेऽमृतस्कन्ने प्रणवं शतधा जपेत् ॥१७६६॥

मंत्रेणानेन देवेशि तज्जलं पूरयेत् ततः ।
भृगुर्दीर्घत्रयेन्द्वाढ्यः समलं वाग्निवायवः ॥१७६७॥

अर्घीशेन्दुयुतः सेन्दु हंसांते सोममंडला ।
यकामप्रदषोडान्ते शकलात्मा तु ङेयुतः ॥१७६८॥

भृगुर्मनुविसर्गाढ्यो ङेयुतं कलशामृतम् ।
तारादि हृदयान्तोऽयं मनुः पानीयपूजने ॥१७६९॥

तत्र माषप्रमाणं तु मांसादित्रितयं क्षिपेत् ।
वाग्भवं कूटमुच्चार्य पुष्पेनालोड्य तज्जलम् ॥१७७०॥

बहिर्निरस्य तत्पुष्पमष्टगंधं विनिःक्षिपेत् ।
मध्यकूटेन कुसुमं कुलसंज्ञं विनिःक्षिपेत् ॥१७७१॥

दर्शयेद् गालिनीं मुद्रां तार्तीयेन समंततः ।
चांद्रीः कलाः स्वराद्यास्तु यजेत् षोडश तज्जले ॥१७७२॥

दशदोषान् निरस्याथ सहजान् कलशामृतात् ।
संस्कुर्यादुक्तविधिना पूजार्हं तज्जलं भवेत् ॥१७७३॥

व्योमेन्दुकांतरौ ग्रग्निर्भिटीशाक्रूरनादकैः ।
उद्धृत्य कूटमेवैतन् नामादौ योजयेत् पृथक् ॥१७७४॥

पथिकांते देवताभ्यो ग्रामचंडालिनी ततः ।
क्रोधचंडालिनी पश्चाद् दृष्टिचंडालिनी ततः ॥१७७५॥

स्पर्शचंडालिनी चाथ सृष्टिचंडालिनीत्यथ ।
एवं घटांते पवनवेधांते निर्दिवेति च ।
सर्वजनदृष्टिस्पर्शदोषान्ते पशुपाश च ॥१७७६॥

हुं फट् स्वाहांतगा मंत्राः नमोंताः परिकीर्तिताः ।
पूजयेदमृते क्रूरदृष्ट्या चालोकयंस्ततः ॥१७७७॥
कल्पिते चतुरस्रे तु गंधपुष्पाक्षतैः प्रिये ।
एवं निरस्य तद्दोषान् शुक्रशापं विमोचयेत् ॥१७७८॥
शुक्रशापात् सुरापेया जाता भुवि द्विजैः सुरैः ।
षड्दीर्घस्वरसंभिन्नं ककारमुच्चरेत् ततः ॥१७७९॥
तोयमक्षियुतं सृष्टिः मानवाद्याग्निरस्थि च ।
सद्ययुक्तं ततः पीता रतिरक्षिसमन्विता ॥१७८०॥
निवृत्तिश्च क्षुधायुक्ता सुरूपा तोयमक्षियुक् ।
क्रोधीशोऽनंतसंयुक्तोऽनंताढ्यो वन्हिरीरितः ॥१७८१॥
दीर्घाथ केवलाव्योम दीर्घा चेति द्वयं पुनः ।
वन्हिजायेति मंत्रोऽयं त्रिरेतेनाभिमंत्रयेत् ॥१७८२॥
स्वादिष्टयादिभिः पूर्वमृग्भिः पंचभिरायतः ।
विष्णुर्योनित्रयेणैव त्रिभिष्ठादित्रयेण च ॥१७८३॥
इमं मे च इति द्वाभ्यां तामंदेत्येकया तथा ।
श्रोणामेकेति चैकेन शुक्रशापाद् विमोचयेत् ॥१७८४॥
एभिः सकृत् सकृन्मंत्रैर्जलं तदभिमंत्रयेत् ।
तेन पूतं भवेत् तोयं शुक्रशापाद् विमुच्यते ॥१७८५॥
षड्दीर्घस्वरसंभिन्नं जलस्थं व्योम चोद्धरेत् ।
श्रीकंठेशो महाकालो रेचिकाढ्यश्च पूतना ॥१७८६॥
युक्ता च ज्योत्स्नया सप्ताष्टमौ वर्णौ च पूतना ।
सद्ययुक्ता च निद्रास्था ह्लादिनी जलझिंटिकौ ॥१७८७॥
सप्तमादित्रयं चास्थि सजलं वह्निरक्षयुक् ।
सप्तमादिद्वयं चाषाढीशांबु विस्वरोऽनलः ॥१७८८॥
पीता पूषान्विता काकोदरी सनयना ततः ।
सप्ताष्टमौ तथाग्निश्च सकेशो लोहितोऽक्षियुक् ।
काकोदरी सनयना सप्तमाष्टमकौ पुनः ॥१७८९॥

स बिंदुः पूतनाश्वेतानंताग्निस्थांबुमारुतः ।
पुनरेतत् त्रयं चास्थिकर्णयुक् रेवतोगतः ॥१७९०॥

क्रोधोशोऽस्थिप्रतिष्ठाढ्यं लोहितोऽनंतसंयुतः ।
पूतना विस्वरा प्रोक्ता भृगुरुक्तः सकर्णकः ॥१७९१॥

धकारः स्यादनन्ताढ्यो बिंदुमान् सद्ययुग् विषम् ।
कूर्मश्च पवनश्चैतत् त्रयं भूयो विषं ततः ॥१७९२॥

सद्यान्वितं सद्दक्कूर्मः क्रोधोशो दीर्घसंयुतः ।
पवनो भौतिकेशाढ्यो हृदयं प्रणवस्ततः ॥१७९३॥

माया स्थिरार्घीशयुता सबिंदुः सर्गवान् भृगुः ।
सुंदरीपावकस्येति विद्याशापविमोचिनी ॥१७९४॥

सिद्धां रक्तां च शुक्लां च पूजयेदुत्पलामपि ।
चतुरस्रे चतुर्दिक्षु प्रादक्षिण्येन चाग्रतः ॥१७९५॥

ततो मंडलमध्ये च त्रिकोणं परिभावयेत् ।
अकथादित्रिरेखाढ्यं विद्याकूटत्रयान्वितम् ॥१७९६॥

त्रिषु कोणेषु मध्यस्थबिंदौ कामकलान्वितम् ।
हक्षौ तत्पार्श्वयो बिन्दुयुक्तौ तत् पृष्ठके पुन ॥१७९७॥

लकारं बिंदुसहितं हंसवर्णौ च पार्श्वयोः ।
विभाव्य तत्र चावाह्य यजेदानंदभैरवम् ॥१७९८॥

सूर्यकोटिप्रतीकाशं चंद्रकोटिसमप्रभम् ।
अष्टादशभुजं देवं पंचवक्त्रं त्रिलोचनम् ॥१७९९॥

वृषारूढं नीलकंठं सर्वाभरणभूषितम् ।
कपालखट्वांगधरं घंटाडमरुवादिनम् ॥१८००॥

पाशांकुशधरं देवं गदामुसलधारिणम् ।
लोहितं देवदेवेशं ध्यात्वा साधकसत्तमः ॥१८०१॥

तस्योत्संगे सुरां देवीं चंद्रकोटिसमप्रभाम् ।
हिमकुंदेन्दुधवलां पंचवक्त्रां त्रिलोचनाम् ॥१८०२॥

अष्टादशभुजायुक्तां सर्वायुधकरोद्यताम् ।
प्रहसंतीं विशालाक्षीं देवदेवस्य संमुखीम् ॥१८०३॥
एवं ध्यात्वा देवदेव्यौ गंधाक्षतसुमैर्यजेत् ।
कपिलाभृगुसंवर्तविषभूजलवन्हिभिः ॥१८०४॥
सवायुवामकर्णेन्दुनादैः कूटं समुद्धरेत् ।
आनंदभैरवायाथ वौषडित्यनयोस्त्रिशः ॥१८०५॥
नामश्रीसप्तवर्णैश्च संपूज्याथ प्रतर्पयेत् ।
तर्पयामीति तत्पात्रविप्रुड्भि र्वामपाणिना ॥१८०६॥
अनामिकांगुष्ठधृतद्वितीयखंडसंश्रितैः ।
प्रोक्तकूटं तु भृग्वाद्यमन्ते वामाक्षिसंयुतम् ॥१८०७॥
कूटं कला तु तन्नाम्ना चतुर्थ्यंतेन साधकः ।
वौषट्स्थाने वषडिति देवीं संपूज्य तर्पयेत् ॥१८०८॥
प्राग्वत् तं परितः पश्चादष्टदिक्षु समर्चयेत् ।
सुरामृतौ च तरुण उन्मनज्ञानसंज्ञकौ ॥१८०९॥
मुक्तिः परमकालौ चेत्यभिधानष्ट भैरवान् ।
आनंदांते भैरवाय वौषट् स्त्रीसप्तवर्णकैः ॥१८१०॥
तैरेव नामभिर्विद्वान् भैरव्यै वषडंतकैः ।
भैरव्यष्टकमित्येवमभ्यर्च्य मिथुनाष्टकम् ॥१८११॥
मूलविद्यां स्मरन् वीक्ष्य तज्जलं वीक्षणाख्यया ।
मुद्रा या श्रीवत्साख्या तस्याः छिद्रेण वीक्षणम् ॥१८१२॥
अस्त्रमंत्रेण संप्रोक्ष्य जलं तेनैव ताडयेत् ।
कुशैस्त्रिर्वर्मणाभ्युक्ष्य वामनाड्या प्रवेश्य तत् ॥१८१३॥
नीत्वा ब्रह्मविलं देवि तत्रस्थं चंद्रमंडलम् ।
पीयूषसारेणैक्यं तद् ध्यात्वा देवि च तन्मयम् ॥१८१४॥
(१) राजदन्तविलान् नेत्रमार्गान् निःसार्य तं घटम् ।
पूरयित्वा तु संरुद्ध्य संरोधिन्या तु मुद्रया ॥१८१५॥

(१) राजदन्तेति याज्ञवल्क्येनोक्तम् । शिवयोगे—'पष्ठ च घण्टिकालिंगमूल तद् राजदन्तकम् ।'

कवचेनावगुंठ्याथ चावगुंठनमुद्रया ।
वं बीजेनामृतीकृत्य मुद्रया धेनुसंज्ञया ॥१८१६॥
परमामृततां कुर्यात् परमीकरणाह्वया ।
मुद्रया तत्र संचित्य ललितां गंधपुष्पकैः ॥१८१७॥
धूपदीपादिभिः सम्यगभ्यर्च्याथाभिमंत्रयेत् ।
अष्टधा विद्यया पश्चाद् विद्यया वीक्ष्य मायया ॥१८१८॥
प्रणवो हृदयं निद्रा स्मृतिरंबु च कामिका ।
सनेत्रा स्मृतिरग्निस्था सप्रतिष्ठा सरायुतः ॥१८१९॥
तोयस्थमस्थिनेत्राढ्यो वन्हिर्वारिसमान वा ।
सकर्णाग्निस्तुष्टियुता रतिश्च जलमूर्त्तये ॥१८२०॥
ऊर्ध्वबिंदुग्राहिणीति महालक्ष्मीस्ततः परम् ।
जलमस्थि नेत्रयुतो वन्हिः परमधाम्नि च ॥१८२१॥
परमाकाशशब्दांते भासुरीति पदं ततः ।
सोमसूर्याग्निशब्दांते भक्षिणीति ततः पठेत् ॥१८२२॥
आगच्छयुग्मं च पुनर्विशयुग्मं स्वभोग च ।
द्रव्यमन्ते गृह्ण गृह्ण ठद्वयान्तो महामनुः ॥१८२३॥
वामांगुष्ठानामिकाभ्यां धृतेन कलशेन च ।
कलशाद् बिंदुमादाय द्वितीयेनोर्ध्वमुत्क्षिपेत् ॥१८२४॥
ततः कलशवक्त्रं तु पात्रेणाच्छाद्य केनचित् ।
जलोद्धरणपात्रं तु सूक्ष्मं तस्योपरि न्यसेत् ॥१८२५॥
तस्मिन् नमोद्यां सूक्ष्मां चानंदां शांति प्रपूजयेत् ।
चतुर्थ्यन्तां नमोयुक्तां गंधपुष्पाक्षतैः शिवे ॥१८२६॥
न देव्युद्वासनादर्वाग् घटमेनं तु चालयेत् ।
चालितेऽपि जपेद् विद्यां प्रणवं वा शतं तथा ॥१८२७॥
एवं संस्थाप्य कलशं पात्रान् संस्थापयेत् क्रमात् ।
शंखमर्घ भोगपूजाबलिपात्राणि पंच च ॥१८२८॥

स्वदक्षिणादिवामा तं स्थापयेत् क्रमतः सुधीः ।
तत् क्रमं संप्रवक्ष्यामि यथावदवधारय ।
सामान्यार्घजलेनाथ पूर्ववत् मंडलं लिखेत् ॥१८२९॥

त्रिकोणमध्यं षट्कोणं चतुरस्त्रं विलिख्य च ।
मध्ये कामकलां लिख्य विष्टभ्य शंखमुद्रया ॥१८३०॥

त्रितारादि च सर्वत्र मंत्रोद्धारः प्रकीर्तितः ।
श्रीपरांते देवतायाः विशेषार्घ्यपदात् पुनः ॥१८३१॥

मंडलाय नमोन्तोऽयं मंत्रो मंडलपूजने ।
प्रणवादि नमोऽन्तेन मध्यं मूलेन पूज्य च ॥१८३२॥

त्रिकोणं च त्रिभिः कूटैर्वामंदक्षाग्रसंस्थितैः ।
द्विरावृत्त्या च षट्कोणं प्रादक्षिण्येन स्वाग्रतः ॥१८३३॥

चतुरस्त्रे च स्वाग्रादिमध्यान्तं रत्नपंचकम् ।
गगनं च तथा स्वर्गं मर्त्यं पातालमेव च ॥१८३४॥

नागं रत्नांतगं स्वस्वबीजाढ्यं ङेनमोऽन्वितम् ।
एवमभ्यर्च्य षट्कोणे स्वाग्रादिदक्षतः पुनः ॥१८३५॥

षडासनानि च यजेद् गंधपुष्पादिभिः प्रिये ।
सुधार्णवासनं पोताम्बुजासनमतः परम् ॥१८३६॥

आत्मासनं सर्वचक्रासनं सर्वमंत्रासनम् ।
साध्यसिद्धासनं पूज्य पीठानि च यजेत् क्रमात् ॥१८३७॥

उड्यानं चतुरस्त्रेऽर्चेत् वृत्ते च कामरूपकम् ।
जालंधरं च षट्कोणे त्रिकोणे पूर्णशैलकम् ॥१८३८॥

चतुर्थ्यन्तनमोऽन्तेन त्रिताराद्येन पूजयेत् ।
यदि शांभवदीक्षावान् स्वाग्रादिचतुरस्त्रके ॥१८३९॥

मध्यान्तं पुटितैः पंचप्रणवैश्चैव पूजयेत् ।
त्रितारं मूलमुच्चार्य सर्वशक्तिमयीति च ॥१८४०॥

श्रीपरांते देवता च षष्ठ्यंता परिकीर्तिता ।
पीठचतुष्टयात्मान्ते कायेति मडलाय हृत् ॥१८४१॥

समस्तमंडलं चैतेनाभ्यर्च्य मूलमुच्चरन् ।
प्रक्षाल्य च तथाधारं मंत्रमेनं समुच्चरेत् ।
चतुस्तारं तदन्ते श्रीषष्ठ्यंता परदेवता ॥१८४२॥

विशेषार्घ्यपात्रशब्दादाधारायनमस्तथा ।
आधारमेतेन स्थाप्य पूजयेत् मनुनामुना ॥१८४३॥

मं वन्हिमंडलायांते धर्मप्रदपदात् पुनः ।
ङेऽन्तो दशकलात्माहृद् वाक्कूटाद्यः स्मृतो मनुः ॥१८४४॥

ततश्च स्वाग्रमारभ्य प्रादक्षिण्येन यादिकाः ।
अर्चयेद्दश पूर्वोक्ताः प्राणस्थापनपूर्वकाः ॥१८४५॥

संपूज्य क्षालयेत् पात्रमस्त्रेण च यथाभवम् ।
आधारे स्थापयेत् पात्रं मंत्रमेनं समुच्चरन् ॥१८४६॥

चतुस्तारं च श्रीशब्दात् षष्ठ्यंता परदेवता ।
विशेषार्घ्यपात्रमथ स्थापयामीति मंत्रतः ॥१८४७॥

ततो द्वितीयकूटान्ते ह्यमर्कमंडलाय च ।
अर्थप्रदद्वादशान्ते कलात्मा ङेयुतश्च श्री ॥१८४८॥

परान्ते देवतायाश्च विशेषार्घ्यपदात् पुनः ।
पात्राय हृच्चमंत्रेण संपूज्य पात्रमाध्यके ॥१८४९॥

पूर्ववन् मंडलं ध्यात्वा पंचरत्नानि पूज्य च ।
तथैव पंचप्रणवैरभ्यर्च्य भास्करीः कलाः ॥१८५०॥

प्राणस्थापनपूर्वाश्च वृत्ताकारेण स्वाग्रतः ।
प्रादक्षिण्यक्रमात् पूज्यास्तपिन्याद्याः कमादिगाः ॥१८५१॥

ठडान्ताः द्वादशाभ्यर्च्य कलशस्थं जलं पुनः ।
नीत्वोद्धरणपात्रेण मूलान्ते चैव मातृकाम् ॥१८५२॥

विलोमामुच्चरन् पात्रमापूर्य कमलं क्षिपेत् ।
वागुच्चँरस्तत्पुष्पेण तत्त्वमुद्राधृतेन च ॥१८५३॥

पात्रस्थं जलमालोड्य तत्पुष्पं बहिरुत्क्षिपेत् ।
कामवीजेनाष्टगंधमभावे चंदनं क्षिपेत् ॥१८५४॥

अष्टगध तु –

चंदनागरुकर्पूरचोरकुकुमरोचनाः ।
जटामांसो शिलारसात्मकमिति··· ·····॥१८५५॥

आलोडयेत् त्रिधा तत्त्वं विद्ययामृतसंज्ञया ।
गालिनी दर्शयेन् मुद्रां शक्तिबीजं समुच्चरन् ॥१८५६॥

त्रितारशक्तिकूटांते सविन्दुं कर्णमुच्चरेत् ।
सोमांते मंडलायेति कामप्रद च षोडश ॥१८५७॥

कलात्मने श्रीशब्दान्ते षष्ठ्यंता परदेवता ।
विशेषार्घ्यामृतायेति नमोऽन्तेन तमर्चयेत् ॥१८५८॥

पूर्वोक्तं मंडलं तत्र विभाव्याभ्यर्च्य पूर्ववत् ।
तथैव पंचप्रणवैः शांभवीयैश्च पूजयेत् ॥१८५९॥

ततः षोडश सोमस्य समावाह्य कलास्तथा ।
पूजयेत् संस्थितप्राणावृत्ताकारेण स्वाग्रतः ॥१८६०॥

प्रादक्षिण्येन संपूज्य त्रिकोणे पूर्वभाविते ।
अकथादित्रिरेखं च भाव्याग्रकोणतो यजेत् ॥१८६१॥

कूटत्रयं मूलमनोर्बिंदौ कामकलां यजेत् ।
पार्श्वयोर्बिन्दुसंयुक्तौ हक्षौ तत्पृष्ठसंस्थितम् ॥१८६२॥

लकारं पार्श्वयोर्हंसवर्णौ तस्य विभावयेत् ।
पुष्पाक्षतयुतां योनिमुद्रां बध्वाथ साधकः ॥१८६३॥

गुरूपदिष्टमार्गेण मूलाधाराच्च कुंडलीम् ।
षट्चक्रभेदक्रमतः सहस्रारं नयेत् ततः ॥१८६४॥

चिच्चन्द्रमंडलस्थेन सामरस्यं विभाव्य च ।
शिवेन च तयोर्जातामानंदामृतनिर्भरीम् ॥१८६५॥

संचित्य राजदंतविवरान् नयनवर्त्मना ।
निःसृत्य योनिसंबद्धकरेणानीय तां पुनः ॥१८६६॥

त्रितारमूलविद्यान्ते मंत्रमेनं समुच्चरेत् ।
ब्रह्मांडखंडसंभूतमशेषरससंभृतम् ॥१८६७॥

आपूरितं महापात्रं पीयूषरसमावह ।
वाग्भवं पावनो भूमिः पुष्टिर्बिंदुसमन्विता ॥१८६८॥

स्थितिः स पावकानुग्रहार्धेन्दुसमलंकृता ।
स्थिरार्घीशेन्दुसंयुक्ता श्वेता बिन्दुयुगान्विता ॥१८६९॥

अथामृते पदं ब्रूयात् तत् पश्चादमृतोद्भवे ।
अथामृतेश्वरियुता पश्चादमृतवर्षिणी ॥१८७०॥

अमृतं श्रावययुगं द्विठान्तो द्रव्यशुद्धिकृत् ।
अमृतेशोमनुः प्रोक्तः पंचत्रिंशद्भिरक्षरैः ॥१८७१॥

अनेनार्घ्यामृते पुष्पं निक्षिप्यामृतमुच्चरन् ।
धेनुमुद्रां प्रदर्श्याथ त्रितारमष्टवर्णकम् ॥१८७२॥

प्रणवं च तथा माया हंसः सोऽहं शुचिप्रिया ।
अनेनाष्टार्णमंत्रेण तत्त्वं त्रिरभिसंत्र्य च ॥१८७३॥

मातृकां बिंदुरहितां पात्रे त्रिःसंजपेत् पुनः ।
मूलतृतीयकूटेन दशधा चाभिमंत्रयेत् ॥१८७४॥

तथा भैरवभैरव्योः कूटमुच्चार्य पूजयेत् ।
मिथुनं वरुणस्याथ स्वस्वबीजयुतं यजेत् ॥१८७५॥

प्रासादं च परायुक्तं मनुर्बिंदुविभूषितम् ।
एतद् वरुणबीजं स्यात् वारुण्याश्च परादिकम् ।
बालामंत्रेण नित्यानां मंत्रैरप्यभिमंत्रयेत् ॥१८७६॥

सकृत् सकृदथोर्ध्वाम्नायी चेद् बीजेन मंत्रयेत् ।
पराप्रासादसंज्ञेन प्रासादपरया तथा ॥१८७७॥

विद्यया कुलयोगिन्या मंत्रयेच्चरणोक्षितः ।
परानुत्तरविद्यास्थस्तथा शक्त्याभिमंत्रयेत् ॥१८७८॥

शक्त्या सौरिति शक्तिबीजेन ।

षडन्वये शांभवे च दीक्षितो विद्यया तया ।
त्रिःत्रिस्समभिमंत्र्याथ निर्वाणाघोरदीक्षितः ॥१८७९॥

तत् तत् पादुकयामंत्र्य ततस्तारकलां यजेत् ।
दशसृष्ट्यादिका हेतुमध्ये च ब्रह्मणः कलाः ॥१८८०॥

समावाह्य स्थितप्राणाः क्रमशः पूजयेच्च ताः ।
सृष्टिऋद्धिः स्मृतिर्मेधा कांतिर्लक्ष्मी द्युतिः स्थिरा ॥१८८१॥

स्थितिः सिद्धिरिति प्रोक्ता कचवर्गकला दश ।
अकारप्रभवाश्चैताः पूज्यैतां च ऋचां जपेत् ॥१८८२॥

हंसः शुचिषदिति च ततो विष्णुकला यजेत् ।
उकारात्स्थितये जाताः जराद्यायाः प्रकीर्तिताः ॥१८८३॥

जरा च पालिनी शांतिरीश्वरी रतिकामिके ।
वरदा ह्लादिनी प्रीतिः दीर्घाःस्युष्टतवर्गजाः ॥१८८४॥

एताः स्मृत्वा प्रतद्विष्णुरित्यृच प्रयजेत् पुनः ।
मकारप्रभवाद्रुद्राज्जाताः सहृतये कलाः ॥१८८५॥

स्मरणीया जले तस्मिन् तीक्ष्णाद्याः क्रमशश्च ताः ।
तीक्ष्णा रौद्री भया निद्रा तंद्रा क्षुत् क्रोधिनी क्रिया ॥१८८६॥

उत्कारी मृत्युरित्युक्ता पयवर्गकलाः दश ।
सकृदन्ते त्र्यंबकं च प्रजप्य च पुनर्यजेत् ॥१८८७॥

बिंदोरीश्वरसंभूतास्तिरोधाना पयाः कलाः ।
पीताद्यास्ताश्चतस्रस्तु प्राणस्थापनपूर्वकाः ॥१८८८॥

पीता श्वेतारुणा चैव असिता च षवर्गजाः ।
ततस्तत्पदनाम्नीं च ऋचां सकृदनुच्चरेत् ॥१८८९॥

ततो नादान् निवृत्त्याद्याः सदाशिवसमुद्भवाः ।
पात्रस्योपरि संपूज्याः षोडशानुग्रहात्मिकाः ॥१८९०॥

निवृत्तिश्च प्रतिष्ठा च विद्या शांति कुलेश्वरि ।
इंधिका दीपिका चापि रेचिका मोचिका परा ॥१८९१॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनो पुनः ।
व्यापिनी व्योमरूपा च षोडश स्वरजाः कलाः ॥१८९२॥

प्रजप्य विष्णुर्योनिं तु जपित्वा ऋक्त्रयं जपेत् ।
अखंडैकरसानंदां वाग्भवाद्यां ततो जपेत् ॥१८९३॥

कामाद्यामकुलस्थां तु शक्तिबीजादिकां पुनः ।
तद्रूपिण्यैकरस्यां च जपित्वा प्रजपेत् पुनः ॥१८९४॥

अमृतेशीं पंचत्रिंशदर्णां वारत्रयं तथा ।
वाग्भवं वदयुग्मं च वाग्वादिनि च वाग्भवम् ॥१८९५॥

कामराजं च क्लिन्ने च क्लेदिनि क्लेदयेति च ।
महाक्षोभं कुरुयुगं कामराजमतः परम् ॥१८९६॥

तार्तीयं मोक्षमंते च कुरुयुग्मं वदेत् ततः ।
स्यात् प्रसादपराचान्ते पराप्रासादसंज्ञकम् ॥१८९७॥

दीपिनी मनुरित्युक्तः सप्तत्रिंशद्भिरक्षरैः ।
अनेन पंचधामंत्र्य मूलेनाष्टाभिमंत्र्य च ॥१८९८॥

योनिधेनुमहायोनित्रिशूलकमलाभिधाः ।
क्षोभिण्यादि नव प्रोक्ताः पाशाद्याश्चतुरः स्मृताः ॥१८९९॥

अष्टादशेति संदर्श्य मुद्रास्तं प्रणमेत् तया ।
प्रणाममुद्रया पश्चात्पुष्पेणोद्धृत्य तज्जलम् ॥१९००॥

कलशे निःक्षिपेत् तस्मात् जलमादाय संजपन् ।
मूलमात्मानमथ च यागवस्तूनि प्रोक्ष्य च ॥१९०१॥

श्रीपात्रादीनि पात्राणि स्थापयेदुक्तवर्त्मना ।
पात्राणां मंडलं पूजा सामान्यार्घवदोरितम् ॥१९०२॥

महाकालसंहितायां विशेषः—

श्रीपात्रस्य च ये मंत्रास्ते मंत्राः सर्वपात्रगाः ।
श्रीपात्रस्य क्रिया या सा क्रिया सा सर्वपात्रगा ॥१६०३॥

तादृक् क्रियाद्यशक्तौ तु सामान्येनापि पूजयेत् ।
शक्तेरावाहनं शक्तौ गुरोरपि गुरौ तथा ॥१६०४॥

परिवारान् भोगपात्रे वीरे त्वावरणादिकाः ।
कौलिकान् कुलपात्रे च समावाह्य यजेच्छनैः ॥१६०५॥

आपूर्य कलशस्थेन वारिणा मूलमुच्चरन् ।
अग्निब्रह्मेन्दुसब्रह्म विष्णुरुद्रेशसच्छिवैः ॥१६०६॥

पंचर्ग्भिश्च त्रिभिश्चैवामृतेशोदीपिनीजपैः ।
एकद्वित्रिचतुःपंचद्विश्चतुर्भिरथेश्वरि ॥१६०७॥

तत् तत् पात्रं च संस्पृष्ट्वा मंत्रयेदेवमर्चकः ।
धेनुं योनिमथादर्श्यावगुंठ्य बीजमुच्चरन् ॥१६०८॥

तत् तद् योग्य च पात्रं स्यात् तत् तत् पूजासु योजयेत् ॥१६०९॥

तत् तच्च प्रोक्षणीपात्रात् परतः स्थापयेत् क्रमात् ।
तत्तन्मंत्रेणाभिमंत्र्य प्रणमेद् योनिमुद्रया ॥१६१०॥इति।

इति श्रीमदागमरहस्ये सत्संग्रहे कलशादिपचसस्कारो
नामाष्टमः पटलः । आदित षट्त्रिंशत् ३६ ॥

## अथ नवमः पटलः ।

समर्थोऽन्यानि पात्राणि क्रमात् संस्थापयेद् यथा ।

कुलावल्याम्—

नवांतकं महाकल्पं तथा सप्तांतकं मतम् ।
मध्यमं पंचकं कल्पं कनिष्ठं च त्रिकं मतम् ॥१६११॥

श्रीदेवीगुरुभोगानां पात्रं तु त्रितयं मतम् ।
योगिनीबलिपात्राभ्यां पंचकं समुदीरितम् ॥१६१२॥

शक्तिवीरयुतं चैतत् सप्तांतकमिहोच्यते ।
पाद्याचमनपात्राभ्यां नवमं कल्पमुत्तमम् ॥१६१३॥

घटश्रीपात्रयोर्मध्ये गुरुपात्रक्रमेण च ।
स्थापयेत् सर्वपात्राणि संप्रदायानुरोधतः ॥१६१४॥

वामावर्त्तक्रमेणैव गौडे संस्थापनं मतम् ।
दक्षावर्त्तेन काश्मीरे केरले वर्त्तुलेन च ॥१६१५॥

पूर्वकेरलके दक्षमुत्तरे वामवर्त्तुलम् ।
संप्रदायविधानेन कर्तव्यं च महेश्वरि ॥१६१६॥

घटांते श्रीगुरोः पात्रं भोगपात्रं ततः परम् ।
शक्तिपात्रं तदन्ते तु योगिनीनां तदन्तके ॥१६१७॥

वीरपात्रं तदन्ते तु बलिपात्रमतः परम् ।
पाद्याचमनयोश्चैव पात्रं नवकमीश्वरि ।
गौडे सर्वासु विद्यासु कालीकुलवदाचरेत् ॥१६१८॥

कालीकुले तु विशेषार्घ्यस्यैव श्रीपात्रसञ्ज्ञा ।

काश्मीरे सर्वविद्यासु श्रीकुलोक्तवदीरितम् ।
सामान्यं च विशेषार्घ्यं श्रीपात्रं गुरुपात्रकम् ॥१६१९॥इति।

केरले पूर्वके ज्ञेयं क्रमं श्रीकुलसंज्ञकम् ।
उत्तरे केरले कालीकुलक्रममुदीरितम् ॥१६२०॥

केरले च देवताग्रे स्थापितपात्रस्यैव श्रीपात्रसञ्ज्ञेति ।

एवं पात्राणि संस्थाप्य स्वे स्वे कर्मणि योजयेत् ।
श्रीपात्रस्याधिकारी तु स्वयमेव न चेतरः ॥१६२१॥

शक्तेस्तु शक्तिपात्रं स्याद् गुरुपात्रं गुरोरपि ।
भोगपात्रं सुतादीनां शिष्याणां वीरपात्रकम् ।
कुलपात्रं कौलिकानां निर्णयः प्रोक्त ईदृशः ॥१६२२॥

यच्च वृहत् तन्त्रराजे कौलसर्वस्वे च—

विशेषार्घ्येण दिव्यौघान् गुरुपात्राद् गुरूंस्ततः ।
पुरुषं भैरवेणैव श्रीपात्रेण महेश्वरीम् ॥१६२३॥

आनन्दभैरवं देवं भैरवेण प्रतर्पयेत् ।
वलिना तु गणेशादीन् योगिन्या योगिनीं शिवे ॥१६२४॥

वीरपात्रेण वीरांश्च शक्त्या ब्राह्म्यादि मातरम् ।
शक्तींश्चैव तथा भोगपात्रेणात्मचतुष्टयम् ॥१६२५॥

स्वमंत्रर्षिं तथा त्र्यौघान् तथैव निजपादुकाम् ।
शुद्धद्रव्येण तेनापि गंधपुष्पयुतैरपि ॥१६२६॥

न्यासोक्तमूलमंत्रैश्च स्वात्मानं पूज्य च प्रिये ।
मूर्ध्नि श्रीगुरुपङ्क्तिं च मूलाधारे स्वपादुकाम् ॥१६२७॥

दिव्यौघे चादिनाथश्च तच्छक्तिश्च सदाशिवः ।
तत्पत्नीचेश्वरस्तस्य भार्यारुद्रश्च तद्वधूः ॥१६२८॥

विष्णुश्च तत् प्रिया ब्रह्मा तत् कांता द्वादशेरितः ।
सिद्धौघे सनकश्चैव सनंदनसनातनौ ।
सनत्कुमारश्च सनत्सुजातश्च ऋभुक्षकः ॥१६२९॥

दत्तात्रेयो रैवतको वामदेवस्ततः परम् ।
ततो व्यासः शुकश्चापि एकादश समीरिताः ॥१६३०॥

मानवौघे नृसिंहश्च महेशो भास्करस्तथा ।
महेन्द्रो माधवो विष्णुः षडेते परिकीर्तिताः ॥१६३१॥

नामान्ते योजयेद् देवि दिव्यौघे परमं शिवम् ।
महाशिवं च सिद्धौघे मानवौघे सदाशिवम् ॥१६३२॥

हृत्पद्मे स्वेष्टदेवीं च सांगां सावरणां तथा ।
मूलाधारे तथैवात्मपादुकां पूज्य तर्पयेत् ॥१६३३॥

एषः पूर्णाभिषिक्तस्य क्रमस्त्वन्यस्य चोच्यते ।
कल्पोक्तौघक्रमं स्वं स्वं देवं भैरवभैरवीम् ॥१६३४॥

पूज्य संतर्पयेद् देवि ततस्तत्त्वचतुष्टयम् ।
मंत्रयोगेन स्वीकृत्य स्मृत्वा ऋष्यादिकं पुनः ॥१६३५॥

ध्यात्वा देवीं स्वमात्मानं विचिंत्य विगतैनसम् ।
शिवरूपं निजं देवं प्रार्थ्य पूजां समारभेत् ॥१६३६॥

आदौ पीठं समभ्यर्च्य देवीमावाहयेत् प्रिये ।
महापद्मवनान्तस्थे देवेशीत्यादिमंत्रकैः ॥१६३७॥

विधानेनार्चयेत् सम्यक् षोडशैरुपचारकैः ।
सांगां सावरणां देवीं पूज्य संतर्प्य साधकः ॥१६३८॥

देवता पुरतो देवि गुरुपङ्क्तिं च पूजयेत् ।
मध्यमांगुष्ठयोगेन तर्पयेत् कुलसंततिम् ॥१६३९॥

संप्रदायक्रमेणैव पंच षड् वा वलिं दिशेत् ।
अभिषिक्तो दिशेत् षट्कमितरे वलिपंचकम् ॥१६४०॥

वटुको योगिनी चैव क्षेत्रपालो गणेश्वरः ।
सर्वभूतश्च पंचैते वलिदेवाः प्रकीर्तिताः ॥१६४१॥

राजराजेश्वरः षष्ठस्तत् प्रकारस्त्विहोच्यते ।
सर्वसाधारणं त्वत्र वलिमंडलमुत्तमम् ।
त्रिकोणं वृत्तसंयुक्तं चतुरस्रं मनोहरम् ॥१६४२॥

सामान्यार्घजलेनैतदोशानादिक्रमेण तु ।
वटुकाय नमो वान्ते गांते गणपतये तथा ॥१६४३॥

आदौ संविदुयान्तेन योगिनीभ्यो नमःस्मरेत् ।
क्षामन्ते क्षेत्रपालाय नमो मंत्रचतुष्टयम् ॥१६४४॥

एतैर्मंत्रै महेशानि मंडलानि प्रपूज्य च ।
सर्वविघ्नविनाशाय सान्नपात्राणि तत्र तु ॥११४५॥

स्थाप्यं तैस्तैश्च मंत्रैश्च तत् तद् वलिमथो दिशेत् ।
एह्येहि देवीपुत्रान्ते वटुकान्ते च नाथ च ॥१६४६॥

कपिलान्ते जटाभारभासुरांते त्रिनेत्र च ।
ज्वालामुख ततः सर्वविघ्नान् नाशय नाशय ॥१६४७॥

सर्वोपचारसहितं वलिं गृह्णपदद्वयम् ।
वह्निजायावधिर्मंत्रो वटुकस्य उदाहृतः ॥१६४८॥

वटुकस्य च तर्जन्या सहागुष्ठेन वा प्रिये ।
ततश्चैतेन मनुना योगिन्यै वलिमादिशेत् ॥१६४६॥

ऊर्ध्वं ब्रह्माण्डतोवान्ते दिव्यन्ते गगनेति च ।
तले भूपदमालिख्य तले चैव तु निष्कले ॥१६५०॥

वापातालेन लेवान्ते सलिलादौ च वा लिखेत् ।
पवनान्ते च योर्यत्र कुत्रान्ते च स्थिता इति ॥१६५१॥

वाक्षेत्रे चैव पीठोपपीठादिषु समालिखेत् ।
चान्ते कृतपदाधूप ततो दीपादिकेन च ॥१६५२॥

प्रीता देव्यः सदानोऽन्ते शुभशब्दमुदीरयेत् ।
वल्यन्ते विधिना चैव पातु वीरेन्द्र संलिखेत् ॥१६५३॥

वंद्याश्च यां समालिख्य योगिनीभ्योऽग्निवल्लभा ।
तर्जनीमध्यमानामांगुष्ठैर्योनिं विधाय च ॥१६५४॥

वलिदानविधौ मुद्रां योगिनीभ्यः प्रदर्शयेत् ।
ततो वलिं दिशेच्चैव क्षेत्रेशाय समाहितः ।
षड्दीर्घस्वरभेदेन क्षकारं भेदयेत् प्रिये ॥१६५५॥

कवचं स्थानशब्दान्ते क्षेत्रपालेति कीर्तयेत् ।
सर्वकामान् पूरयाग्निवल्लभा क्षेत्रपो मनुः ॥१६५६॥

वामांगुष्ठानामिकाभ्यां क्षेत्रपालवलिर्मतः ।
एवं क्षेत्रेशमभ्यर्च्य गणनाथाय वै दिशेत् ॥१६५७॥

गां गीं गूं गं समालिख्य ङेन्तो गणपतिस्तथा ।
वरशब्दं द्विधादांते ततः सर्वजनं पदम् ॥१६५८॥

मे वशं चानयप्रांते ततः सर्वोपचारतः ।
सहितं वलिं गृह्ण गृह्ण स्वाहान्तश्च मनुः प्रिये ॥१६५६॥

वामहस्तस्य मुष्टिं तु बध्वा चैव तु मध्यमा ।
गजवक्त्राकृतिर्देवि वलिमुद्रा गणेशितुः ॥१६६०॥
सर्वभूतवलिं दद्यादर्धान्नसलिलान्वितम् ।
तारं मायां सर्वशब्दाद् विघ्नकृद्भ्यः समुच्चरेत् ॥१६६१॥
ततश्च सर्वभूतेभ्यो हुं स्वाहेतीति मंत्रतः ।
दद्याद् वलिं वामहस्तमुद्रया तत्त्वसंज्ञया ।
एवं पंचवलिं दत्वा चापोशानं ततश्चरेत् ॥१६६२॥ इति ।

षड्वलिपक्षेतु विशेष. श्रीकुलार्णवे—

यावन्नो वटुके दद्यात्तावन्नैव कुलेश्वरि ।
तृप्यंति देवताः सर्वाः स्मरणाद् यजनादपि ॥१६६३॥
वटुकादीन् यजेत् तस्माद् गंधपुष्पासवामिषैः ।
पश्चिमे वटुकं दद्यादुत्तरे योगिनीवलिम् ॥१६६४॥
पूर्वे भूतवलिं दद्यात् क्षेत्रपालं च दक्षिणे ।
राजराजेश्वरं मध्ये पूजयेत् कुलनायिके ॥१६६५॥
अंगुष्ठानामिकाभ्यां तु वटुकस्य वलिः स्मृतः ।
तर्जनीमध्यमानामांगुष्ठैः स्याद् योगिनीवलिः ॥१६६६॥
अंगुलोभिश्च सर्वाभिरुक्तो भूतवलिः प्रिये ।
अंगुष्ठातर्जनीभ्यां तु क्षेत्रपालवलिर्भवेत् ।
अंगुष्ठामध्यमाभ्यां तु राजराजेश्वरस्य च ॥१६६७॥
तान् मंत्रान् संप्रवक्ष्यामि शृणुष्व कुलनायिके ।
यैः समर्पितमात्रेण सर्वे नश्यन्त्युपद्रवाः ॥१६६८॥
तारत्रयं ततो देवीपुत्राच्च वटुकेति च ।
नाथान्ते कपिलजटाभारभास्वरपिंगल ॥१६६९॥
त्रिनेत्रोऽतिपदं पश्चाज् ज्वालामुखपदं ततः ।
इमां पूजां वलिं गृह्णयुगं पावकवल्लभा ॥१६७०॥
उक्तो वटुमनुश्चतुश्चत्वारिंशद्भिरक्षरैः ।
वलिदानेन संतुष्टो वटुकः सर्वसिद्धिदः ॥१६७१॥

शांति करोतु मे नित्यं भूतवेतालसेवितः ।
तारत्रयं ततः सर्वयोगिनीभ्यः पदं वदेत् ॥१६७२॥

तत् पश्चात् सर्वभूतेभ्यः सर्वभूताधिवर्त्ति च ।
वंचिनीभ्यो डाकिनीभ्यः शाकिनीभ्यस्ततः परम् ॥१६७३॥

त्रैलोक्येति पदं चैव वासिनीभ्य इमां वदेत् ।
पूजां वलिं गृह्णयुग्मं स्वाहांतो योगिनीमनुः ॥१६७४॥

कथितोऽयं कुलेशानि द्विपंचाशद्भिरक्षरैः ।
या काचिद् योगिनी रौद्रा सौम्या घोरतरा परा ॥१६७५॥

खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ।
तारत्रयं वदेत् सर्वभूतेभ्यः सर्व एव च ॥१६७६॥

पश्चाद् भूतपतिभ्यो हृदुक्तः सप्तदशाक्षरः ।
भूता ये विविधाकारा दिव्यभौमांतरिक्षगाः ॥१६७७॥

पातालतलसंस्थाश्च शिवयोगेन भाविताः ।
ध्रुवाद्याः सत्यसंधाश्च इंद्राद्याश्च व्यवस्थिताः ॥१६७८॥

तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं वलिम् ।
तारत्रयं वदेद् देवि युग्मं देवीपदं ततः ॥१६७९॥

पुत्र वटुकनाथाय पश्चादुच्छिष्टहारिणे ।
गृह्णयुग्मं क्षपणकक्षेत्रपालपदं ततः ।
सर्वविघ्नान् पदं पश्चा न्नाशयद्वितयं पुनः ॥१६८०॥

सर्वोपचारसहितामिमां पूजां वलिं वदेत् ।
गृह्ण युग्मं द्विठान्तोऽयं क्षेत्रपालमनुः प्रिये ॥१६८१॥

चतुःषष्ट्यक्षरैः प्रोक्तः सर्वसिद्धिप्रदायकः ।
योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किंकरः ॥१६८२॥

प्रीतोऽयं वलिदानेन सर्वरक्षां करोतु मे ।
तारत्रयं वदेदाद्यं श्रीप्रसादपरामनुः ॥१६८३॥

ह्रां ह्रीं ह्रूं च युगांताय भैरवाधिष्ठिताय च ।
अक्षोभ्यानंदतत्पश्चादुदयाभीष्टतः परम् ॥१६८४॥

सिद्ध्यर्थं पदमाभाष्य पश्चादवतरद्वयम् ।
क्षेत्रपालपदं पश्चात् महाशस्त्रपदं ततः ॥१६८५॥

वदेद् वटुकनाथेति देवीपुत्रपदं ततः ।
मातृपुत्रपदं पश्चात् कुलपुत्रपदं वदेत् ॥१६८६॥

सिद्धिपुत्रपदं चास्मिन् स्थानाधिपतये ततः ।
अस्मिन् ग्रामाधिपतयेऽस्मिन् देशाधिपतये ततः ॥१६८७॥

मेघनादपदं पश्चात् प्रचंडोग्रपदं वदेत् ।
कपालीभीम तत्पश्चाद् भीषणेतिपदं वदेत् ॥१६८८॥
स्यात् सर्वविघ्नाधिपते इमां पूजां वलिं वदेत् ।
गृहणयुग्मं कुरुयुगं मुरुच्चूर्णययुग्मकम् ॥१६८९॥

ज्वलयुक् प्रज्ज्वलयुगं सर्वविघ्नान्निवारय ।
नाशयद्वितयं क्षां क्षीं तत् पश्चात् क्षूमितीरयेत् ॥१६९०॥

क्षेत्रपालाय वौषट् षट्षष्ट्युत्तरशताक्षरः ।
तारत्रयं वदेत् पश्चादमुकक्षेत्रपाल च ॥१६९१॥

राजराजेश्वर इमां पूजां वलिमतः परम् ।
गृह्णयुग्मं द्विठान्तार्णैरष्टाविंशतिभिः स्मृतः ॥१६९२॥

अनेन वलिदानेन वटुवर्गसमन्वितः ।
राजराजेश्वरो देवो मे प्रसीदतु सर्वदा ॥१६९३॥

अत्र स्थानक्षेत्रपाल पचाशतक्षेत्रपालमध्ये पूर्वार्द्धोक्तानुष्ठान-प्रकरणतो ज्ञेयः ।

यथाधिकारमेवं हि वलिं दत्वा यथाविधि ।
आपोशानोत्तरं दत्वा तांबूलान्तं निवेद्य च ॥१६९४॥

दीपान् सुपिष्टजान् कृत्वा वेदांगुलमितोन्नतान् ।
तथा डमरुकाकारान् त्रिकोणानतिशोभनान् ॥१६९५॥

कर्षाज्यग्राहिणः कुर्यात् नवसप्ताथ पंच वा ।
रत्नेश्वर्याभिमंत्र्याथ मूलेनाप्यभिमंत्र्य च ॥१९९६॥

त्रिधा देव्युपरि भ्राम्य कुलदीपान् निवेदयेत् ।
समस्तचक्रचक्रेशियुते देवि नवात्मिके ॥१९९७॥

आरात्रिकमिदं देवि गृहाण मम सिद्धये ।
कुलदीपान् प्रदर्श्याथ यथोक्तं जपमाचरेत् ॥१९९८॥

ततः समर्प्य श्रीदेव्यै पठेच्च कवचादिकम् ।
स्तुत्वा नत्वा प्रणम्येष्टदेवतां कृत्यमर्पयेत् ॥१९९९॥

इतः पूर्वादिमनुना तन्मंत्रमधुनोच्यते ।
तारत्रयमितः पूर्वं प्राणबुद्धि ततः परम् ॥२०००॥

देहधर्माधिकारान्ते जाग्रत्स्वप्नसुषुप्तिषु ।
मनसा च ततो वाचा कर्मणा तत्पदं वदेत् ।
हस्ताभ्यां च ततः पद्भ्यामुदरेण ततः परम् ॥२००१॥

शिश्ना च यत् स्मृतं पश्चाद् यदुक्तं यत् कृतं भवेत् ।
तत् सर्वं मूलदेवांते तत् समर्पितमस्त्विति ॥२००२॥

स्वाहांतो मनुरित्युक्तः त्रिसत्यत्यक्षरः प्रिये ।
ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे ॥२००३॥

तव कृत्यमिदं सर्वमिति मत्वा क्षमस्व मे ।
एवं संप्रार्थ्य देवेशी स्तुत्वा नत्वा तु भक्तितः ॥२००४॥

प्रधानदेवतामूर्त्तेः परिवारान् समुद्वसेत् ।
ततः सावरणां देवीमुद्वसेत् स्वहृदंबुजे ॥२००५॥

शेषिकायै समर्प्यार्घ्यं स्थलं मंत्रेण शोधयेत् ।
स्याद् वाग्भवं हृदुच्छिष्टचाण्डालि तदनंतरम् ॥२००६॥

वदेन् मातंगि सर्वान्ते वशंकरि ठयुग्मकम् ।
एकविंशतिभिर्वर्णैः शेषिकामनुरीरितः ॥२००७॥

मंत्रेणानेन निर्माल्यं शेषिकायै समर्पयेत् ।
ततश्चोच्छिष्टमातंगीं ध्यायेल्लोकैकमोहिनीम् ॥२००८॥

वीणावाद्यविनोदगीतनिरतां नीलांशुकोल्लासिनीं
बिंबोष्ठीं नवयावकार्द्रचरणामाकीर्णनीलालकाम् ।
हृद्यांगीं नवरत्नकुंडलधरां माणिक्यभूषोज्ज्वलां
मातंगीं प्रणतोऽस्मि तां स्मितमुखीं देवीं शुकश्यामलाम् ॥२००९॥

एवं ध्यात्वा प्रसन्नात्मा गुरुं संपूजयेत् ततः ।
कराभ्यां पात्रमुद्धृत्य सद्वितीयं समर्पयेत् ॥२०१०॥

स्वसंप्रदायससिद्धैर्वीरैः सह समर्चयेत् ।
अन्योऽन्यं वंदनं कृत्वा पिबेत् तत्तदनुज्ञया ॥२०११॥

सव्येनोद्धृत्य पात्रं तु मुद्रां कृत्वापसव्यतः ।
यथाविधि द्वितीयेन गृह्णीयान् मंत्रमुच्चरन् ॥२०१२॥

पिशितं माषमात्रं तु मद्यं चुलुकसंमितम् ।
आत्मदेहत्रयं तत्त्वत्रयेणाथ विशोधयेत् ॥२०१३॥

तरुणोल्लाससहितः प्रसन्नवदनेक्षणः ।
प्रकृत्याद्यैः पृथिव्यन्तैश्चतुर्विंशतिभिः शिवे ॥२०१४॥

स्वरैश्च शुद्धतत्त्वैश्च वाग्भवेन कुलेश्वरि ।
संयुक्तेनात्मतत्त्वेन स्थूलदेहं विशोधयेत् ॥२०१५॥

मायादिपुरुषांतैश्च शुद्धाशुद्धैश्च सप्तभिः ।
तत्त्वैः स्पर्शाह्वयं वर्णैः कामराजेन मंत्रवित् ॥२०१६॥

युक्तेन विद्यातत्त्वेन सूक्ष्मदेहं विशोधयेत् ।
शुद्धैः शिवादिविद्यान्तपंचतत्त्वैश्च व्यापकैः ॥२०१७॥

परया शिवतत्त्वेन परदेहं विशोधयेत् ।
षट्त्रिंशत्तत्त्वसहितं मालिन्या बालया प्रिये ॥२०१८॥

तनुं त्रयाश्रयं जीवं सर्वतत्त्वेन शोधयेत् ।
एवं तत्त्वत्रयज्ञानं गुरोर्ज्ञात्वा य आचरेत् ॥२०१९॥

स जीवन्नेव मुक्तः स्यादिति शंकरभाषितम् ।
तदन्ते च महेशानि कुर्याद् वलिविसर्जनम् ॥२०२०॥

पूजागृहाद् बहिः कुर्यात् त्रिकोणं तु गृहान्तरे ।
गंधपुष्पाक्षतैः पूज्य ध्यायेदुच्छिष्टभैरवम् ॥२०२१॥

गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं ध्यायेत् सर्वविघ्ननिवारणम् ॥२०२२॥

तारत्रयं समुच्चार्य पश्चादुच्छिष्टभैरव ।
एहियुग्मं वलिं गृह्णयुगं हुं फट् द्विठान्तकः ॥२०२३॥

वल्युद्वासनमंत्रः स्याद् द्वाविंशतिभिरक्षरैः ।
शांतिस्तवं पठेत् पश्चात् तर्पयन्नलिबिंदुभिः ॥२०२४॥

शातिस्तव स्तोत्रपटले लिखाम ।

एवं कृत्वा महेशानि विहरेद् भैरवो यथा ।
देवीपर्वदिने चैवं वीरशक्तिसमावृतः ॥२०२५॥

प्रीणयेद् भुवनेशानीं चक्रपूजाविधानतः ।
ऐहिकामुष्मिकीं सिद्धिं साधको लभते ध्रुवम् ॥२०२६॥इति।

देवीपर्वाणि यथा कुलार्णवे—

कृष्णाष्टमी चतुर्दश्यावमावास्या च पूर्णिमा ।
संक्रान्तिः पंचपर्वाणि तेषु पुण्यदिनेषु च ॥२०२७॥

गुरुजन्मदिने प्राप्ते तद्गुरोस्तद्गुरोरपि ।
मानवौघादिपूजां च स्वजन्मदिवसेऽपि वा ।
संपत्तौ च जये लाभे तपोदीक्षाव्रतोत्सवे ॥२०२८॥

पीठोपगमने वीरपीठस्थजनदर्शने ।
देशिकागमने पुण्यतीर्थे दैवतदर्शने ॥२०२९॥

एवमादिषु देवेशि विशेषदिवसेषु च ।
यथाबलं यथाश्रद्धा यथाद्रव्यं यथोचितम् ॥२०३०॥

यथाकालो यथादेशस्तथा पूजां समाचरेत् ।
स्वाचार्येण तथान्येन कारयेत् तत् क्रमार्चनम् ॥२०३१॥

स्वयं वा पूजयेद् देवि वृंदपूजापुरःसरम् ।
सत्यलोकमवाप्नोति पुनरावृत्तिवर्जितः ।
न कुर्यात् कौलिको मोहाद् देवताशापमाप्नुयात् ॥२०३२॥ इति ।

विशेषदिवसास्तु यामले—

भाद्रे शुक्लाष्टमी चैवाश्विने कृष्णा चतुर्दशी ।
कार्तिके नवमी शुक्ला मार्गजे शुक्लाऽथ पंचमी ॥२०३३॥

पौषी च पूर्णिमा तद्वन्माघे शुक्ला चतुर्दशी ।
फाल्गुनैकादशी कृष्णा चैत्रकृष्णात्रयोदशी ॥२०३४॥

तृतीया माधवे शुक्ला ज्येष्ठशुक्लादशम्यपि ।
द्वादश्याषाढकृष्णा च ह्यमावास्या च श्रावणी ।
एतानि देवीपर्वाणि ह्येतास्वर्च्चा महानिशि ॥२०३५॥

अन्यच्च कौलसर्वस्वे—

चैत्रे शुक्ला तु प्रतिपत् ज्येष्ठे शुक्लतृतीयका ।
भाद्रे च द्वादशीशुद्धा तृतीया द्वादशे तथा ॥२०३६॥

चैत्रे तु नवमीशुक्ला कृष्णाष्टमी नभस्यपि ।
आषाढे शुक्लदशमी द्वितीया मार्गशीर्षके ॥२०३७॥

यथाक्रमेण ज्ञातव्या जयन्त्यः क्रमशो बुधैः ।
संक्रमो ग्रहणं देवि भौमं च करसंयुतम् ॥२०३८॥

दारुणातिथिराख्याता त्रैलोक्यरक्षिणी परा ।
तृतीया चैत्रमासीया चित्राभसंयुता यदि ।
अर्धरात्रे यदा योगस्तदा सा शक्तितोषिणी ॥२०३९॥इति।

अथ रात्रिनिर्णयः शक्तिसंगमे—

वीररात्रि महारात्रिः कालरात्रिस्तथैव च ।
मोहरात्रि र्घोररात्रिः क्रोधरात्रिस्तथा पुनः ॥२०४०॥

तथैव चाचलारात्रिस्तारारात्रिस्तथैव च ।
शिवरात्रि र्दिव्यरात्रि र्दारुणा च यथाक्रमात् ।
चतुर्दशीसंक्रमश्च कुलर्क्षे कुलवासरे ॥२०४१॥

अर्द्धरात्रौ यदा योगो वीररात्रिः प्रकीर्तिता ।
शुक्लाष्टमी चाश्विनस्य नवरात्रं तु तस्य वै ॥२०४२॥

महारात्रि र्महेशानि कालरात्रिं शृणु प्रिये ।
दीपोत्सवचतुर्दश्यां त्वमाया योग एव च ॥२०४३॥

कालरात्रि र्महेशानि ताराकाली प्रियंकरी ।
जन्माष्टमी महेशानि मोहरात्रिः प्रकीर्तिता ॥२०४४॥

भाद्रमासे कृष्णपक्षे चार्धरात्रे च सा स्मृता ।
मार्गशीर्षे तथा मासे कृष्णाष्टम्यां महेश्वरि ॥२०४५॥

महाकालीस्वरूपेयं घोररात्रिः प्रकीर्तिता ।
चैत्रमासे नवम्यां च शुक्लपक्षे च भूसुते ॥२०४६॥

क्रोधरात्रि र्महेशानि तारारूपा च सा स्मृता ।
प्राप्ते फाल्गुनके मासि कृष्णैकादशिका तु या ॥२०४७॥

भृगुभौमयुता चेत् स्यादचलारात्रिरीरिता ।
ज्येष्ठे या दशमी शुक्ला दशयोगसमन्विता ॥२०४८॥

भृगुवारसमायुक्ता रात्रावेकादशी यदि ।
सा तिथि र्दिव्यरात्रिश्च कीर्तिता परमेश्वरि ॥२०४९॥

ज्येष्ठे या दशमी शुक्ला दशयोगान्विता यदि ।
वटुकस्य तिथिः प्रोक्ता वटुकोत्पत्तिकारिणी ॥२०५०॥

दशयोगास्तु स्कादे—

ज्येष्ठे मासि सितेपक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानंदे कन्याचंद्रे वृषे रवौ ॥२०५१॥

अमा भौमसमायुक्ता संक्रमेण समन्विता ।
कुलऋक्षसमायुक्ता तत्रापि ग्रहणं यदि ॥२०५२॥

तारारात्रिस्तु संप्रोक्ता भाग्यादेव तु लभ्यते ।
फाल्गुने कृष्णपक्षे तु ह्यर्धरात्रे तथा भृगौ ॥२०५३॥

शिवरात्रिस्तु सा प्रोक्ता सर्वसिद्धिप्रदायिनी ।
अमावास्या शुक्रवारे ग्रहणं यदि चेद् भवेत् ॥२०५४॥

यामे तुरीये सा रात्रि मृतसंजीवनी स्मृता ।
चैत्रशुक्लाष्टमीयोगे संक्रान्ति र्यदि चेद् भवेत् ॥२०५५॥

सिद्धरात्रिस्तदा ज्ञेया मंत्रसिद्धिप्रदायिनी ।
तृतीया माधवे शुक्ला कुलवारर्क्षसंयुता ॥२०५६॥

दारुणा कीर्तिता देवि सर्वसिद्धिप्रदा मता ।
क्रमेण कथिता रात्रिः पर्वराजमथोच्यते ॥२०५७॥

तृतीया पौषशुक्ले या भृगुवारसमन्विता ।
सापि चेन्मकराक्रांता कुलर्क्षेण समन्विता ॥२०५८॥

चतुर्थीसहिता चेत् स्याद् रेवतीसहिता क्वचित् ।
पर्वराजाभिधो योगः सर्वपर्वोत्तमोत्तमः ॥२०५९॥

तृतीया चैत्रशुक्ले या रेवतीसंयुता यदि ।
ऋद्धियोगो महेशानि होमकर्मणि शस्यते ॥२०६०॥

प्रतिमासे पौर्णमासी मासनक्षत्रसंयुता ।
कुलवारसमायुक्ता तिथिः सा सुन्दरीप्रिया ॥२०६१॥

अष्टमी प्रतिमासस्य कृष्णपक्षस्य पार्वति ।
भौमयुक्ता कुलर्क्षेण युक्ता वा केवलापि वा ॥२०६२॥

देवीरात्रीति विख्याता सर्वसिद्धिप्रदायिनी ।
चतुर्थी माघमासस्य ह्यर्धरात्रे भवेद् यदि ॥२०६३॥

गणेशरात्रीति तदा विज्ञेया सिद्धिकाङ्क्षिभिः ।
नवमी कृष्णपक्षस्य कुलवारर्क्षसंयुता ॥२०६४॥

मंत्रसिद्धिकरी रात्रिर्मंत्ररात्रिः प्रकीर्तिता ।
चतुर्थी कृष्णपक्षे च कुलवारर्क्षसंयुता ॥२०६५॥

केवलं भौमयुक्ता वा वारुणीरात्रिः ससंक्रमा ।
अमा भौमसमायुक्ता कुलर्क्षसंयुता यदि ॥२०६६॥
कृष्णारात्रिरिति ख्याता अक्षोभ्यप्रीतिकारिणी ।
अमार्कश्रवणैः पातयुक्ता चेत् पौषमाघयोः ।
अर्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः ॥२०६७॥
धर्मरात्रिर्महेशानि कीर्त्तितेयं सुरर्षिभिः ।
अमा भौमेन देवेशि सोमेन भृगुणाथवा ॥२०६८॥
गुरुणा रविणा देवि कुलऋक्षसमन्विता ।
दिव्यमांडलिको योगः सूर्यपर्वसमः स्मृतः ॥२०६९॥
माघमासे शुक्लपक्षे सप्तमी या प्रकीर्तिता ।
सौरी तिथिस्तु सा ज्ञेया सर्वसिद्धिकरी हि सा ॥२०७०॥
रवियुक्ता कुलर्क्षैश्च वासरेणापि संयुता ।
महासौरीति विख्याता त्रैलोक्योत्पत्तिमातृका ॥२०७१॥
सप्तमी प्रतिमासस्य रवियुक्ता यदा भवेत् ।
हंसीतिथिस्तु सा ज्ञेया जपार्चासु प्रकीर्तिता ॥२०७२॥
बुधाष्टमी महेशानि प्रतिमासस्य या भवेत् ।
विष्णुरात्रिरिति ख्याता भाद्रे मासि विशेषतः ॥२०७३॥
माघे मासि सिते पक्षे पंचम्यां भृगुवासरे ।
वसंतपंचमी प्रोक्ता कामसंजीवनीतिथिः ॥२०७४॥
मार्गकृष्णचतुर्दश्यां दत्तोत्पत्तिः प्रकीर्तिता ।
महामहिषमर्दिन्या महादुर्गाष्टमी स्मृता ॥२०७५॥
कृष्णाष्टम्यां शुक्रवारे द्वितीयप्रहरोत्तरे ।
आषाढे मासि संजाते त्रैलोक्यविजया परा ।
वीरभद्रस्य दंष्ट्रेति विख्याता पृथिवीतले ॥२०७६॥इति।

अथोर्ध्वाम्नाये श्रीविद्याविषये च पर्वाणि । सौभाग्यतंत्रे पारायणक्रमे—

पुष्पिणी च कुमारी च मोहिनी विमला तथा ।
जयिनी श्रीकरी चैव पर्वाण्येतानि षट् क्रमात् ॥२०७७॥

पुष्पिणी वर्षमासाभ्यां दिनं मासं कुमारिका ।
वर्षं दिनं मोहिनी च विमला मासकोदयात् ॥२०७८॥

वर्षोदयाभ्यां जयिनी श्रीकरी च दिनोदये ।
इत्येवं पर्वषट्कं स्यात् सोमपानमतो ब्रुवे ॥२०७९॥

वर्षं मासं ततश्चैव पक्षश्चोदय एव च ।
सोमपानमिति प्रोक्तं बुधैरागमवेदिभिः ॥२०८०॥

वर्षं दिनञ्चोदयश्च वारो मासस्तथैव च ।
वर्णपंचकसंयोगाद् योगः सूर्योपरागकः ॥॥२०८१॥

अथ युगाद्याः—

नवमी कार्तिके शुक्ला वैशाखे च तृतीयका ।
त्रयोदश्याश्विने कृष्णा फाल्गुनी पूर्णिमा तथा ॥२०८२॥

कार्तिकेऽभूत् कृतारंभस्त्रेतारंभस्तु माधवे ।
फाल्गुने द्वापरारंभ आरंभश्चाश्विने कलेः ॥२०८३॥इति।

अथ मन्वाद्याः—

आश्विने नवमी शुक्ला माघमासे तु सप्तमी ।
भाद्रे चैत्रे तृतीया च कार्तिके द्वादशी तथा ॥२०८४॥

आषाढे दशमी प्रोक्ता ज्येष्ठमासे तु पूर्णिमा ।
आषाढी फाल्गुनी चैत्री कार्तिकी पौर्णिमा तथा ॥२०८५॥

भाद्रे कृष्णाष्टमी प्रोक्ता पौषे त्वेकादशी सिता ।
अमा भाद्रपदे मासि मन्वाद्यास्तिथयस्त्विमाः ॥२०८६॥

अथ कुलतिथिवारर्क्षाणि—

द्वितीया च चतुर्थी च षष्ठी चैव तथाष्टमी ।
दशमी द्वादशी चैव तथैव च चतुर्दशी ।
ज्ञेयाश्च तिथयोऽप्येता महेशि कुलसंज्ञकाः ॥२०८७॥

कुजशुक्रौ वासरौ च रोहिणी भरणी तथा ।
आर्द्रा पुष्ये मघा चित्रा ज्येष्ठा चोत्तरफाल्गुनी ॥२०८८॥

पूर्वाषाढा विशाखा च श्रवश्चोत्तरभाद्रपात् ।
एतानि कुलऋक्षाणि तथैव शततारका ।
एतेष्वेव विशेषार्चा कार्या साधकसत्तमैः ॥२०८९॥इति।

अन्यच्च श्रीकुलार्णवे—

उत्तमा नित्यपूजा स्यात् मध्यमं पर्णपूजनम् ।
मासपूजाधमा देवि मासादूर्ध्वं पशुर्भवेत् ॥२०९०॥

विहितैर्मादिभिर्द्रव्यै र्मासादूर्ध्वमनर्चनात् ।
पशुर्भूयात् महेशानि पुनर्दीक्षां समाश्रयेत् ॥२०९१॥

मासेऽथवा त्रिमासे वा षण्मासे वासरेऽपि वा ।
श्रीगुरुं पूजयेद् भक्त्याप्राप्तौ तत् स्त्रीसुतादिकम् ॥२०९२॥

तदभावे तत्कुलीनं तच्छिष्यं वान्ययोगिनम् ।
संतोषयेत् कुलद्रव्यैश्चक्रपूजापुरःसरम् ॥२०९३॥

रोगेष्वापत्सु सर्वासु दुःसंगे दुर्निमित्तके ।
पूजयेद् योगिनीवृन्दं देवि तद्दोषशांतये ॥२०९४॥

यत्रैकाम्नायतत्त्वज्ञः कुलाचार्यः कुलेश्वरि ।
कौलिकांस्त्रिचतुःपंचशक्तयश्च तथा प्रिये ॥२०९५॥

पृथग् वा पूजयेद् देवि मिथुनाकारतोऽपि वा ।
गंधपुष्पाक्षताद्यैस्तु देवेशि समलंकृताः ॥२०९६॥

भक्ष्यभोज्यालिपिशितैः पदार्थैः षड्रसान्वितैः ।
प्रौढांतोल्लाससहिता मुदिता निवसंति च ॥२०९७॥

तच्छ्रीचक्रमिति प्रोक्तं वृन्दं चापि तदुच्यते ।
कुर्यात् नवकुमारीणां पूजामाश्विनमासके ॥२०९८॥

प्रातर्निमंत्रयेद् भक्त्या साधकः शुद्धमानसः ।
मनोहरामेकवर्षां बालां च शुभलक्षणाम् ॥२०९९॥

मंत्री ध्यात्वाथ शुद्धात्मा कृत्वा देवि क्रमार्चनम् ।
अभ्यंगस्नानशुद्धां तां पूजासदनमानयेत् ॥२१००॥

देवतासन्निधौ बालामुपवेश्य समर्चयेत् ।
गंधपुष्पाक्षतैर्धूपदीपैश्च कदलीफलैः ॥२१०१॥

भक्ष्यभोज्यान्नपानाद्यैः क्षीराज्यमधुमांसकैः ।
कदलीनारिकेलाद्यैः फलैस्तां परितोषयेत् ॥२१०२॥

सशक्तिकः स्वयं देवि यौवनोल्लाससंयुतः ।
यथाशक्ति जपेदेकोत्तरवृद्ध्याथवा मनुम् ।
बालासलंकृतां पश्यन् चिंतयन् स्वेष्टदेवताम् ॥२१०३॥

ततस्तां देवताबुद्ध्या नमस्कृत्य विसर्जयेत् ।
द्वितीयायां द्विवर्षा च त्रिवर्षादिक्रमेण च ॥२१०४॥

एवं तिथिकुमारीं च यजेत् पूर्वदिनेऽर्चिताम् ।
नवम्यामेकवर्षादि नववर्षान्तकन्यकाः ॥२१०५॥

शुद्धा बाला च ललिता मालिनी च वसुंधरा ।
सरस्वती रमा गौरी दुर्गा च नव कीर्तिताः ॥२१०६॥

त्रितारोद्यै र्नमोन्तैश्च देवतापदपश्चिमैः ।
नामभिः सचतुर्थ्यन्तैः पूजयेत् ताः पृथक् पृथक् ॥२१०७॥

वटुकं पंचवर्षं च नववर्षं गणेश्वरम् ।
गंधपुष्पांबराकल्पैर्यथाविभवविस्तरम् ॥२१०८॥

अभ्यर्च्य देवताबुद्ध्या पदार्थैः परितोषयेत् ।
स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः ॥२१०९॥

नवरात्रं जपेदेकोत्तरवृद्धिक्रमेण च ।
नवरात्रकृतां पूजां देवि देव्यै समर्पयेत् ॥२११०॥

तांबूलं दक्षिणां दत्वा प्रणम्य तां विसर्जयेत् ।
एवं नवकुमारीणामर्चनं प्रतिवत्सरम् ॥२१११॥

यः करोति च पुण्यात्मा देवताप्रीतिमाप्नुयात् ।
अथवा यौवनारूढाः प्रमदा नव पार्वति ॥२११२॥

मनोज्ञाः पूजयेद् भक्त्या नवरात्रिषु मंत्रवित् ।
हृल्लेखां गगनां रक्तां महोच्छुष्मां करालिकाम् ॥२११३॥

इच्छां ज्ञानां क्रियां दुर्गा वटुकं च गणेश्वरम् ।
पूर्ववत् पूज्य मद्याद्यैः पदार्थैः परितोषयेत् ॥२११४॥

प्रौढांतोल्लाससंयुक्ताः संतुष्टा यदि वा प्रिये ।
साधकस्त्वष्टमासाद्य निवसेत् तवसन्निधौ ॥२११५॥

एवं यः पूजयेद् देवि प्रतिवर्षं यतव्रतः ।
षण्मासे वा त्रिमासे वा मासे मासेऽथवा प्रिये ॥२११६॥

तिस्रो वा पंच वा सप्त पूजयेद् देवताधिया ।
सर्वसिद्धिसमृद्धात्मा स भवेदावयोः प्रियः ॥२११७॥

भृगुवारे कुलेशानि कांतामारूढयौवनाम् ।
सर्वलक्षणसंपन्नामनुकूलां मनोहराम् ॥२११८॥

कुलां कुलांगनां वापि निमंत्र्याहूय पुष्पिणीम् ।
अभ्यंगस्नानशुद्धांगीमासने चोपवेशयेत् ॥२११९॥

गंधपुष्पांबराकल्पैरलंकृत्य विधानवित् ।
आत्मानं गंधपुष्पाद्यैरलंकुर्यात् कुलेश्वरि ॥२१२०॥

आवाह्य देवतां तस्यां यजेन् न्यासक्रमेण च ।

महापोढान्यासक्रमेण, कलान्यासक्रमेण वा ।

कृत्वा क्रमार्चनं धूपं दीपं च कुलदीपकम् ।
प्रदर्श्य देवताबुद्धया पदार्थैः षड्रसान्वितैः ॥२१२१॥

मांसालिभक्ष्यभोज्याद्यैः तोषयेदतिभक्तितः ।
प्रौढांतोल्लाससहितां तां पश्यन् प्रजपेन् मनुम् ॥२१२२॥

यौवनोल्लाससहितः स्वयं तद्ध्यानतत्परः ।
निर्विकारेण चित्तेन ह्यष्टोत्तरसहस्रकम् ॥२१२३॥

जपादिकं समर्प्याथ शक्तिस्तोत्रं ततः पठेत् ।

शक्तिस्तोत्र स्तोत्रपटले लिखाम ।

एवं स्तवैर्जपैर्देवि तया सह निशां नयेत् ॥२१२४॥

त्रिपंचसप्तनवसु भृगुवारेषु यः प्रिये ।
पूजयेद् विधिनाऽनेन तस्य पुण्यं न गण्यते ॥२१२५॥
चतुःपीठार्चनफलं स प्राप्नोति कुलेश्वरि ।
यद् यत्स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयम् ॥२१२६॥
नवम्यां वार्चयेद् देवीं विधानेन विधानवित् ।
सोऽत्रैव पूज्यते सर्वैं र्महदैश्वर्यमाप्नुयात् ॥२१२७॥
कुर्यात् कर्कटके वापि मकरे मिथुनेऽर्चनम् ।
तुलायां वाथ मेषे वा सर्वसंक्रान्तिषु प्रिये ॥२१२८॥
गौरीशिवौ रमाविष्णू वाणीसरसिजासनौ ।
शचीन्द्रौ रोहिणीचंद्रौ स्वाहाग्नी च प्रभारवी ॥२१२९॥
भद्रकाली वीरभद्रौ भैरवीभैरवावपि ।
मिथुनानि नवाभ्यर्चेत् पूर्वोक्तेन च वर्त्मना ॥२१३०॥
त्रितारादिनमोऽन्तेन तत् तन्नाम्ना विधानवित् ।
गंधपुष्पादिभिः पूज्य मद्याद्यैः परितोषयेत् ॥२१३१॥
प्रौढांतोल्लासयुक्तानि कुर्वीत मिथुनान्यपि ।
एवं कृते न संदेहः तुष्टाः स्युः सर्वदेवताः ॥२१३२॥
अनुगृह्णन्ति तं देवि प्रयच्छन्ति मनोरथम् ।
प्रतिवर्षं च यः कुर्यात् सद्भक्त्या मिथुनार्चनम् ॥२१३३॥
तत् तल्लोकेषु निवसेत् सर्वैश्वर्यसमन्वितः ।
अथ वैशाखमासस्य शुक्लप्रतिपदीश्वरि ॥२१३४॥
ब्राह्मे मुहूर्ते चोत्थाय स्नानं संध्यामुपास्य च ।
मनोज्ञे रहसि स्थाने पूर्वाशाभिमुखस्थितः ॥२१३५॥
आत्मानं गंधपुष्पाद्यैरलंकृत्य विधानवित् ।
कृत्वा कल्पोदितान् न्यासान् देवताभावमास्थितः ॥२१३६॥
किंचिदभ्युदिते सूर्यमंडले त्विष्टदेवताम् ।
ध्यात्वा सावरणां सम्यक् पूजयेद् विधिना प्रिये ॥२१३७॥

षोडशैरुपचारैश्च चक्रपूजापुरःसरम् ।
कुलदीपं प्रदर्श्यथ शिवाय गुरुरूपिणे ॥२१३८॥

मत्स्यमांसादिविविधभक्ष्यभोज्यसमन्वितम् ।
दैव्यैं निवेद्य तद्द्रव्यं शक्त्या सह पिबेत् प्रिये ॥२१३९॥

यौवनोल्लाससहितो निर्विकल्पेन चेतसा ।
ध्यायँस्तन्मण्डले देवि अष्टोत्तरसहस्रकम् ॥२१४०॥

जप्त्वा समर्प्य तत् पूजां देवतां च समुद्वसेत् ।
एवं शुक्लप्रतिपदं समारभ्य दिने दिने ॥२१४१॥

कुर्याज्जपार्चनं कृष्णचतुर्दश्यान्तमम्बिके ।
अमावास्यादिने देवि पूजयेत् शक्तिकौलिकान् ॥२१४२॥

त्रिपंचसप्तनवकं वित्तशाठ्यविवर्जितः ।
एवं यो मासमात्रं तु कुर्यात् सूर्योदयार्चनम् ॥२१४३॥

देवता तस्य संतुष्टा ददाति फलमीप्सितम् ।
मध्याह्ने चार्चयेद् देवि सायाह्ने चार्चयेत् शिवे ॥२१४४॥

तत् तत् फलमवाप्नोति योगिनीनां प्रियो भवेत् ।
त्रिसंध्यं योऽर्चयेद् देवीं मासमात्रं विधानतः ॥२१४५॥

काङ्क्षितां लभते सिद्धिं विचरेद् देववद् भुवि ।
कार्तिके शुक्लप्रतिपत् तिथावुषसि संयतः ॥२१४६॥

स्नात्वा नित्यक्रियां कृत्वा सर्वतोभद्रमंडले ।
यथोक्तविधिना स्थाप्य कलशं मधुपूरितम् ॥२१४७॥

तस्योपरि न्यसेद् दीपं कांस्यं सुस्थूलवर्तिकम् ।
मूलमंत्रेण प्रज्वाल्य देवीमावाह्य तत्र तु ॥२१४८॥

लब्धोपचारैः संपूज्य सहस्रं प्रजपेन् मनुम् ।
शुक्लभूतान्तमेवं हि विधाय विधिपूर्वकम् ॥२१४९॥

पौर्णमास्यां तथा शक्तीर्भोजयेच्चक्रमार्गतः ।
एवं कृते भगवती तुष्टाभीष्टं प्रयच्छति ॥२१५०॥

माघशुक्लप्रतिपदि दिवाहारविवर्जितः ।
यौवनोल्लाससहितश्चन्द्रे सूर्यवदाचरेत् ॥२१५१॥

चंद्रास्तमयपर्यन्तं जपेत् मंत्रमनन्यधीः ।
एवं समाचरेद् भक्त्या शुक्लपक्षार्चनं प्रिये ॥२१५२॥

सर्वपापविशुद्धात्मा सर्वैश्वर्यसमन्वितः ।
स सर्वलोकसंपूज्यः शिववत् निवसेद् भुवि ॥२१५३॥

शुक्लपक्षार्चनं यद्वत् तद्वत्पक्षे सितेतरे ।
यः करोति विधानेन सर्वान् कामान् स नश्नुते ॥२१५४॥

इह भुक्त्वाखिलान् भोगान् देववत् प्रियदर्शनः ।
योगिनीवीरमेलापं तेन स्यात् नैव संशयः ॥२१५५॥

एवं कृते महेशानि देवता प्रीतिमाप्नुयात् ।
सर्वकामसमृद्धात्मा सर्वैश्वर्यसमन्वितः ॥२१५६॥

सर्वलोकैकसंमान्यो विचरेत यथासुखम् ।
अष्टाष्टकार्चनं कुर्यात् शक्तश्चेदर्कवासरे ॥२१५७॥

एतच्च शक्तिसंगमे—

पूर्णाभिषेकसंयुक्तस्तूर्ध्वाम्नायेषु दीक्षितः ।
षट्शांभवक्रमी देवि कुर्यादष्टाष्टकं क्रमात् ॥२१५८॥

अष्टाष्टकस्य विज्ञानो शिव एव न संशयः ।
अष्टाष्टदिवसे कार्यमथ द्व्यष्टदिनेऽथवा ॥२१५९॥

द्वात्रिंशद्दिवसे कार्यं चतुःषष्टिदिनेऽथवा ।
गुरुणा कारयेद् देवि विधिज्ञेनापरेण वा ॥२१६०॥

क्रमज्ञश्चेत् स्वयं कुर्याद् वित्तशाठ्यविवर्जितः ।
तत्र रात्रौ विशुद्धात्मा कृत्वा न्यासान् पुरोदितान् ॥२१६१॥

प्रसुप्ते जीवलोके तु मुदितात्मा महामनाः ।
अष्टाष्टकं प्रकुर्वीत भक्तिनिर्भरमानसः ॥२१६२॥

मूलाष्टकं तु ब्राह्मयाद्यैश्चासितांगादिभैरवैः ।
मंगलाद्यैश्च मिथुनैरष्टभिः सहितः प्रिये ॥२१६३॥

मूलाष्टकोद्भवानीति प्रसिद्धानि कुलागमे ।
अक्षोभ्यादिचतुःषष्टिमिथुनानि समर्चयेत् ॥२१६४॥

यथोक्तेन विधानेन यथाविभवविस्तरम् ।
क्रमलोपं न कुर्वीत स्वेष्टकार्यार्थसिद्धये ॥२१६५॥

गंधपुष्पांबराकल्पै र्मत्स्यमांसासवादिभिः ।
भक्ष्यभोज्यादिभि र्नानापदार्थैः षड्रसान्वितैः ।
सम्यक् संतोषयेद् देवि मिथुनान्यतिभक्तितः ॥२१६६॥

प्रौढ़ांतोल्लाससहितं कुर्यात् श्रीचक्रमंबिके ।
एवं यः कुरुते देवि सकृदष्टाष्टकार्चनम् ॥२१६७॥

ब्रह्मविष्णुमहेशादिदेवताभिश्च पूज्यते ।
किं पुनर्मानवाद्यैश्च साक्षात् शिव इवापरः ॥२१६८॥

यदर्चनात् चतुःषष्टियोगिनीगणसंस्तुतः ।
पुनरावृत्तिरहितो निवसेत् तवसन्निधौ ॥२१६९॥

समस्तदेवताप्रीतिकारिणी परमेश्वरि ।
अस्मात् परतरा पूजा नास्ति सत्यं न संशयः ॥२१७०॥

पश्येदेवंविधं चक्रं यो भक्त्याष्टाष्टकं प्रिये ।
यज्ञदानतपस्तीर्थव्रतकोटिफलं लभेत् ॥२१७१॥

राजा यः कारयेद् देवि भक्त्याष्टाष्टकपूजनम् ।
चतुःसागरपर्यन्तां पृथ्वीं शास्ति न संशयः ॥२१७२॥

श्रीकंठादीनि पंचाशन्मिथुनानि समर्चयेत् ।
पूर्वोक्तेन विधानेन कुलेश्वरि विधानवित् ॥२१७३॥

स्वकार्यफलसिद्ध्यर्थं धनलोभविवर्जितः ।
प्रौढांतोल्लासयुक्तानि मिथुनान्यंब कारयेत् ॥२१७४॥

संतुष्टानि प्रयच्छन्ति साधकायेप्सितं फलम् ।
अव्याहताज्ञः सर्वत्र पूज्यते देववत् प्रिये ॥२१७५॥

तवलोके वसेद् देवि ब्रह्मादिसुरसंस्तुतः ।
केशवादि गणेशादि कामादि मिथुनानि च ॥२१७६॥

श्रीकंठादिवदभ्यर्च्य तत्फलं लभते ध्रुवम् ।
अनुग्रहतया कुर्यात् डाकिन्यादिसमर्चनम् ॥२१७७॥

मासे मासेऽथवा वर्षे स्वजन्मदिवसे प्रिये ।
पूर्वोक्तेन विधानेन यथाविभवविस्तरम् ॥२१७८॥

प्रौढांतोल्लासपर्यन्तं तोषयेत् तां विधानवित् ।
कुर्वन्त्यनुग्रहं देवि संतुष्टास्ताश्च देवताः ॥२१७९॥

सर्वापद्रोगरहितः सर्वैश्वर्यसमन्वितः ।
लोकेऽस्मिन् संस्तुतः सर्वैः स जीवेत् शरदां शतम् ॥२१८०॥

देहांते प्राप्तविज्ञानस्तवलोके महीयते ।
दूतीयागं तु यः कुर्याद् यथोक्तविधिना प्रिये ॥२१८१॥

वर्षे वर्षे चतुःषष्टिपीठार्चनफलं लभेत् ।
त्रिकपूजां तु यः कुर्यादिच्छाज्ञानक्रियात्मिकाम् ॥२१८२॥

आगमोक्तेन विधिना पूर्ववत् तद्विधानतः ।
पदार्थैस्तोषयेत् सम्यक् यथाविभवविस्तरम् ॥२१८३॥

संतुष्टा देवतास्तिस्रः सर्वकामफलप्रदाः ।
देवेशि साधकाभीष्टं प्रयच्छन्ति न संशयः ॥२१८४॥

इत्यादि देवतापूजां विशेषदिवसेषु यः ।
करोति शास्त्रविधिना स भवेदावयोः प्रियः ॥२१८५॥

श्रीचक्रं कौलिको मोहाद् विशेषदिवसेषु यः ।
न करोति समर्थः सन् स भवेद् योगिनीपशुः ॥२१८६॥

# अथ दशमः पटलः ।

अथ कुलार्चनम् । यच्च कुलार्णवे—

कुलपूजासु नियमं यः करोति हि कौलिकः ।
कुलेशि समवाप्नोति योगिनीवीरमेलनम् ॥२१८७॥

नीचोऽपि वा सकृद् भक्त्या कारयेद् यः कुलार्चनम् ।
स सद्गतिमवाप्नोति किमुतान्ये द्विजादयः ॥२१८८॥

तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलपूजारतो भूयादभीष्टफलसिद्धये ॥२१८९॥

कुलपूजाधिको यज्ञः कुलपूजाधिकं व्रतम् ।
कुलपूजाधिकं तीर्थं कुलपूजाधिकं तपः ॥२१९०॥

कुलपूजाधिकं ज्ञानं कुलपूजाधिका क्रिया ।
कुलपूजाधिको लाभः कुलपूजाधिकं सुखम् ॥२१९१॥

कुलपूजाधिको धर्मः कुलपूजाधिकं फलम् ।
कुलपूजाधिकं ज्ञानं कुलपूजाधिकं पदम् ॥२१९२॥

कुलपूजाधिको योगः कुलपूजाधिकं जपः ।
कुलपूजाधिकं भाग्यं कुलपूजाधिकं धनम् ॥२१९३॥

कुलपूजाधिका विद्या कुलपूजाधिकार्चनम् ।
नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके ॥२१९४॥

वहुना किमिहोक्तेन रहस्यं शृणु पार्वति ।
वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः ॥२१९५॥

तत्समीपे स्थितं मां तु विद्धि नान्यत्र भामिनि ।
इदं सत्यमिदं सत्यमिदं सत्यं न संशयः ॥२१९६॥

खभूमिदिग्जलगिरिवनसर्वचराः प्रिये ।
सहस्रकोटियोगिन्यस्तावंतो भैरवा अपि ॥२१९७॥

नियुक्ता हि मया देवि कुलसंरक्षणाय च ।
दिवसेषु विशेषेषु सर्वेषु मुदिताननाः ॥२१९८॥
साधकानेव वीक्षंते स्वसंपूजानुलिप्सया ।
अपूजितास्तु निघ्नन्ति प्रसीदंतीह पूजिताः ॥२१९९॥
गुरुभक्तान् सदाचारान् गुरुभक्तानवन्ति हि ।
भक्तिहीनान् दुराचारान् नाशयन्ति प्रकाशकान् ॥२२००॥
श्रीचक्रे संस्मरेत् तस्माद् योगिनीभैरवानपि ।
न स्मरेद् यदि मूढात्मा योगिनीनां भवेत् पशुः ॥२२०१॥
तस्मात् श्रीचक्रमध्ये तु संस्मरेत् सर्वदेवताः ।
अनुगृह्णन्ति देवेशि साधकान् नात्र संशयः ॥२२०२॥इति।

अथ चक्रेश्वरयोग्यता यामले—

गुप्तावधूतकौलस्य छिन्नपाशाष्टकस्य च ।
अधीतसर्वविद्यस्य योग्यता चक्रपूजने ॥२२०३॥

गुप्तावधूतो गृहस्थ इति । पाशाष्टकन्तु—

घृणा लज्जा भयं शंका जुगुप्सा चेति पंचमी ।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः ॥२२०४॥
पाशबद्धः पशुः प्रोक्तः पाशमुक्तः स्वयं शिवः ।
तुषेण बद्धो व्रीहि स्यात् तुषाभावे तु तंडुलः ॥२२०५॥इति।

तथैव निर्वाणतंत्रे—

नात्राधिकारः सर्वेषां ब्रह्मज्ञान् साधकान् विना ।
परब्रह्मोपासकाः ये ब्रह्मज्ञा ब्रह्मतत्पराः ॥२२०६॥
शुद्धान्तःकरणाः शांताः सर्वप्राणिहिते रताः ।
निर्विकारा निर्विकल्पा दयाशीला दृढव्रताः ॥२२०७॥
सत्यसंकल्पका ब्राह्मास्त एवात्राधिकारिणः ।
ब्रह्मज्ञानाय तु प्रोक्तं भैरवीचक्रमुत्तमम् ॥२२०८॥
ब्रह्मज्ञानयुतानां तु तत्त्वचक्रेऽधिकारिता ।
ब्रह्मभावेन तत्त्वज्ञा ये पश्यन्ति चराचरम् ॥२२०९॥

तेषां तत्त्वविदां पुंसां तत्त्वचक्रेऽधिकारिता ।
सर्वं ब्रह्ममयंभावश्चक्रेऽस्मिन् तत्त्वसंज्ञके ।
येषामुत्पद्यते देवि त एव तत्त्वचक्रिणः ॥२२१०॥इति।

यामले—

एवंविधेन गुरुणा कारयेद्वा सलक्षणः ।
स्वयं कुर्याद् वीरशक्तिसहितः कुलनायिके ॥२२११॥इति।

तन्त्रान्तरे यामले—

पूजा पूर्वदिने वापि प्राप्तपूजादिनेऽथवा ।
वीरांश्चैव तथा शक्तीर्भक्त्या चैव निमंत्रयेत् ॥२२१२॥

शक्तीनामपि वीराणां रात्रावेव निमंत्रणम् ।
विदध्यात् साधकश्रेष्ठो दिवा कृत्वा च निष्फलम् ॥२२१३॥

अन्यच्च वीरयामले—

रात्रावेव प्रकुर्वीत वीरशक्तिनिमंत्रणम् ।
दिवा निमंत्रणे प्रायश्चित्तमुक्तं शिवेन तु ॥२२१४॥

यच्च विष्णुयामले—

मोहेन च समाविष्टो दिवा कृत्वा निमंत्रणम् ।
शक्तीनामपि वीराणां यां गतिं लभते नृप ॥२२१५॥

तां गतिं तेऽभिधास्यामि सावधानमनाः शृणु ।
जन्मजन्मनि जायेत श्वेतकुष्ठपरिप्लुतः ।
चाण्डालयोनिमासाद्य सत्यं सत्यं वदामि ते ॥२२१६॥

तन्निमंत्रणे नियममाह कुलयामले—

आदौ यज्ञार्थमीशानि वीरानेव निमंत्रयेत् ।
विपरीतत्त्वमासाद्य तामसं नरकं व्रजेत् ॥२२१७॥

रुद्रयामले—

चक्रार्थमादौ प्रयतो वीरानेव निमंत्रयेत् ।
शक्तिमामंत्र्य संयाति रौरवं तमसावृतम् ॥२२१८॥

अथ वीरलक्षण समयातन्त्रे—

य: स्वभावं परित्यज्य दैवभावं समाश्रितः ।
स एव वीरः कौलश्च कुलीनो नापरो जनः ।
नरसेवापरो यस्तु न वीरो न कुलीनकः ॥२२१९॥इति।

अन्यच्च कौलसर्वस्वे—

दीक्षायुतः पाशमुक्तः साचारो गुरुभक्तिमान् ।
समयाचारसंकेतपालकः शुभवेषवान् ॥२२२०॥

वीरार्चातत्परो वीरभूमिचारी जितेन्द्रियः ।
अशीत्यूनवयस्कश्च जपो वीर इति स्मृतः ॥२२२१॥

अथ त्याज्यवीरलक्षणम्, वीरतन्त्रे कुलावल्या च—

काणं खंजं च वधिरं कुब्जं व्याधिप्रपीडितम् ।
कुत्सितं कुनखं कुष्ठं व्यंगांगं विकलं शठम् ।
अज्ञातं पतितं मूर्खं पाखंडं वहुजल्पकम् ॥२२२२॥

पाखडाश्च कुलागमे—

मद्यपानरताः कौला लुब्धा च स्त्रीषु सर्वदा ।
निजकर्मपरिभ्रष्टा परार्चाद्वेषतत्पराः ॥२२२३॥

कुलशास्त्रप्रसंगेन प्रचरन्ति सभाकराः ।
पानभोजनलुब्धा ये पाखंडास्ते प्रकीर्तिताः ॥२२२४॥इति।

वह्वाशिनं कपटिनं लुब्धं दीनं च दुःखितम् ।
हीनांगं चाधिकांगं च व्रतिनं चिररोगिणम् ॥२२२५॥

शोकमोहाकुलं स्तब्धं कामुकं क्रोधिनं खलम् ।
निष्ठुरं दुर्मुखं क्रूरं मिथ्यावादिनमेव च ॥२२२६॥

परस्परानुवक्तारं परनिंदापरं तथा ।
निकृष्टं दांभिकं भ्रांतमसंतं परवंचकम् ॥२२२७॥

शूद्रस्य पाचकं चापि तथा शूद्रान्नभोजकम् ।
वर्जयेच्च पराधीनं नरसेवापरं तथा ॥२२२८॥

त्यक्तदारं च क्लीबं च ह्यनिवेदितभोजिनम् ।
नार्चयेत् श्राद्धभोक्तारं कृततीर्थपरिग्रहम् ॥२२२९॥

श्राद्धभोक्तारमिति प्रेतश्राद्धभोक्तारम् ।

यच्च योगिनीतन्त्रे—

प्रेतश्राद्धे च यो भुङ्क्ते सोऽपि प्रेतो न संशयः ॥२२३०॥

एतदेव कुब्जिकायाम्—

प्रेतमुद्दिश्य यो भुङ्क्ते स च प्रेतत्वमाप्नुयात् ।

एतेन पशूना प्रेतश्राद्धमिति । यच्च पशोरन्नस्वीकारे निषेधस्य बहुधोक्तत्वात् ।

अन्यच्च कुब्जिकायाम्—

अशीत्यूनवयस्कं च दंतहीनं जरातुरम् ॥२२३१॥

आत्मप्रशंसकं धूर्तं नार्चयेद् देवताधिया ।
जपपूजाविहीनं च नार्चयेद् भ्रष्टसाधकम् ॥२२३२॥

यादृशं साधकं भक्त्या तोषयेद् देवताधिया ।
देवता तादृशी भूत्वा तादृक् फलप्रदायिनी ॥२२३३॥

इत्यादि दोषरहितः साधकः कौलिकार्चने ।
योग्यो भवति नान्यो हि यतश्चक्रेश्वरः शिवः ॥२२३४॥

कुलार्णवेऽपि—

समायांति सुरा देवि योगिन्यो योगिभिः सह ।
प्रविश्य कुलयोगीशं भुंजते पितृदेवताः ॥२२३५॥इति।

भैरवीचक्रगान् वीरान् तथैव कुलयोगिनोः ।
प्रविश्य मिथुनीभावात् तद्गृह्णन्ते क्रमार्चनम् ॥२२३६॥

प्रयच्छन्ति फलं तुष्टा रुष्टा विध्वंसयन्ति तम् ।

अथ त्याज्या. शक्तय, कुलावल्या कालीकल्पलतायां च—

व्यंगांगीं विकृतांगीं च न्यूनांगीमधिकाङ्गिकाम् ।
गुर्विणीं च रजोहीनां केशदंतविवर्जिताम् ॥२२३७॥

कुत्सितां रोषितां दुष्टां रोगशोकसमाकुलाम् ।
निद्रालस्ययुतां क्रूरां निष्ठुरां परिवर्जयेत् ॥२२३८॥
अंगे हीनाधिकौ दोषौ देवताया कथं भवेत् ।
रोगशोकादिदुःखानि देवतायाः क्व विद्यते ।
अतस्तदर्चकस्तस्याः फलभागी न संशयः ॥२२३९॥

श्रीकुलावल्या श्रीक्रमे च—

शक्तयः सर्वजातीया पूजनीया न संशयः ।
विशेषवैदग्ध्ययुताः सर्वा एव कुलांगनाः ।
नवकन्या विशेषेण पूजनीयाः सलक्षणाः ॥२२४०॥

अन्यच्च तंत्रान्तरे—

निमंत्रिताश्च ते वीराः शक्तयोऽपि तथैव ताः ।
गत्वा स्वे स्वे स्थले कालं प्रेक्ष्यमाणाः समुत्सुकाः ॥२२४१॥
स्वंस्वमिष्टं स्मरंतश्च स्वपेयुः शुचिसंयुताः ।
ततः प्रातः समुत्थाय नित्यकृत्यं समाप्य च ॥२२४२॥
चक्रोपकरणान्येव साधयेयुर्यथातथम् ।
शुभ्रांवरवृताः सर्वे सुस्नाताः सुष्ठलंकृताः ॥२२४३॥
यथाशास्त्रविधानेन पाकं कुर्युः पृथक् पृथक् ।
मोदकं गुह्यसंज्ञं च सूत्रसंज्ञं ततः परम् ॥२२४४॥
चतुःशृङ्गं शिवाख्यं च आनंदमोदकं तथा ।
शिरामोदकनामानं साधयेन् मोदकानि षट् ॥२२४५॥
ततश्चक्र्यो विधेयाश्च क्रमशस्ताश्च वच्म्यहम् ।
अपूपांश्च तथा माषगर्भान् कुर्यादतःपरम् ॥२२४६॥
तृतीयागर्भकांस्तद्वदगर्भाश्च ततः सुधीः ।
लवंगैला च कक्कोलशुंठीकर्पूरशर्करा: ॥२२४७॥
विमिश्र्य कुर्यात् तद्वच्च शुद्धिगर्भाश्च षट् स्मृताः ।
ततश्च वटकाः साध्याः षड्विधाः क्रमतस्त्वथ ॥२२४८॥

चाणका माषजाश्चैते दधिसंश्लिष्टकास्तथा ।
तिंतिणीरससंश्लिष्टा कण्ठिकासंयुतास्तथा ॥२२४९॥

शिखरिण्यार्द्रकाश्चैव मध्वाक्ताः शुष्ककास्तथा ।
त्रिकोणान्यपि कार्याणि तिंतिण्याक्तानि वै तथा ॥२२५०॥

शमी दधियुता कार्या शाकत्रयमवश्यकम् ।
पुष्पाण्यपि विधेयानि श्वेतपीतारुणानि च ॥२२५१॥

मुद्गमाषमसूराणां सूपाः साध्याः प्रयत्नतः ।
अवश्यमेकः साध्यस्तु सूपः कस्यचिदंबिके ॥२२५२॥

पायसापूपसंयावाः साध्याश्चक्रार्थमीश्वरि ।
अथो शुद्धिः प्रकर्तव्या क्रमशो घृतपाचिता ॥२२५३॥

घृतशुद्धिः कर्चरी च श्रीखंडामृतयोस्तथा ।
कालिकासंभवा चैव कालज्ञानभवा तथा ॥२२५४॥

कपोतसंभवा चैव चणकाढ्या च ताः स्मृताः ।
ततस्तृतीया वै कार्या घृताख्या तैलसंभवा ॥२२५५॥

संयावाख्या परा प्रोक्ता चालोकाख्या ततः स्मृता ।
अथो मुद्राश्च वै कार्या गोधूमाद्यन्नसंभवाः ॥२२५६॥

तृतीया शुद्धिसंयुक्ता धनुर्मुद्रा प्रकीर्तिता ।
माषशुद्धिसमायुक्ता चक्राख्या परिकीर्तिता ॥२२५७॥

तृतीया माषगर्भा च धेनुमुद्रा प्रकीर्तिता ।
शुद्धिमाषतृतीयाढ्या वाणाख्या परिकीर्तिता ॥२२५८॥

तृतीयैलाच कर्पूरगर्भा पाशाह्वया मता ।
तृतीया शुद्धिकर्पूरौ चैलागर्भा च लिंगका ॥२२५९॥

शुद्धिशुंठीमरीचाढ्या मुद्रा डमरुका मता ।
सर्वत्रार्द्रकयोगेन सिद्धा भवति नान्यथा ॥२२६०॥

विनार्द्रकेण यत्किंचित् देवदेयं न तत् स्मृतम् ।
नैवेद्यमेवं संपाद्य गंधं कुर्याद् विधानतः ॥२२६१॥

कर्दमं यक्षसञ्ज्ञं च देवीकर्दममेव च ।
शिवकर्दममेवं हि शक्तिकर्दममुत्तमम् ॥२२६२॥

वीरकर्दममेवं स्यात् गुरुकर्दमतः परम् ।
मंत्रकर्दमसंज्ञं च कुलकर्दमसंज्ञकम् ॥२२६३॥इति।

अथैषां विधिर्मालिकातन्त्रे—

कर्पूरागरुकस्तूरीकक्कोलघुसृणानि च ।
एकीकृतमिदं सर्वं यक्षकर्दम इष्यते ॥२२६४॥

रोचना कुंकुमं चैव रक्तचंदनमिश्रितम् ।
देवीकर्दमसंज्ञं च देवीप्रीतिकरं स्मृतम् ॥२२६५॥

कर्पूरैलाचंदनानि कस्तूरीसंयुतानि च ।
शिवकर्दमसंज्ञं च शिवसायुज्यदायकम् ॥२२६६॥

श्वेतं चैव तथा रक्तं चंदनं मृगनाभिजम् ।
शाखासोममुशीरं च शक्तिकर्दम इष्यते ॥२२६७॥

कपिकुंकुमचोरैः स्यात् मर्दितो वीरकर्दमः ।
रक्तचंदनकस्तूरीकर्पूरोशीररोचनैः ॥२२६८॥

मांस्यैलामिश्रितैर्देवि प्रोक्तोऽयं गुरुकर्दमः ।
चंदनौ रोचनोशीरौ युते स्यात् मंत्रकर्दमः ॥२२६९॥

कर्पूरकपिकस्तूरीकुलपुष्पैर्महेश्वरि ।
कुलकर्दम एवं हि कर्दमाष्टकमीरितम् ॥२२७०॥

अन्यानि पूजायोग्यानि मनःप्रीतिकराणि च ।
संपाद्य विधिवद् भक्त्या देवीं ध्यायन् समाहितः ।
वीरान् शक्तीश्च विधिवत् स्वे स्वे स्थाने निवेश्य च ॥२२७१॥

स्वे स्वे स्थाने तत्, तदाम्नायस्थले।

गुरोः पुत्रान् भ्रातृपुत्रान् तथा तत्कुलजानपि ।
ज्ञानवृद्धान् तपोवृद्धान् दक्षिणे, स्वे समर्चयेत् ॥२२७२॥

न तु ज्येष्ठान् यजेद् वामे कनिष्ठान् न च दक्षिणे ।
विपरीते वैपरीत्यं फलं ज्ञेयं शुभाशुभम् ॥२२७३॥

शिष्यः पुत्रः कनिष्ठो वा दक्षे चोपविशेत् यदि ।
तदा च नारकी स स्यादन्यथा गुरुलंघनात् ।
निजशक्ति कनिष्ठांश्च वामभागे समर्चयेत् ॥२२७४॥

वीरविषये कालीकल्पे—

गंधपुष्पाधिवासैस्तैश्चक्रे वीरान् समर्चयेत् ।
अष्टाधिकान् तत्र कौलान् नार्चयेत् तत्र कौलिकः ॥२२७५॥

एतदेव समयातन्त्रे—

नार्चनं वहुसंघट्टे न पेयं वहुसन्निधौ ।

अत्राष्टाधिकवहुसंघट्टेति कालीकल्पलताकारेण व्याख्यातम्, अतो वहुसन्निधावित्यष्टाधिक नेत्यर्थः ।

पूज्य लब्धोपचारैस्तान् प्रार्थयेद् विहितांजलिः ॥२२७६॥इति।

ॐ नमो भगवते वीर नमो वै कुलपावन ।
त्वया ब्रह्मसमाचारः स्थापनीयः शिवाज्ञया ॥२२७७॥

निष्कामक्रोधसंपन्नैः सुशीलैः प्रीतिसंयुतैः ।
भवितव्यं प्रयत्नेन सर्वायासविवर्जितैः ॥२२७८॥

अनाचारप्ररहितैः शुभाचारविलासिभिः ।
निर्जल्पकैः शांतिमयैः सुज्ञानैः कोमलाशयैः ॥२२७९॥

भवितव्यं प्रयत्नेन मम यज्ञैकहेतवे ।
इत्थमुक्त्वा नमस्कृत्य पुनस्तान् प्रार्थयेत् ततः ॥२२८०॥

अहं देवपराधीनः कुलधर्मस्य वाञ्छकः ।
मदीयं यज्ञमखिलं निःछिद्रं कुरुत प्रभो ॥२२८१॥

प्रार्थ्येत्थं वहुशस्तान् वै भाषया संप्रबोध्य च ।
शक्तीः समर्चयेद् भक्त्या यथालब्धोपचारकैः ॥२२८२॥

संपूज्य प्रार्थयेत् ताश्च सुप्रसन्नः कृतांजलिः ।
ह्रीं देवि मातर्जगत्पूज्ये महेशानां च तारिणि ॥२२८३॥
तव पूजां समासाद्य सफलं सकलं च मे ।
कार्यं भवतु देवेशि यन्न्यूनं वीरपूजने ॥२२८४॥
तन्मेऽपि सफलं सर्वं जायतां कृपया तव ।
भवत्यो लोकविख्याताः शिवारूपैकधारिकाः ॥२२८५॥
भवध्वं च प्रयत्नेन कामक्रोधादिवर्जिताः ।
पूजने भवतीनां च समयो भाग्यवांछितः ॥२२८६॥
सुस्थिरत्वं च शांतित्वं विधेयं मनसि स्वके ।
भवत्यः परिपूर्णार्थाः स्वार्थैकपरिपूरिताः ॥२२८७॥
कृपां निजां समाधाय साधयंतु कृतिं मम ।
चक्रमध्येऽमृतं पीत्वा वक्तव्यं कृपयांबिके ॥२२८८॥
यथा श्रेयो भवेत् साक्षादस्माकं पापहानिता ।
एवं वहुविधैर्वाक्यै र्भाषया संप्रबोध्य ताः ॥२२८९॥
निमंत्रयेदथाचार्यं यथालब्धोपचारकैः ।
संपूज्य प्रार्थयेत् तं च चक्रसांगत्वसिद्धये ॥२२९०॥
ॐ सर्वाम्नायविधानज्ञ सर्वमंत्रैकसाधक ।
सदाचार महाज्ञान सर्वमंत्रविवेचक ॥२२९१॥
षडाम्नायक्रमाभिज्ञ सर्वक्रमनिदर्शक ।
भवितव्यं यथा देव ज्ञायतेऽन्यैश्च मादृशैः ॥२२९२॥
तथा सर्वं सुसाध्यं हि कार्यं चक्रस्य चोद्यमान् ।
वराकस्येह मे साक्षाद् यथा स्वेष्टः प्रसीदति ॥२२९३॥
स्थितिर्विज्ञायते सर्वा कुलाचारस्य यादृशी ।
श्रीमद्भिः किमहं वक्ष्ये भवांश्चैव दयानिधिः ॥२२९४॥
एवं संभाष्य भाषाभिर्गीर्भिर्बोध्य पुनः पुनः ।
आमंत्रयेच्च तच्छक्तिं यथालब्धोपचारकैः ॥२२९५॥

संपूज्य परया भक्त्या प्रार्थयेत् तां समाहितः ।
ह्रीं मातराचार्यधर्मज्ञे कलामालिनि सुस्मिते ॥२२९६॥

तथा भवत्या कर्तव्यं यथेष्टो मे प्रसीदति ।
सर्वासामिह शक्तीनां भवती पतिरूपिणी ॥२२९७॥

तत एता अपि यथा शासिताः स्युः सदाशये ।
विधीयतां तथा तत्तु मम कल्याणहेतवे ॥२२९८॥

चक्रे कुलामृतं पीत्वा भवितव्यं गुरुप्रिये ।
कुलधर्मो यथा भूयात् त्वदन्यासु च शक्तिषु ॥२२९९॥

कर्तव्यं च तथा देवि भवत्या समयार्चनम् ।
तवाधीना च मे पूजा तवाधीनं च मे तपः ॥२३००॥

सुखं मे च तवाधीनं तवाधीनोऽस्म्यहं कुलः ।
अपराधा-मदीयाश्च क्षंतव्याः क्षणकाः क्षणे ॥२३०१॥

भवती परिपूर्णा च शक्तिभिर्भवती युता ।
ततः कृपां समाधाय मयि दासे निरंतरम् ॥२३०२॥

एतत् स्तुतिं समाधाय गुरुपत्न्या महामनाः ।
परमानंदसंयुक्तो गृह्णीयात् शिवशासनम् ॥२३०३॥

अथाचार्यो गुरुं स्मृत्वा गणेशं स्वेष्टदेवताम् ।
संशोध्यासनमासीनः सामान्यार्घं विधाय च ॥२३०४॥

भूतापसारणं कृत्वा संविदं शोधयेत् ततः ।

यच्चोक्तं भावचूडामणौ—

विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरः ॥२३०५॥

न पूजां न जपं कुर्यात् न ध्यानं न च चिंतनम् ।
तस्माद् भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् ॥२३०६॥

विजयाकल्पेऽपि—

संविदासवयोर्मध्ये संविदेव गरीयसी ।
संवित् प्रयोगस्तेनादौ कर्तव्यः साधकोत्तमैः ॥२३०७॥

तारातन्त्रेऽपि—

संविदानंदयोगेन यः कारणमयो भवेत् ।
स एव परमानंदो ब्रह्मसायुज्यदायकः ॥२३०८॥

तस्माद् भुक्त्वा सिद्धमूलीं कुलीनः कारणं पिबेत् ।
विनानंदं संविदाया यः पानं कारणस्य च ।
तन्नचानंदजनकं सिद्धिरोधकरं भवेत् ॥२३०९॥

विमलातंत्रे च—

यद् यद् विधीयते कर्म साधकैः कुलकौलिकैः ।
तत्पूर्वं विजया ग्राह्या नान्यथा जायते फलम् ॥२३१०॥

तस्माद् भुक्त्वा सिद्धमूलीं कर्म कुर्यात् कुलेश्वरः ।
ततो वै परमानंदनिर्भरोन्मत्तमानसः ॥२३११॥

अनन्यमानसो भूत्वा पूजाजपादिकं चरेत् ।
सा प्रोक्ता विजयाकल्पे पुष्पभेदैश्चतुर्विधा ॥२३१२॥

श्वेतपुष्पा ब्राह्मणी च रक्तपुष्पा च क्षत्रिया ।
पीतपुष्पा भवेद् वैश्या शूद्री कृष्णप्रसूतिका ॥२३१३॥

संविदोऽस्य च मंत्रस्य दक्षिणामूर्तिरव्ययः ।
ऋषिः पंक्तिश्च छन्दोक्तं देवी वाग्वादिनी मता ॥२३१४॥

देवता वाग्भवं बीजं शक्तिः शक्तिरथोदिता ।
मन्मथं कीलकं संविद्धारणे विनियोजनम् ॥२३१५॥

षडंगं बालया कुर्यात् क्रमोत्क्रमविधानतः ।
ततो ध्यायेत् सिद्धमूलीं समाहितमनाः सुधीः ॥२३१६॥

सिद्धाढ्यां शिवबोधिनीं करलसत्पाशांकुशां भैरवीं
भक्ताभीष्टवरप्रदानकुशलां संसारबंधच्छिदम् ।
पीयूषोदधिमंथनोद्भवरसां संविद्विलासास्पदां
वीराराधितपादुकां सुविजयां ध्यायेज्जगन्मोहिनीम् ॥२३१७॥

एवं ध्यात्वा तु विजयां प्रत्येकं शोधयेत् ततः ।
संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदाऽनघे ॥२३१८॥

भैरवानंदहेत्वर्थं पवित्राभव सर्वदा ।
तारं ङेन्ता ब्राह्मणी च नमः स्वाहेति शुद्धिदः ॥२३१९॥

ब्राह्मणीं शोधयित्वैवं क्षत्रियां शोधयेत् ततः ।
सिद्धिमूलि श्रिये देवि हीनबोधप्रबोधिनि ॥२३२०॥

राजाप्रजावशंकरि शत्रुपक्षनिषूदिनि ।
वाग्भव क्षत्रियायै च नमः स्वाहेति शुद्धिदः ॥२३२१॥

क्षत्रियां शोधयित्वैवं ततो वैश्यां विशोधयेत् ।
अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्ने ब्रह्मरूपिणि ॥२३२२॥

आनंदस्याहुतिं प्रीतिं सम्यक्ज्ञानं प्रयच्छ मे ।
मायामुच्चार्य वैश्यायै नमः स्वाहेति शुद्धिदः ॥२३२३॥

एवं वैश्यां विशोध्याथ ततः शूद्रां च शोधयेत् ।
नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ॥२३२४॥

त्रैलोक्यविजये मातः समाधिफलदा भव ।
कामांते चैव शूद्रायै नमः स्वाहेति शुद्धिदः ॥२३२५॥

पृथक् पृथक् शोधयित्वा सर्वाभिः शोधयेत् ततः ।
ॐ अमृते अमृतोद्भवे अमृतवर्षिणि पदं ततः ॥२३२६॥

अमृतमाकर्षयद्वन्द्वं सिद्धि देहि ततः परम् ।
अमुकं मे ततो ब्रूयाद् वशमानय तत्परम् ॥२३२७॥

द्विठान्तोऽयं मनुः प्रोक्तः चतसृणां च शोधने ।
वायुबीजेन संशोष्य दहेद् दोषं च वह्निना ॥२३२८॥

वारुणेनामृतं कुर्याद् धेनुमुद्रां प्रदर्श्य च ।
षडंगैः सकलीकृत्य योन्या संदीपनं चरेत् ॥२३२९॥

मूलमंत्रं सप्तवारं तस्योपरि नियोजयेत् ।
आवाहनादिमुद्राश्च धेनुयोनी ततः परम् ॥२३३०॥

दिग्बन्धं छोटिकया तत्त्वत्रयपुरःसरम् ।
दिव्यदृष्ट्या तथा पार्ष्णिघातैर्विघ्नान् निवार्य च ॥२३३१॥

तर्पयेद् ब्रह्मरंध्रे च गुरुपंक्तिपरंपराम् ।
संकेतमुद्रया तद्वद् हृदि मूलेन देवताम् ॥२३३२॥

त्रिधैव तर्पयेद् भक्त्या साधकः शुद्धमानसः ।
संतर्प्य मूलमंत्रांते देवतायै समर्प्य च ॥२३३३॥

मूलमष्टोत्तरशतं जप्त्वा देव्यै समर्प्य तत् ।
विभज्याम्नायपंक्तिस्थसाधकेभ्यो यथाक्रमम् ॥२३३४॥

शक्तिभ्यश्च तथानुज्ञामादाय मनुमुच्चरेत् ।
वाग्बीजं वदयुग्मं च वाग्वादिनि ततः पदम् ॥२३३५॥

मम जिह्वापदादग्रे स्थिरीभवपदं ततः ।
सर्वसत्ववशं शब्दात् करिस्वाहेति मंत्रतः ।
स्मरन् मूलं तथा देवीं जुहुयात् कुण्डलीमुखे ॥२३३६॥

देवीमिति देवी ध्यात्वेति ।

यच्च समयातंत्रे—

कालिंदीजलसंदोहकान्तिसंतापहारिणीम् ।
वराभयसमायुक्तसव्येतरभुजद्वयाम् ॥२३३७॥

नानारोगहरां रौद्रीं सर्वसौख्यप्रदायिनीम् ।
विजयां त्वामहं वंदे सिद्धां ज्ञानमयीं पराम् ॥२३३८॥

ततश्च विजयास्तोत्रं पठेत् संयतमानसः ।
अथानन्तरतो वक्ष्ये विजयास्तोत्रमुत्तमम् ॥२३३९॥

येन स्तुता सिद्धिमूली भक्षिता सिद्धिदा भवेत् ।
ॐ संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे ॥२३४०॥

भैरवानंदहेत्वर्थं प्रसन्ना भव सांप्रतम् ।
नमामि यामिनीनाथलेखालंकृतमस्तकाम् ॥२३४१॥

भवानीं भवसंतापनिर्वापणसुधानिधिम् ।
सिद्धमूल्यक्षये देवि हीनबोधप्रबोधिनि ॥२३४२॥

राजाप्रजावशंकरि शत्रुकंठत्रिशूलिनि ।
अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्ने ब्रह्मरूपिणि ॥२३४३॥

आनंदाद्याहुतिप्रीते सम्यक् ज्ञानं प्रयच्छ मे ।
नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि ।
त्रैलोक्यविजये मातः समाधिफलदा भव ॥२३४४॥

दण्डाधिरूढपरिपूरितभोगमोक्षां
शुण्डक्रमेण मदनांजनकामिनीनाम् ।
आराधयामि भवशत्रुपराजयन्तीं
वर्णेश्वरी त्रिभुवने विजयेति देवीम् ॥२३४५॥

आनंदनंदनीनंदे सदा वंदे पदद्वयम् ।
उल्लासकदलीकंदे स्वच्छन्दे बोधरूपिणि ॥२३४६॥

कवयति कवितालहरीं कुरुते तत्त्वार्थदर्शनं पुंसाम् ।
अपहरति दुरितनिचयं किं किं न करोति संविदुल्लासः ॥२३४७॥

संविदासवयोर्मध्ये संविदेव गरीयसी ।
भक्षिता भवनाशाय निर्गंधा बोधरूपिणी ॥२३४८॥

सुसंवित् शूलिनी देवी विजया संविदङ्कुरा ।
वैष्णवी तुलसी तुंगा तेजोवल्ली रसेश्वरी ॥२३४९॥

विमर्शाद्वैतरत्नं च वीरलक्ष्मी महोदरी ।
समया मोहिनी चैव सिद्धमूली महौषधी ॥२३५०॥

मातुलानी ज्ञानरूपा सिद्धविद्या सरस्वती ।
पठित्वैतानि नामानि सेवयेत् सिद्धमूलिकाम् ॥२३५१॥

स प्राप्नोति परां विद्यां भुक्तिमुक्तिषु वांछिताम् ।
पाण्डित्यं च कवित्वं च मंत्रसिद्धिं च विंदति ॥२३५२॥

इति विजयास्तोत्रम् ।

विजयां गोपयेन् नित्यं शिष्येभ्यश्चापि सुन्दरि ।
स्वीकृत्य विजयां मंत्री सिंदूरांकितमस्तकः ॥२३५३॥

न्यासजालं स्वकल्पोक्तं कृत्वा ध्यात्वा महेश्वरीम् ।
अंतर्यागांतकं कृत्वा बहिर्यागं ततश्चरेत् ॥२३५४॥

मूर्त्ति वा स्वेष्टयंत्रं वा पीठे संस्थाप्य चाग्रतः ।
सामान्यार्घ्यं च संस्थाप्य कलशं स्थापयेत् ततः ॥२३५५॥

प्रणम्य पंचमुद्राभिः कलशं पूर्ववर्त्मना ।
चतुरस्रा च वृत्ताख्या संपुटांजलिनामिका ।
योनिमुद्रेति पंचैतास्ततः संशोधयेच्च मान् ॥२३५६॥

मान् मचतुष्टयम् ।

द्वितीयं च तृतीयं च चतुर्थं पंचमं तथा ।
पंचमीमपि संशोध्य यथोक्तविधिना शिवे ॥२३५७॥

श्रीपात्रादीनि पात्राणि स्थापयेच्च ततः क्रमात् ।
संस्थाप्यैवं च पात्राणि नवपात्राणि सप्त वा ॥२३५८॥

पंच वा त्रीणि पात्राणि तत आत्मप्रपूजनम् ।
कृत्वा च भोगपात्रेण संतर्प्य गुरुसंततिम् ॥२३५९॥

ततो हृदि परां विद्यां संप्रदायक्रमेण च ।
संतर्प्य मूलाधारे स्वां पादुकां तर्पयेत् सुधीः ॥२३६०॥

भ्रूमध्ये तर्पयेद् देवं भैरवं भैरवीं तथा ।
ततः पुष्पांजलिं दद्यात् सहस्रारनिवासिने ॥२३६१॥

तत्त्वशुद्धिं ततः कुर्यादृग्भिः सप्तभिरादृतः ।
लिखेत् त्रिकोणं तीर्थेन वामे करतले बुधः ॥२३६२॥

कोणत्रये तथैकं च मध्ये संस्थाप्य वाग्यतः ।
तारत्रयान्ते च स्वरान् समुच्चार्य च षोडश ॥२३६३॥

प्रकृत्यादि च भूम्यन्तं चतुर्विंशतितत्त्वकम् ।
आणवं मलमुच्चार्य स्थूलदेहं च विश्वकम् ॥२३६४॥

शोधयामीति मंत्रेण जुहुयात् कुंडलीमुखे ।
स्वाहान्तं ब्रह्मणे चेति मूलाधाराभिमानिने ॥२३६५॥

ब्रह्मण इदं च न मम प्रोच्चरन् दक्षसंस्थितम् ।
सशुद्धिखंडचषकं स्वीकृत्य भोगपात्रतः ॥२३६६॥

बिन्दुं गृहीत्वा चषके कादिमांतं समुच्चरन् ।
तारत्रयाद्यं च ततो मायादिपुरुषान्तकम् ॥२३६७॥

तत्त्वसप्तकमुच्चार्य कार्मिकं मलमुच्चरेत् ।
सूक्ष्मदेहं तैजसं च शोधयामीति संवदेत् ॥२३६८॥

स्वाहान्तं विष्णवे चेति हृदयाब्जाभिमानिने ।
विष्णव इदं च न मम प्रोच्चरन् वामसंस्थितम् ॥२३६९॥

शुद्धिखंडं च स्वीकृत्य द्वितीयामाहुतिं दिशेत् ।
तीर्थादानं च चषके कृत्वा वै भोगपात्रतः ।
त्रितारं यादिदशकं पंचतत्त्वमतूच्चरेत् ॥२३७०॥

शिवादिशुद्धविद्यान्तं मायिकं मलमुच्चरन् ।
कारणं देहमाभाष्य प्राज्ञं संशोधयामि च ॥२३७१॥

पशुपतये स्वाहेति ह्याज्ञाचक्राभिमानिने ।
पशुपतये त्विदं च न ममेति समुच्चरन् ॥२३७२॥

अधःस्थशुद्धिखंडेन सहितं जुहुयात् सुधीः ।
ततः संक्षालिते पात्रे तीर्थादानं च भोगतः ॥२३७३॥

कृत्वा तारत्रयान्ते च पंचाशद्वर्णमातृकाम् ।
समुच्चार्य प्रकृत्यादिषट्त्रिंशत्तत्त्वमुच्चरेत् ॥२३७४॥

पूर्वक्रमेण च पुनर्जीवात्मानं पदं ततः ।
तत्त्वत्रयाश्रयमहं शोधयामीति प्रोच्चरेत् ॥२३७५॥

सदाशिवाय स्वाहेति ब्रह्मरंध्राभिमानिने ।
सदाशिवाय चेदं स्यान्न ममेति समुच्चरन् ॥२३७६॥

स्वीकृत्य मध्यसंस्थं च शुद्धिखंडयुतं तथा ।
पुनर्भोगात् समुद्धृत्य बिन्दुं प्रक्षालिते स्वके ॥२३७७॥

चषके संत्रमुच्चार्य चार्द्रं ज्वलतिसंज्ञकम् ।
जुहुयाच्च परातृप्त्यै ततश्चैवं विभावयेत् ॥२३७८॥

शिवात्मनो गुरोश्चैक्यमानंदनिर्भरांतरः ।
स्वे स्वे दिशि च देवेभ्यो र्बालं दद्यात् समाहितः ॥२३७६॥

वटुकाय च योगिन्यै क्षेत्रपालाय वै तथा ।
गणेशाय च भूतेभ्यो राजराजेश्वरस्य च ॥२३८०॥

तत् तन्मंत्रेण च यथासंप्रदायं विचक्षणः ।
ततः पीठं च मंडूकात् परतत्त्वान्तमर्चयेत् ॥२३८१॥

पीठशक्ति पीठमंत्रं पूजयित्वा परांबिकाम् ।
ध्यात्वा हृत्कमले पूज्य मानसैरुपचारकैः ॥२३८२॥

संप्रार्थयेद् बाह्यपूजाग्रहणाय महेश्वरीम् ।
वहन्नासाध्वनानीय त्रिखंडकुसुमाञ्जलौ ॥
तत्पुष्पं निक्षिपेद् पीठे मूर्त्तौ वा भक्तितत्परः ॥२३८३॥

आवाहिन्यादिका मुद्राः सकलीकरणान्तिकाः ।
दर्शयित्वा परांबायै परमीकरणं चरेत् ॥२३८४॥

ततश्चैवं यथालाभैरुपचारैश्च पूजयेत् ।
षोडशैश्च चतुःषष्टिविधैः पंचविधैश्च वा ॥२३८५॥

संपूज्य परमेशानीं महानैवेद्यमर्पयेत् ।
दक्षहस्ते शुद्धिखंडं वामहस्तेन संस्पृशन् ॥२३८६॥

श्रीपात्रं प्रपठेन् मंत्रं ध्यायन् देवीं समाहितः ।
ॐ परमं वारुणीकल्पं कोटिकल्पान्तकारिणि ॥२३८७॥

गृहाण शुद्धिसहितं देहि मे मोक्षमव्ययम् ।
शुद्धचासवरसास्वादपरमानंदनिर्भरे ।
अपारे भवसंसारे त्राहि मां परमेश्वरि ॥२३८८॥

मूलान्ते शुद्धिसहितमासवं श्रीपदात् पुनः ।
परादेव्यै निवेदयामि नमश्चैतेन संदिशेत् ॥२३८९॥

ततो वारत्रयं तर्प्य श्रीपात्रामृतवारिणा ।
प्रणम्य च पुनर्दद्यात् पंचपुष्पांजलिं सुधीः ॥२३९०॥

ततः संपूजयेद् भक्त्या ह्यंगावरणदेवताः ।
स्वकल्पोक्तविधानेन श्रीकुलोक्तक्रमं त्विदम् ॥२३९१॥

कालीकुले विशेषार्घ्यस्यैव श्रीपात्रता स्मृता ।
तमेव संमुखे कृत्वा मंत्रमेनमुदीरयेत् ॥२३९२॥

प्रणवं कालियुगलं कूर्चयुग्मं समुच्चरन् ।
अमृतमासवं चेति विधिवत् स्वादुशब्दतः ॥२३९३॥

कुरुद्वयं तथा स्वाहा चतुर्विंशतिवर्णवान् ।
सप्तवारमिमं जप्त्वा पूर्ववदुच्चरेत् ततः ॥२३९४॥

एतत् शुद्धयासवं दैव्यै अमुक्यै ह्यर्पयामि हृत् ।
एवं निवेद्य देव्याश्च परिवारान् प्रतर्प्य च ॥२३९५॥

अंगावृत्तियुतां तद्वत् शेषिकायै बलिं दिशेत् ।
मूलं सहस्रं जप्त्वाथ जुहुयात् तद्दशांशतः ॥२३९६॥

ततः कवचसाहस्रनामस्तोत्रादिसंस्तवैः ।
स्तुत्वा देवीं प्रसन्नात्मा वीरपूजार्थमीश्वरीम् ॥२३९७॥

प्रार्थयेत् परया भक्त्या कृतांजलिपुटः सुधीः ।
श्रीमातः परमेशानि त्वत्प्रीत्यर्थमहं मुदा ॥२३९८॥

चक्रार्चनं करोम्यद्य गृहाण शिवसंयुता ।
एवं प्रार्थ्य स्वदक्षे तु संस्थितं श्रीगुरुं ततः ॥२३९९॥

संपूज्य तस्मै तत्पात्रं समर्प्य प्रणमेत् तथा ।
गुरोरभावे तत्पात्रं जले निक्षिप्य वै तथा ॥२४००॥

वीरान् शिवधिया शक्ती र्देवीबुद्ध्योपचारकैः ।
समर्च्य शक्तिपात्रं तु तस्यै दद्यादनेन च ॥२४०१॥

ॐ गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
स्वर्णपात्रस्थितं द्रव्यं शुद्धिखंडं समाहर ॥२४०२॥

अलिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ।
स्वीकृत्य सुभगे देवि श्रियं देहि रिपून् दह ॥२४०३॥
वीरपात्रासवं तेभ्यो दत्वा शुद्धियुतं तथा ।
ते कराभ्यां गृहीत्वा तु मूलमष्टोत्तरं शतम् ॥२४०४॥
जपित्वा च समर्प्यास्यै नत्वा ध्यात्वा कुलेश्वरीम् ।
न दद्यादेकहस्तेन नैकहस्तेन संयजेत् ॥२४०५॥
कराभ्यां पात्रमादाय जुहुयात् कुंडलीमुखः ।
ततः सामयिकैः सार्धं पात्रवंदनमाचरेत् ॥२४०६॥

तन्मंत्रश्च—

ॐ श्रीमद्भैरवशेखर प्रविलसच्चंद्रामृतप्लावितम्
क्षेत्राधीश्वरयोगिनीगणमहासिद्धैः समाराधितम् ।
आनंदागमकं महात्मकमिदं साक्षात् त्रिखंडामृतम्
वंदे श्रीप्रथमं करांबुजगतं पात्रं विशुद्धिप्रदम् ॥२४०७॥
प्रणम्यानेन पात्रं तु कृत्वा वामकरे पुनः ।
शुद्धिखंडं दक्षहस्ते गृहीत्वा तौ नियोज्य च ॥२४०८॥
ध्यायेदनन्यमनसा सुरां सिद्धिप्रदायिनीम् ।
समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ॥२४०९॥
तत्रोत्पन्ना सुरादेवी कन्यकारूपधारिणी ।
गोमूत्रसदृशाकारा फेनामृतसमुद्भवा ॥२४१०॥
अष्टादशभुजै र्युक्ता नीरजायतलोचना ।
नवकुंभधरा सा तु नवपात्रधरा तथा ॥२४११॥
नग्ना कालाग्निसदृशी कृतहस्तोल्लसन्मुखी ।
आनंदोऽस्या करे जात आनन्दश्च महेश्वरः ॥२४१२॥
तयो र्योगेऽभवत् ब्रह्मा विष्णुश्चाह्लाद एव च ।
तस्मादिमां सुधां देवीं पूर्णाहंतां जुहोम्यहम् ॥२४१३॥
इदं पवित्रममृतं पिबामि भवभेषजम् ।
पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥२४१४॥

चित्ते स्वातन्त्र्यभावत्वात् तस्यानंदमयत्वतः ।
तन्मयत्वाच्च भावानां भावांश्चांतर्हिता रसे ।।२४१५।।

स्वस्वातन्त्र्यविकाशाय सुरसस्तेन पीयते ।
तस्मादिमां सुधारूपां पूर्णाहन्तां पिबाम्यहम् ।।२४१६।।

अहंतापात्रसंभूतमिदंतापरमामृतम् ।
पराहंतामये वह्नौ जुहोमि शिवरूपताम् ।।२४१७।।

स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ।
कुण्डल्याकृतिचिद्वह्नौ हुनेद् द्रव्यं समंत्रकम् ।।२४१८।।

एतान् मन्त्रन् पठित्वा च स्मृत्वा मूलं पुनस्तथा ।
आज्ञां संप्रार्थयेत् शक्तिसाधकेभ्यो जुहोमि च ।।२४१९।।

आत्मतत्त्वं शोधयामि स्वाहेति कुण्डलीमुखे ।
शिवोऽहमिति स्वात्मान ध्यायन् वै जुहुयात् ततः ।
शुद्धिखंडं गृहीत्वा तु पात्रमाधारके न्यसेत् ।।२४२०।।

शक्तिसगमे विशेष —

गृह्णामीति प्रगृह्णस्व गौडे पानक्रमं भवेत् ।
जुहोमि प्रजुषस्वेति केरले पानकर्म च ।।२४२१।।

होष्यामि प्रजुषस्वेति काश्मीरे पानमीरितम् ।
पुनर्द्वितीयपात्रं तु समीनं च ददेद् गुरुः ।।२४२२।। इति ।

गुरुरित्युपलक्षणम्। चक्रेश्वर. स्वकरौ क्षालयित्वा तु पात्राणि परिवेशयेत्। अतश्च पृष्ठदेशसस्थापिते पात्रे करौ प्रक्षाल्य परामृत पात्रेषु दद्यात् ।

दानपरिमाणमाह समयातन्त्रे —

न दद्यात् कर्षतो न्यूनं न कर्षादधिकं तथा ।
द्वितीयं पात्रमुत्थाप्य पुनर्वंदनमाचरेत् ।।२४२३।।

तन्मन्त्रश्च—

हैमं शीधु रसावहं दयितया दत्तं च पेयादिभिः
किंचिच्चंचलरक्तपंकजदृशा सानंदमुद्वीक्षितम् ।
वामे स्वादुविशुद्धशुद्धिकवलं पाणौ निधायात्मके
वंदे पात्रमहं द्वितीयमधुनानंदैकसंवर्धनम् ॥२४२४॥

मूलं विद्यातत्त्वमंते शोधयाम्यग्निवल्लभा ।
जुहोम्युच्चार्य जुहुयात् समीनं साधकाग्रणीः ॥२४२५॥

पात्रं चक्रेश्वरस्तद्वत् तृतीयं परिवेश्य च ।
देवं ध्यात्वा महामुद्रासहितं तीर्थमर्पयेत् ।
तृतीयं पात्रमुत्थाप्य पुनर्वंदनमाचरेत् ॥२४२६॥

तन्मन्त्रश्च—

सर्वाम्नायकलाकलापकलितं कौतूहलोद्योतितं
चंद्रोपेन्द्रसहेन्द्रशंभुवरुणब्रह्मादिभिः सेवितम् ।
ध्यातं देवगणैः परं मुनिगणै र्मोक्षार्थिभिः सर्वदा
वंदे पात्रमहं तृतीयमधुनानंदैकसंवर्धनम् ॥२४२७॥

मूलान्ते शिवतत्त्वं च शोधयाम्यनलांगना ।
जुहोम्युच्चार्य जुहुयात् समुद्रं स्थिरमानसः ॥२४२८॥

ततश्चतुर्थपात्रं तु परिवेश्य यथाविधि ।
शुद्धिं मीनं च मुद्रां च तथैव विनिवेद्य च ।
चतुर्थं पात्रमुद्धृत्य तद्वंदनमथाचरेत् ॥२४२९॥

तन्मत्रश्च—

मद्यं मीनरसावहं हरिहरब्रह्मादिभिः पूरितं
मुद्रामैथुनधर्मकर्मनिरतं क्षाराम्लतिक्ताश्रयम् ।
आचार्याष्टकसिद्धभैरवकलान्यासेन संशोधितं
पायात् पंचमकारतत्त्वनिलयं पात्रं चतुर्थं नमः ॥२४३०॥

मूलं प्रकृतितत्त्वं च शोधयाम्यनलांगना ।
जुहोम्युक्त्वा च जुहुयात् त्रिभिः सह चतुर्थकम् ॥२४३१॥

त्रिभिः सहेति मासमीनमुद्राभि. ।

ततश्च पंचमं पात्रं परिवेश्य च पूर्ववत् ।
शक्त्युच्छिष्टं प्रार्थयेच्च मंत्रमेनं समुच्चरन् ॥२४३२॥

परेशि भक्तिसुलभे परामृतरसप्रिये ।
कटाक्षभरितं पात्रशेषं देहि दयां कुरु ॥२४३३॥

पुनश्च—

आनंदेन विना देवि न च तृप्यन्ति मातरः ।
तस्मादानंदपात्रं मे देहि दिव्यं वरानने ॥२४३४॥

स्वीकृत्य प्रार्थनां शक्तिः सावशेषं स्वपात्रकम् ।
प्रीत्याचार्याय दद्याच्च मंत्रोच्चारणपूर्वकम् ॥२४३५॥

तन्मंत्रश्च—

पीतशेषं प्रदास्यामि वत्स तुभ्यं कुलामृतम् ।
तव शत्रून् हनिष्यामि दास्यामि परमां श्रियम् ॥२४३६॥

आदाय साधकस्तच्च वीरेभ्यः संविभज्य ह ।
स्वयं चापि पठन् मंत्रं स्वीकुर्याद् भक्तितत्परः ॥२४३७॥

तन्मत्रश्च—

आदाय च स्वयं साक्षादादिशक्ते मुखांबुजात् ।
गलितं परमानंदरससारं पिबाम्यहम् ॥२४३८॥

एवमुक्त्वा पंचमं च पात्रमुत्थाप्य वन्दनम् ।
पठित्वा जुहुयादन्त र्यथेच्छाचर्वणेन च ॥२४३९॥

तन्मत्रश्च—

आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दंतिनः ।
सोऽहं भैरवमर्चयन् प्रतिदिनं तारागणैरक्षतै-
रादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किंकरैः ॥२४४०॥

मूलं पुरुषतत्त्वं च शोधयामि शुचिप्रिया ।
जुहोम्युक्त्वा च जुहुयात् सशेषं कुंडलीमुखे ॥२४४१॥

नानाव्यंजनसंयुक्तमन्नं स्वीकृत्य साधकः ।
परिवेश्य तथा षष्ठं पात्रं संध्यामुपाचरेत् ॥२४४२॥

सध्यां कुलसध्याम् ।

यच्च रेवतीतन्त्रे—

प्रदद्यात् प्रथमे पात्रे पिशितं परमेश्वरि ।
द्वितीये तु वरारोहे मत्स्यं दद्यात् सुसाधितम् ॥२४४३॥

तृतीये तु महेशानि मुद्रां दद्यात् मनोरमाम् ।
चतुर्थे च महेशानि मांसै र्मत्स्यैश्च मुद्रया ॥२४४४॥

पंचमे तु महेशानि ह्यद्यात् मंत्री यथेच्छया ।
शक्तवक्त्युच्छिष्टसमायुक्तं पंचमं पात्रमाहरेत् ॥२४४५॥

ततश्च परमेशानि कुलसंध्यां समाचरेत् ।

कुलसध्यां पचममिति । पचपात्राधिकारे बोध्यम् । एकादशपात्राधिकारे तु विशेषो यथा तत्रैव ।

कौलसर्वस्वे च—

शुद्धया तु प्रथमं पात्रं मीनेनैव द्वितीयकम् ।
मुद्रया तु तृतीयं स्यात् त्रिभिः सह चतुर्थकम् ॥२४४६॥

तदन्यत् पंचमे दद्यात् नानाव्यंजनसंयुतम् ।
परमान्नं तथा षष्ठे सप्तमे पिष्टलड्डुकान् ॥२२४४७॥

अष्टमे दधिदुग्धादि नवमे च फलादिकम् ।
लेह्यादि दशमे दद्याद् रुद्रपात्रे यदृच्छया ॥२४४८॥

अन्यदपि तत्रैव—

प्रथमे तु गुरोर्ध्यानं द्वितीये स्वेष्टचिंतनम् ।
प्राणायामं तृतीये च चतुर्थे जपमाचरेत् ।
पंचमे शक्तिशेषं च पंचमं तदनन्तरम् ॥२२४९॥ इति ।

एव यथासामर्थ्यं यावन्न चलते दृष्टिरिति पुरस्कृत्य पचमान्त सप्तमान्ता नवमान्तमेकादशान्ता वा बोध्यम् । इति वीरपरम् ।

दिव्यस्तु—

**स्मरन् गुरुं पिबेत् द्रव्यं पात्रे पात्रे जपं चरेत् ।**
**स शब्दं न पिबेत् द्रव्यं न बिंदुं पातयेदधः ॥२४५०॥**

तेन यथा शब्दो न जायेत भूमौ च बिन्दुरपि न पतति तथा सावधानेन पानं विधेयमिति ।

अथ कुलसंध्या यथा यामले—

शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ।
सा संध्या कुलनिष्ठानां समाधिस्थैः प्रगीयते ॥२४५१॥

तद्यथा—

स्वशक्तिं सम्मुखे कृत्वा भालं स्पृष्ट्वा शतं जपेत् ।
केशे शतं च सिंदूरमंडले च शतं जपेत् ॥२४५२॥

कुचयुग्मे शतद्वन्द्वं नाभौ योनौ शतं शतम् ।
शतत्रयं च तां पश्यन् निर्निमेषतया जपेत् ॥२४५३॥

ततश्चाष्टोत्तरशतं प्रणवं स्वध्वजोपरि ।
जप्त्वा शिवोऽहमात्मानं देवीरूपां विभाव्य ताम् ॥२४५४॥

सुविकाश्य ध्वजं योनिं स्मरन् मूलं रमेच्च ताम् ।
रेतःपाते पठेदेनं मूलान्ते मनुमुत्तमम् ॥२४५५॥

धर्माधर्महविर्दीप्तस्वात्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥२४५६॥

स्वाहान्तं मंत्रमुच्चार्य पुनरन्यं पठेत् मनुम् ।
प्रकाशाकाशहस्ताभ्यामवलंब्योन्मनीस्रुचा ।
धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥२४५७॥

स्वाहांतेनाहुतिं पूर्णां रेतोरूपां विसृज्य च ।
तदुत्पन्नामृतं तत्र पुष्पेणोद्धृत्य साधकः ॥२४५८॥

ततश्चैकादशं पात्रं परिवेश्य च पूर्ववत् ।
आचरेद् वंदनं तद्वत् पात्रं कृत्वा करांबुजे ॥२४७७।

तन्मन्त्रश्च—

पापघ्नं शांतिसुखदं दिव्यं स्वादु सुखालयम् ।
पात्रमेकादशं वंदे गुरुसेवासुखागतम् ॥२४७८॥

मूलान्ते सर्वतत्त्वं च शोधयामि शुचिप्रिया ।
जुहोम्युक्त्वा च जुहुयादेवं हि कुंडलीमुखे ।

ततो यथेष्टं भुंजीत नानास्वादुसमन्वितम् ॥२४७९॥
यावन्न चलते दृष्टि र्यावन्न चलते मनः ।

तावत् पानं प्रकर्तव्यं पशुपानमत परम् ॥२४८०॥
मंत्रार्थस्फुरणार्थाय ब्रह्मज्ञानस्थिराय च ।
अलिपानं प्रकुर्वीत लोलुपो नरकं व्रजेत् ॥२४८१॥ इति ।

एकादशपात्रस्वीकाराशक्तौ नवमं सप्तमं पचमं वा गृह्णीयात् । एतद् वाक्यं गृहस्थसाधकानामवश्यमेवावगतव्यम् । यत्तु—"पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले । उत्थाय च पुनः पीत्वा भूयो जन्म न विद्यते ॥" इति तत्तूत्तमाधिकारिपरम् ।

एवं कृत्यं समाप्यान्ते शांतिस्तोत्रं समाहितः ।
पठित्वा च ततः पात्रप्रशंसाख्यं स्तवं पठेत् ॥२४८२॥

तदन्ते संस्तवेद् वीरान् वीरवंदनतः सुधीः ।
कुलस्तोत्रं पठित्वा तु प्रणम्य चक्रगाँस्तथा ॥२४८३॥

ब्रह्मार्पणेन मनुना कृत्यं देव्यै समर्प्य तत् ।
क्षमाप्य च जगद्धात्रीं धूपैर्नीराजनादिभिः ॥२४८४॥

तांबूलवीटिकाभिश्च संपूज्य परदेवताम् ।
श्रीपात्रमात्मनि तथा संयोज्य कलशं तथा ॥२४८५॥

मंत्रेण भगमालिन्या समुत्थाप्य यथाविधि ।
छिद्रावधारणं कुर्यादर्घदानेन वै तथा ॥२४८६॥

यन्नच्छिद्रं तपश्छिद्रं यच्छिद्रं यजने मम ।
तत् सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥२४८७॥

ततः श्रीपरमेशानीं विसृजेद् हृदि मुद्रया ।

मुद्रया सहारमुद्रया ।

प्राणायामषडंगादि कृत्वा ध्यायन् स्वदेवताम् ।
पात्रं प्रक्षाल्य स्वे वामे भूमौ पूज्यं सपुष्पकम् ॥२४८८॥

दत्वा श्रीगुरवे तत्र भूमौ बीजं कनिष्ठया ।
मायां च विलिखेद्वीरस्तन्मृदा तिलकं तथा ॥२४८९॥

कुर्यादनेन मन्त्रेण निजभाले समाहितः ।
यं यं स्पृशामि पादेन य य पश्यामि चक्षुषा ॥२४९०॥

स एव दासतां यातु यदि शक्रसमो भवेत् ।
ततः श्रीचक्रराजं तु संस्नाप्य शुद्धवारिणा ॥२४९१॥

पुष्पादिभिः समभ्यर्च्य गोपयेत् पशुदृष्टितः ।

यच्च—

स्वमंत्रसंस्कृतं यंत्रं सर्वदा गोपयेत् शिवे ॥२४९२॥ इति ।

ततः पुष्पादिनिर्माल्यं धारयित्वा च तज्जलम् ।
पीत्वा पठेदिदं श्लोकं संस्मरन् देवतां हृदि ॥२४९३॥

तज्जल यत्रप्रक्षालनजलम् ।

मन्त्रश्च—

गंगापुष्करनर्मदासु यमुनागोदावरीगोमती-
गंगाद्वारप्रयागतीर्थबदरीवाराणसीसिंधुषु ।
रेवा सेतुसरस्वतीप्रभृतिषु ब्रह्माण्डभांडोदरे
तीर्थस्नानसहस्रकोटिफलदं श्रीचक्रपादोदकम् ॥२४९४॥

सम्यक् शतक्रतून् कृत्वा यत् फलं लभते नरः ।
तत् फलं समवाप्नोति कृत्वा श्रीचक्रपूजनम् ॥२४९५॥

निधाय कस्मिंश्चित् पात्रे गंधाष्टकयुतं तथा ।
कृत्वा मंत्रेण संशोध्य देवीं तेन प्रतर्पयेत् ॥२४५९॥

गधाष्टक तु यमालिकातत्रे—

रक्तं श्वेतं चंदनं स्यात् कर्पूरं रोचना तथा ।
कस्तूरी शिह्लकं चैव कुंकुमोशीरकौ तथा ॥२४६०॥
गंधाष्टकमिदं भद्रे शक्तिद्रव्येषु मेलयेत् । ॥२४६१॥

मत्रेण कुण्डगोलशोधनमत्रेणेति ।

ततः सामयिकेभ्यस्तु विभज्य च ततः स्वयम् ।
उत्थाय षष्ठं पात्रं च तद्वंदनमथाचरेत् ॥२४६२॥

तन्मत्रश्च—

छत्रं चामरभद्रपीठपरमानंदोदयं दायकं
वाजीदन्तिमनोहरं सुखकरं सायुज्यसाम्राज्यदम् ।
नानाव्याधिभवांधकारहरणं जन्मान्तरध्वसनं
श्रीमद्भैरवभैरवीप्रियतरं पात्रं च षष्ठ नुमः ॥२४६३॥

मूलान्ते च मनस्तत्त्वं शोधयाम्यग्निवल्लभा ।
जुहोम्यन्ते च जुहुयात् शक्तिद्रव्येण संयुतम् ॥२४६४॥

स्वीकृत्य परमान्नं तु सप्तमं परिवेश्य च ।
पिष्टलड्डुकसंयुक्तं पात्रवंदनमाचरेत् ॥२४६५॥

तन्मत्रश्च—

जाग्रत्स्वप्नसुषुप्तिबोधपवनं चैतन्यसाक्षिप्रदं
विद्युद्भास्करवह्निचंद्रधनुषां ज्योतिःकलाव्यापितम् ।
वामा पिंगलमध्यगा त्रिवलया सत्कुंडली चोर्ध्वगं
पात्रं सप्तमपूरणेन तरुणानंदप्रदं पातु माम् ॥२४६६॥

मूलान्ते बुद्धितत्त्वं च शोधयामि शुचिप्रिया ।
जुहोम्युक्त्वा च जुहुयात् पिष्टलड्डुकसंयुतम् ॥२४६७॥

ततश्चैवाष्टमं पात्रं परिवेश्य यथाक्रमम् ।
दधिदुग्धादिसहितं ततो वंदनमाचरेत् ॥२४६८॥

तन्मन्त्रश्च—

खड्गं पादुकमञ्जनं सुतिलकं कंठे हि सारस्वतं
शत्रो वागबलशौर्यकार्यहरणं देहस्थितेः कारणम् ।
वांच्छासिद्धिकरं मनःस्थितिकरं वश्यं जगद्योषितां
पात्रं चाष्टममष्टसिद्धिकरणं प्रौढप्रसन्नं भजे ॥२४६९॥

मूलान्तेऽहंकारतत्त्वं शोधयाम्यनलांगना ।
जुहोम्याभाष्य जुहुयाद् दधिदुग्धादिसंयुतम् ॥२४७०॥

ततश्च नवमं पात्रं परिवेश्य यथाविधि ।
तेभ्यश्च नवमं दद्यात् फलमूलादिसंयुतम् ॥
वंदनं पूर्ववत् कुर्यादेनं मंत्रमुदीरयन् ॥२४७१॥

तन्मन्त्रश्च—

सर्वानन्दकरं सदाशिवपदं सर्वार्थसंपत्प्रदं
साम्राज्यार्थकरं समस्तसुखदं चाज्ञानविध्वंसनम् ।
आयुष्कांतियशोविवर्धनकरं संसारमोहच्छिदं
पात्रं लक्षगुणात्मकं च नवमं प्रौढप्रतापं भजे ॥२४७२॥

मूलान्ते शक्तितत्त्वं च शोधयाम्यनलांगना ।
जुहोम्यन्ते च जुहुयात् फलमूलादिसंयुतम् ॥२४७३॥

ततश्च दशमं पात्रं परिवेश्य यथाविधि ।
पूर्ववद् वंदनं कुर्यात् मंत्रमेनं समुच्चरन् ॥२४७४॥

मन्त्रश्च—

ब्रह्मविष्णुमहेशानां देवानां च विशेषतः ।
दुर्लभं पावनं पात्रं दशमं प्रणमाम्यहम् ॥२४७५॥

मूलान्ते भैरवं तत्त्वं शोधयामि शुचिप्रिया ।
जुहोम्युच्चार्य जुहुयात् सलेह्यं भक्तितत्परः ॥२४७६॥

एवं चक्रं समाप्याथ दत्वा तेभ्यश्च दक्षिणाम् ।
विसर्जयेद् वीरशक्तीः प्रणम्य च मुहुर्मुहुः ॥२४९६॥

अतिपानवशात् कश्चित् साधको मूर्च्छितो यदि ।
तदा चिचा प्रयोक्तव्या नान्यकाले कदाचन ॥२४९७॥

आनंदनाशिनीं चिचां यस्तु चक्रे प्रयोजयेत् ।
योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः ॥२४९८॥

इत्येतत् कथितं सर्वं कुलचक्रार्चनक्रमम् ।
गोपितव्यं गोपितव्यमनर्हेषु च सर्वदा ॥२४९९॥

इति श्रीमदागमरहस्ये सत्सग्रहे चक्रार्चनक्रमो नाम
दशम पटल ॥१०॥ आदितश्चाष्टात्रिंगत् ।

## अथ एकादशः पटलः ।

अधुना कथ्यते सम्यगुल्लासभेदनिर्णयम् ।
तथैव चक्रभेदं च वासनां च तयोरपि ॥२५००॥

यच्च श्रीकुलार्णवे—

पानभेदपरोल्लासप्रमाणस्थितिलक्षणम् ।
अविज्ञायाचरेद् यस्तु स भवेदापदां पदम् ॥२५०१॥

अधुना कथ्यते सम्यगुल्लासभेदनिर्णयम् ।
यस्य विज्ञानमात्रेण जायते दिव्यभावना ॥२५०२॥

आरंभस्तरुणश्चैव यौवनः प्रौढ एव च ।
तदन्तश्चोन्मनाभावावस्थोल्लासस्तु सप्तमः ॥२५०३॥

अत्रान्तरे तदन्तोन्मनयो र्लक्षणम्—

तदन्तं जाग्रदित्युक्तं चोन्मना स्वप्नसंज्ञकः ।
सप्तोल्लासं च यो वेत्ति स मुक्तः स च कौलिकः ॥२५०४॥

अनवस्था सुषुप्तिश्च अवस्थात्रयसंयुतम् ।
स्थूलान्तमात्मतत्त्वं स्याद् विद्या सूक्ष्मान्तगोचरम् ॥२५०५॥

शिवतत्त्वं कारणान्तमिति तत्त्वत्रयं स्मृतम् ।
एवं तत्वत्रयज्ञानं गुरो र्ज्ञात्वा य आचरेत् ।
स जीवन्नेव मुक्तः स्यादिति शंकरभाषितम् ॥२५०६॥

अथोल्लासानां लक्षण कुलार्णवे—

तत्त्वत्रयं स्यादारंभः कथितः कुलनायिके ।
कथितस्तरुणोल्लासस्तरुणं सुखमम्बिके ॥२५०७॥

यौवनं मनसः सम्यगुल्लासः कथितः प्रिये ।
स्खलनं दृङ्मनोवाचां प्रौढ इत्यभिधीयते ॥२५०८॥

सद्योल्लासपरे चक्रे य इच्छेत् पात्रमेलनम् ।
अर्वाक् प्रौढसमुल्लासान्नैव कुर्यात् कदाचन ।
यथाधिकारं तत्रापि कर्तव्यं पात्रमेलनम् ॥२५०९॥

अदीक्षितैरनाचारैरमन्त्रज्ञैरदैवतैः ।
दूषकैः समयभ्रष्टै र्न कुर्यात् पात्रमेलनम् ॥२५१०॥

स्त्रीद्विष्टै र्गुरुशप्तैश्च भक्तिहीनै र्दुरात्मभिः ।
कुलोपदेशहीनैश्च न कुर्यात् पात्रमेलनम् ॥२५११॥

अभिन्नं मन्यमानैश्च सपंचव्रतधारिभिः ।
पशुभिः क्षुद्रकर्मस्थै र्न कुर्यात् पात्रमेलनम् ॥२५१२॥

पदवाक्यप्रमाणज्ञाः श्रुतिस्मृत्यर्थवेदिनः ।
कुलधर्मानभिज्ञाश्चेत् तत्संगं वर्जयेत् प्रिये ॥२५१३॥

स्त्रीपुत्रमित्रबंधूनां स्निग्धानामपि पार्वति ।
कुलाचारानभिज्ञानां संगतिं वर्जयेत् प्रिये ॥२५१४॥

सत्कुलेऽपि प्रसूतानां वृद्धस्वाचारवर्तिनाम् ।
त्वत्पूजाविमुखानां च संगतिं वर्जयेत् प्रिये ॥२५१५॥

अदृष्टपुरुषाणां च देशांतरनिवासिनाम् ।
विना संकेतयोगेन न कुर्यान् मेलनं प्रिये ॥२५१६॥

एकपात्रं न कुर्वीत यदि साक्षान् महेश्वरः ।
मंत्राः पराङ्मुखा यांति विघ्नाश्चैव पदे पदे ॥२५१७॥

स्वपात्रस्थितहेतुं च न दद्याद् भैरवाय च ।
यदि दद्यात् कुलेशानि देवताशापमाप्नुयात् ॥२५१८॥

आसनं भोजनं पात्रमंवरं शयनादिकम् ।
अनभिज्ञैरनर्हैश्च संकरं नैव कारयेत् ॥२५१९॥

स्रोतोऽभेदेन वा कुर्यात् कौलिकैः पात्रमेलनम् ।

स्रोतोऽभेदेनाम्नायाभेदेन कुलभेदेन वेति कालीकल्पलताकारः।

यच्च कुलार्णवे—

पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयोस्तथा ।

तस्मिन् क्रमार्चनपरै र्वीरैः स्वसदृशैरपि ॥२५२०॥
कामिनीभिश्च तत् कुर्यात् स्रोतसां च चतुष्टये ।

योगिभि र्योगिनीभिश्च प्रदत्तं पूर्णपात्रकम् ।
स्वमातृपादुकामूलमंत्रं जप्त्वा पिबेत् प्रिये ॥२५२१॥

क्वचित् यदृच्छया प्राप्तमलिपात्रं तु भक्तितः ।
आदाय पूर्ववज्जप्त्वा पिबेद् देवि गुरुं स्मरन् ॥२५२२॥

निजपात्रे समादायेत्यर्थ ।

गुरुशक्तिसुतानां च गुरुज्येष्ठकनिष्ठयोः ।
स्वज्येष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य पार्वति ॥२५२३॥

शक्तच्छिष्टं पिवेद् द्रव्यं वीरोच्छिष्टं तु चर्वणम् ।
आत्मोच्छिष्टं न दातव्यं परकीयं न भक्षयेत् ॥२५२४॥

उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत् ।
चक्रमध्ये तु देवेशि नान्यथा पतनं भवेत् ॥२५२५॥

कनिष्ठानां स्वशिष्याणां दद्यात् स्वोच्छिष्टमम्बिके ।
दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदां पदम् ।।२५२६।।

आसवोच्छिष्टपात्रं तु यो वा गृह्णाति मूढधीः ।
स्नेहाल्लोभाद् भयाद् वापि देवताशापमाप्नुयात् ।।२५२७।।

प्रौढोल्लासे महेशानि कुर्याद् बलिविसर्जनम् ।
प्रौढोल्लासं तु कथितं षष्ठादौ पंचमान्तरे ।।२५२८।।

पूजागृहात् बहिः कुर्यात् त्रिकोणं तु गृहान्तरे ।
गंधपुष्पाक्षतैः पूज्य ध्यायेदुच्छिष्टभैरवम् ।।२५२९।।

गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं ध्यायेत् सर्वविघ्नविनाशनम् ।।२५३०।।

पूर्वोक्तवद् बलिं दद्यादवश्यं तत्र साधकः ।
ततो दद्यात् सुशीलाय प्रसादं कुलनायिके ।।२५३१।।

स्वाभीष्टचेष्टाचरणं प्रौढांतः परिकीर्तितः ।
प्रौढांतोल्लासके देवि मुदिते योगिमंडले ।।२५३२।।

योगिनीमंडले चैव चक्रमानंदमुच्यते ।
तदारूढेषु वीरेषु कार्याकार्यं न विद्यते ।।२५३३।।

इत्येव शास्त्रसंपत्तिरित्याज्ञा पारमेश्वरी ।
अत्र यद् यद् कृतं कर्म शुभं वा यदि वा शुभम् ।।२५३४।।

तत्सर्वं देवता प्रीत्यै जायते सुरसुन्दरि ।
जल्पो जपफलं तंद्रा समाधिरभिधीयते ।।२५३५।।

विक्रिया पूजनं देवि छर्दितं भैरवो बलिः ।
मुक्तिः स्यात् शक्तिसंयोगः स्तोत्रं तत्कुलभाषणम् ।।२५३६।।

न्यासोऽवयवसंस्पर्शः कंडूतिर्हवनक्रिया ।
वीक्षणं ध्यानमीशानि शयनं वंदनं भवेत् ।।२५३७।।

तदुल्लासश्च वीराणां या चेष्टा सा च सत्क्रिया ।
कार्याकार्यविचारं तु यः करोति स पातकी ।।२५३८।।

एतच्चक्रगता वीरा विज्ञेया परयोगिनः ।
येनाप्नुवन्ति मनुजाः साक्षाद् भैरवरूपताम् ॥२५३९॥

संमोदकोपशमनं पतनोद्गारनर्तनम् ।
वेणुवीणादिवाद्यं च कवितारचनादिकम् ॥२५४०॥

रोदनं भाषणं पातः समुत्थानं विजृंभणम् ।
गमनं विक्रिया देवि योग इत्यभिधीयते ॥२५४१॥

चक्रेऽस्मिन् योगिनो वीरा योगिन्यो मदमंथराः ।
समाचरन्ति देवेशि यथोल्लासं मनोगतम् ॥२५४२॥

शनैः पृच्छति पार्श्वस्थान् विस्मृत्यात्मविवक्षितम् ।
निधाय वदने पात्रं निर्विण्णा निवसन्ति च ॥२५४३॥

मत्वा स्वपुरुषं मत्ता कांतान्यमवलंबति ।
तथा स्वपुरुषाश्चापि प्रौढान्तोल्लाससंयुताः ॥२५४४॥

पुरुषः पुरुषं मोहादालिंगत्यंगनांगनाम् ।
पृच्छति स्वपतिं मुग्धा कस्त्वं काऽहमिमे च के ॥२५४५॥

किं कार्यं वयमायाताः किमर्थमिह संस्थिता ।
उद्यानं किमिदं हंत गृहं किं वांगणं किमु ॥२५४६॥

मुखे संपूर्य मदिरां पाययन्ती स्त्रियः प्रियान् ।
उपदंशं मुखे क्षिप्त्वा निक्षिपन्ति प्रियानने ।
गृह्णन्त्यन्योन्यपात्राणि व्यंजनानि च शांभवि ॥२५४७॥

धृत्वा शिरसि नृत्यंति मद्यभांडानि योगिनः ।
अज्ञातकरतालांतमस्याष्टाक्षरगीतकम् ॥२५४८॥

प्रस्खलत्पादविन्यासं नृत्यन्ति कुलशक्तयः ।
योगिनो मदमत्ताश्च पतंति प्रमदोपरि ॥२५४९॥

मदाकुलाश्च योगिन्यः पतंति पुरुषोपरि ।
मनोरथं सुसंपूर्णं कुर्वन्ति च परस्परम् ॥२५५०॥

इत्यादि विविधाश्चेष्टाः कुर्वन्ति कुलनायिके ।
विकृतिं मनसो हित्वा यदोल्लासः प्रवर्तते ।
तदा तु देवताभावं भजन्ते योगिपुंगवाः ॥२५५१॥

कौलिकान् भैरवावेशान् यो वा निन्दति मूढधीः ।
तं नाशयन्त्यसंदेहो योगिन्यः कुलनायिके ॥२५५२॥

न निंदेत् न हसेत् कुप्येत् चक्रे मधुमदाकुलान् ।
एतच्चक्रगतां वार्तां बहिर्नैव प्रकाशयेत् ॥२५५३॥

तेभ्यो द्रोहं न कुर्वीत नाहितं च समाचरेत् ।
भक्त्या संरक्षयेत् तान् वै गोपयेच्च प्रयत्नतः ॥२५५४॥

चक्रे मदाकुलान् दृष्ट्वा चिंतयेद् देवताधिया ।
मोदते वन्दते भक्त्या स गच्छेद् योगिनीपदम् ॥२५५५॥

पश्येदेवंविधं चक्रं यो भक्त्या कौलिकः प्रिये ।
व्रततीर्थतपोदानयज्ञकोटिफलं लभेत् ॥२५५६॥

उन्मनापतनोत्थाने मूर्च्छा स्याच्च मुहुर्मुहुः ।
उन्मनाख्ये तथोल्लासे षष्ठे वीरसमन्विते ॥२५५७॥

विरसन्निदधाते तौ यौ चिदर्णपराक्षरौ ।
परब्रह्मानुसधानकाङ्क्षिणौ कुलनायिके ॥२५५८॥

देहेन्द्रियाणां मनसश्चानवस्था निगद्यते ।
अनवस्थाभिधानेऽस्मिन्नुल्लासे सप्तमे प्रिये ॥२५५९॥

परामंत्रस्वरूपोऽसौ जायते मूर्च्छनामरः ।
मूर्च्छना सन्निकर्षोर्मिमूलं मुक्तेः परं विदुः ॥२५६०॥
अन्तर्लक्ष्यो बहिर्दृष्टि निमेषोन्मेषवर्जितः ।

एषा तु शांभवी मुद्रा सर्वतन्त्रेषु गोपिता ।
एषैव खेचरीमुद्रा शिवस्य समवायिनी ॥२५६१॥

सर्वोत्तीर्णा सदाहंतासामरस्यचमत्कृतिः ।
अनयोल्लासिनो वीरा शिवा एव न संशयः ॥२२६२॥

न किंचिदपि जानन्ति स्वात्मध्यानपरायणाः ।
तदा यत् परमं सौख्यं मनोवाचामगोचरम् ॥२५६३॥

स्वयमेवानुभवति शर्कराक्षीरपानवत् ।
ईदृशं तादृशं सौख्यमिति वक्तुं न शक्यते ॥२५६४॥

दृश्यते पुलकाद्यैर्यत् तद् ब्रह्मध्यानमुच्यते ।
यत् सुखं विद्यते ध्याने देहावेशकरं परम् ॥२५६५॥

कथितु नैव शक्नोति प्रबुद्धस्तु समाहितः ।
ब्रह्मध्यानरतानंदपराः सुकृतिनो नराः ॥२५६६॥

क्षणोऽप्यन्तर्हिते तस्मिन् शोचन्त्यसहना इव ।
सप्तमोल्लासयुक्तानां त्वद्भक्तानां महात्मनाम् ॥२५७१॥

अष्टौ त्रिकालज्ञानोत्थाः प्रत्ययाश्च कुलेश्वरि ।
अष्टाववस्थाः कंपाद्या जायन्ते नात्र संशयः २५७२॥

वहुनात्र किमुक्तेन अणिमाद्यष्टसिद्धयः ।
प्रतिहारपदं प्राप्ताः सेवन्ते मंदिरं वरम् ॥२५७३॥

ये गुणाः परमेशस्य पंचतत्त्वतनोः शुभाः ।
ते गुणाः कुलतत्त्वज्ञे तत्त्वज्ञानसमाहृताः ॥२५७४॥

आरम्भस्तरुणश्चापि यौवनः प्रौढ एव च ।
तदन्तो जाग्रदित्युक्तश्चोन्मना स्वाप्न उच्यते ॥२५७५॥

अनवस्था सुषुप्तिः स्यादवस्थात्रयसंयुताः ।
सप्तोल्लासांश्च यो वेत्ति स मुक्तः स च कौलिकः ॥२५७६॥

अथोच्यते चक्रभेदं शिवसायुज्यदायकम् ।
चक्रं पंचविध प्रोक्तं श्रीतंत्रे रुद्रयामले ॥२५७७॥

महाचक्रं राजचक्रं देवचक्रं तथापरम् ।
वीरचक्रं चतुर्थं स्यात् पशुचक्र च पंचमम् ॥२५७८॥

महाचक्रं प्रवक्ष्यामि भक्त्या तच्छृणु पार्वति ।
माता च भगिनी चैव दुहिता च स्नुषा तथा ॥२५७५॥

गुरुपत्नी च पंचैताः शक्तयो यामले मताः ।
शक्तयः पंचमानार्हाः तास्तु वामे न पूजयेत् ॥२५७६॥

मानार्हा दक्षिणे पूज्यास्त्वन्यथा नारको भवेत् ।
स्वशक्तिर्यदि दक्षे स्यात् तदा माता न संशयः ॥२५७७॥

तया रमणतो मंत्री रौरवं नरकं व्रजेत् ।
मातरं गुरुशक्तिं वा ज्येष्ठां वापि तपस्विनीम् ।

स्ववामे नार्चयेत्तासु स्थितेऽपि गुरुतल्पगः ॥२५७८॥इति।

अत एता. पूज्या एव न भोग्या. ।

यच्च यामले—

दीक्षितस्य गुरोः पत्नी या माता गर्भधारिणी ।
यस्या विवाहिता कन्या तर्पयेत् तान् न भोगयेत् ॥२५७९॥

भगिनी दुहिता चैव वीरभार्या स्नुषा तथा ।
वर्जनीयाश्च ता भोगे तदन्या चोपयुज्यते ॥२५८०॥

मद्यं च गौडिकं प्रोक्तं शुद्धिः कुक्कुटसंभवा ।
मत्स्यस्तु रोहितः प्रोक्तो मुद्रा माषसमुद्भवा ॥२५८१॥

करवीरोद्भवं पुष्पं चन्दनं रक्तचंदनम् ।
गुरुवारेऽथवा शुक्रे चतुर्थ्यां सप्तमीतिथौ ।
महाचक्रं महादेवि सर्वकामसमृद्धिदम् ॥२५८२॥

दक्षिणां विधिवद् देवि आचार्याय समर्पयेत् ।
तथैव धनवस्त्राद्यैस्तोषयेत् शक्तिसाधकान् ॥२५८३॥

महासौख्यप्रदं चक्रं महामोक्षप्रदायकम् ।
षष्टिवर्षसहस्राणि ब्रह्मणा सह मोदते ॥२५८४॥

चक्रकृदिति शेष. ।

पूजाद्रव्यं राजचक्रे वदामि शृणु पार्वति ।
यवनी योगिनी चैव रजकी श्वपची तथा ॥२५८५॥

कैवर्तवंशजा चैव पंचशक्तीरुदाहृता: ।
कृतमंत्राभिषेकास्तु सर्वकामफलप्रदा: ॥२५८६॥
मद्यं माध्वीति संप्रोक्तं शुद्धिश्छागसमुद्भवा ।
मत्स्यं चोद्दालकं प्रोक्तं मुद्रा गोधूमजा स्मृता ॥२५८७॥
एकादश्यां भानुवारे संक्रान्तौ च विशेषत: ।
धर्मार्थकाममोक्षार्थं राजचक्रं विधीयते ।२५८८॥
देवचक्रं प्रवक्ष्यामि यत् सुरै: क्रियते सदा ।
शक्तीस्तत्र प्रवक्ष्यामि दिव्यरूपा मनोहरा: ॥२५८९॥
राजवेश्या नागरी च गुप्तवेश्या तथा प्रिये ।
देववेश्या ब्रह्मवेश्या शक्तय: परिकीर्तिता: ॥२५९०॥

अथासा लक्षणम्—

राजसेवापरा राजवेश्या गुप्ता च कोकिला ।
देववेश्या नर्तकी च ब्रह्मवेश्या तु तीर्थगा ॥२५९१॥
नागरी कस्यचित् कन्या रंडा कामरसाकुला ।
पंचैता: शक्तयो देवि देवचक्रे नियोजयेत् ॥२५९२॥
मद्यं कादम्बरीजातं शुद्धिर्वाराहसम्भवा ।
मत्स्यश्च तुरग: प्रोक्तो मुद्रा चणकसम्भवा ॥२५९३॥
पुष्पं जाती च चांपेयं चन्दनं रक्तचन्दनम् ।
अष्टम्यां च चतुर्दश्यां नवम्यां कुजसोमयो: ॥२५९४॥
आचार्याय पुरस्कृत्य दक्षिणां विनिवेदयेत् ।
तथैव धनवस्त्राद्यैस्तोषयेत् शक्तिसाधकान् ॥२५९५॥
देवचक्रमिदं प्रोक्तं सद्यो देवत्वदायकम् ।
देववत् पूजितो भूत्वा विहरेत् क्षितिमण्डले ॥२५९६॥
षष्टिवर्षसहस्राणि देवलोके महीयते ।
वीरचक्रं प्रवक्ष्यामि येन सिद्धयन्ति साधका: ॥२५९७॥
अनया पूजया देवि देहशुद्धि: प्रजायते ।
शक्तयो मद्यमांसादि यदुक्तं तच्च कथ्यते ।२५९८॥

गौडी पैष्टी च माध्वी च द्राक्षी ताडसमुद्भवा ।
अर्चने चक्रराजस्य वारुणी पंचधा स्मृता ।
रजकी चर्मकारी च वेश्या चैव रजस्वला ॥२५९९॥

मातंगी मदमत्ता च पूजने शक्तयो मताः ।
छागकुक्कुटवाराहमार्जारमृगसंभवाः ।
अर्चने देवतायास्तु शुद्धिः पंचविधा स्मृता ॥२६००॥

अन्यच्च—

भूचराणां खेचराणां तत्तन्मांसं सुसाधितम् ।
देयानि सर्वमत्स्यानि सुप्रशस्तानि योजयेत् ॥२६०१॥

उत्तमास्त्रिविधाः प्रोक्ताः शालपाठीनरोहिताः ।
मध्यमाः कण्टकैर्हीनास्तदन्याश्चाधमाः स्मृताः ॥२६०२॥

गोधूममुद्गमाषादितण्डुलाश्चणकादयः ।
पूजने तव देवेशि मुद्राः पंचविधाः स्मृताः ॥२६०३॥

पुष्पाणि श्वेतपीतानि रक्तानि च विशेषतः ।
कुलवारे कुलतिथावष्टम्यां च विशेषतः ॥२६०४॥

कुहू ह्यर्कदिने वापि कर्तव्यं शक्तिसाधकैः ।
अष्टवीराश्च षड्वीरा नववीरा अथापि वा ॥२६०५॥

आहूय वीरान् शक्तीश्च चक्रपूजां समारभेत् ।
वीरेभ्यो दक्षिणां दद्यादाचार्याय विशेषतः ॥२६०६॥

शक्तीः प्रतोषयेद् भक्त्या दक्षिणाभूषणांबरैः ।
दक्षिणाविधिहीनं तु चतुश्चक्रं च निष्फलम् ॥२६०७॥

असंख्यं पातकं यच्च तथा चैवोपपातकम् ।
तत् क्षणान्नाशमायाति वीरचक्रप्रसादतः ॥२६०८॥

विहरेद् देववत् भूमावन्ते देवीपुरं व्रजेत् ।
पशुचक्रं प्रवक्ष्यामि मर्त्यानां समुदाहृतम् ॥२६०९॥

एकाकी मद्यपायी च स्वेच्छया शक्तिभुक् प्रिये ।
माहेश्वराणां संसर्गं कुरुते न कदाचन ॥२६१०॥

मद्यं मांसं तथा मीनमात्मसौख्याय कारयेत् ।
असंस्कृतं पिवेद् द्रव्यं बलात्कारेण मैथुनम् ॥२६११॥

स्वप्रियेण हतं मांसं भुङ्क्ते यः स्वेच्छया तथा ।
विनार्चनं विना ज्ञानं मंत्रहीनमदक्षिणम् ॥२६१२॥

करोति चक्रवत् सर्वमात्मसौख्याय केवलम् ।
पंचतत्त्वं समादाय पशुचक्रं तदुच्यते ॥२६१३॥

आयुः क्षयं च दारिद्र्यमन्ते पैशाचतां व्रजेत् ।
पिशाचयोनौ तिष्ठेत षष्टिवर्षसहस्रकम् ॥२६१४॥

राज्यचक्रं राज्यदं स्यात् महाचक्रं तु मोक्षदम् ।
देवत्वदं देवचक्र वीरचक्रं तु सिद्धिदम् ॥२६१५॥

पशुचक्रं च दारिद्र्यदुःखशोकभयप्रदम् ।
कापट्याद् दक्षिणाहीनात् सर्वचक्रं च निष्फलम् ॥२६१६॥

आदिमद्यं विना मद्यं निष्फलं नात्र संशयः ।
आदिशुद्धिं विना शुद्धिर्न च तृप्तिकरी मता ॥२६१७॥

आदिमीनं विना मीनं न च तृप्तिप्रदायकम् ।
आदिमुद्रा विहीनेन सर्वं भवति निष्फलम् ॥२६१८॥

आदिशक्तिं विना शक्तिरभिचाराय कल्प्यते ।
विजया ह्यादिमद्यं स्यादादिशुद्धिस्तथार्द्रकम् ॥२६१९॥

आदिमीनं च जंबीरमादिमुद्रा तु धान्यजा ।
मुद्रा सर्वाणि धान्यानि व्रीहिरित्युच्यते बुधैः ॥२६२०॥

धान्यानि पिष्टकादीनि सर्वाणि परमेश्वरि ।
आदिशक्तिः स्वदारा स्यात् तामेवाश्रित्य साधयेत् ॥२६२१॥

शक्ति र्योग्या न सा चेत् स्यात् तदान्यामपि चाश्रयेत् ।
वासनां संप्रवक्ष्यामि यया तन्मयतां व्रजेत् ॥२६२२॥

क्रमसंकेतकं चैव चक्रसंकेतकं तथा ।
नामसंकेतकं चैव पूजासंकेतकं तथा ॥२६२३॥
विना संकेतकं देवि पूजनं यदि जायते ।
नैव तत्फलमाप्नोति सिद्धिरोधकरं भवेत् ॥२६२४॥
स्थानं देशं च कालं च ज्ञात्वा पूजां समारभेत् ।
वज्रपुष्पान्वितं यन्त्रं वज्रपुष्पेण पूजयेत् ॥२६२५॥

वज्रपुष्पं यथा मातृकाभेदतन्त्रे देवीवाक्यम्—

स्वयंभू कीदृशं नाथ कुण्डगोलं च कीदृशम् ।
खपुष्पं कीदृशं नाथ वज्रपुष्पं च कीदृशम् ।
सर्वकालोद्भवं नाथ कीदृश वद मे प्रभो ॥२६२६॥

श्रीशिव —

विवाहरहिता कन्या प्रथममार्तवं च यत् ।
स्वयंभूकुसुमं नाम कीर्तितं भैरवागमे ॥२६२७॥
भर्तरि स्वे वर्तमाने या कन्या परगा भवेत् ।
तदुद्भवं कुण्डपुष्पं सर्वकार्यार्थसाधकम् ॥२६२८॥
मृते भर्तरि देवेशि या कन्या परगामिनी ।
तदुद्भवं गोलपुष्पं देववश्यकरं परम् ॥२६२९॥
विवाहिता च या कन्या तस्या यत् प्रथमार्तवम् ।
तच्छोणितं महेशानि खपुष्पं सर्वमोहनम् ॥२६३०॥
विवाहितायाः कन्यायाः पुरुषस्य च ताडनात् ।
यज्जातं शोणितं तच्च वज्रपुष्पं प्रकीर्तितम् ॥२६३१॥
विवाहितायाः कन्यायाः प्रतिमासं च यद् भवेत् ।
सर्वकालोद्भवं पुष्पं कथितं वीरवंदिते ॥२६३२॥ इति ।

अन्यच्च कुलार्णवे—

कुलाचारक्रमं देवि वक्ष्ये सिद्धिप्रदायकम् ।
यदि चेद् दीक्षितो ज्येष्ठः कुलपूजादिवर्जितः ॥२६३३॥

तत्कनिष्ठः क्रमज्ञश्चेत् कूलपूजां समाचरेत् ।
तत् समीपं ततो गत्वा नमस्कृत्य गुरोर्यथा ॥२६३४॥

तस्मै निवेद्य तत् सर्वं शेषं भुंजीत पार्वति ।
पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि समागते ॥२६३५॥

नत्वा ब्रूयात् स्थितिं शेषमाचरेत् तदनुज्ञया ।
स्वदक्षिणे गुरोः शक्तिं समभ्यर्च्य स्वशक्तितः ॥२६३६॥

दक्षे स्वस्य यथाशक्त्या गुरुमभ्यर्चयेत् ततः ।
गुरोः पुत्रांश्च भ्रातॄंश्च तथा तत् कुलजानपि ॥२६३७॥

ज्ञानवृद्धांस्तपोवृद्धान् दक्षिणे स्वे समर्चयेत् ।
न तु ज्येष्ठान् यजेद् वामे कनिष्ठान् न च दक्षिणे ॥२६३८॥

विपरीते वैपरीत्यं फलं ज्ञेयं शुभाशुभम् ।
ज्येष्ठस्य च कनिष्ठस्य शिष्यावेकत्र संस्थितौ ॥२६३९॥

तत्र पूर्ववदाचारः कथितः कुलनायिके ।
अज्ञातकौलिकप्राप्तौ योगवादेन चिंतयेत् ॥२६४०॥

नत्वा स्वं स्वं गुरुं देवि स्वस्वमार्गेण तर्पयेत् ।
नित्यार्चनं दिवा कुर्याद् रात्रौ नैमित्तिकार्चनम् ॥२६४१॥

उभयोः काम्यकर्म स्यादिति शास्त्रस्य निश्चयः ।
अस्नात्वानासनस्थो वा भुक्त्वा वा प्रलपन्नपि ॥२६४२॥

गंधपुष्पाक्षताकल्पवस्त्राद्यैरनलंकृतः ।
अविन्यस्तशरीरो वा कुलपूजां न कारयेत् ॥२६४३॥

विना मंत्रेण या पूजा विना मांसेन तर्पणम् ।
विना शक्त्या तु यत् पानं निष्फलं कथितं प्रिये ॥२६४४॥

श्रीचक्रमेको नो कुर्यादेकपात्रे तु नार्चयेत् ।
नार्चयेदेकहस्तेन न पिबेदेकपाणिना ॥२६४५॥

मत्स्यमांसासवैर्देवि नार्चयेत् पशुसन्निधौ ।
प्रणम्य प्रविशेच्चक्रं विनिर्गच्छेत् प्रणम्य च ॥२६४६॥

श्रीचक्रे नासने तिष्ठेत् न च वीरासने प्रिये ।
श्रीचक्रदर्शनं देवि नेत्रयोः पापनाशनम् ॥२६४७॥

तन्नास्ति चेत् व्रणद्वन्द्वं कौलिकस्याक्षियुग्मकम् ।
अनाचारान् सदाचारान् चक्रस्थान् शक्तिकौलिकान् ॥२६४८॥

शिवगौरीधिया देवि भावयेन् नावमानयेत् ।
कुलाचार्यगृहं गत्वा भक्त्या पापविशुद्धये ॥२६४९॥

याचयेदमृतं चान्नं तदभावे जलं पिबेत् ।
कुलाचार्येण तच्छक्त्या दत्तं पात्रं तु भक्तितः ॥२६५०॥

नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत् ।
गुरुदैवतमंत्राणामैक्यं संभावयन् धिया ॥२६५१॥

यावदुल्लासपर्यन्तमुपदंशैः पिबेन् मधु ।
भोजनान्ते विषं पानं पानान्ते भोजनं विषम् ॥२६५२॥

अमृतं तद्विजानीयाद् यदन्नं सुरया सह ।
चर्वणेन विना पानं केवलं विषभक्षणम् ॥२६५३॥

यच्चर्वणेन सहितममृतं तत् प्रकीर्तितम् ।
अस्नात्वा वापि भुक्त्वा वाप्यभक्त्या वा कुलेश्वरि ॥२६५४॥

यः सेवेत कुलद्रव्यं स दारिद्र्यमवाप्नुयात् ।
उष्णीषी कंचुकी नग्नो मुक्तकेशो गलावृतः ॥२६५५॥

पराङ्मुखो विवादी च न सेवेत कुलामृतम् ।
योगामृतस्य निष्ठीवान् मद्यभाण्डपरिभ्रमात् ॥२६५६॥

ऊर्ध्वनालप्रपानाच्च देवताशापमाप्नुयात् ।
एकासने निविष्टा ये भुञ्जानाश्चैकभाजने ॥२६५७॥

एकपात्रे पिबंतो ये ते यान्ति नरकं प्रिये ।
यः सेवेत कुलद्रव्यमेकग्रामे स्थिते गुरौ ॥२६५८॥

तत्कुलज्ञे च तत्पुत्रे स्वज्येष्ठे कुलदेशिके ।
विनानुज्ञां कुलेशानि सोऽक्षयं नरकं व्रजेत् ॥२६५९॥

उच्छिष्टो न स्पृशेच्चक्रे कुलद्रव्याणि पार्वति ।
बहिः प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥२६६०॥

मद्यभाण्डं समुद्धृत्य न पात्रं पूरयेत् प्रिये ।
भोगपात्रं सुराकुंभे निक्षिपेन् न कदाचन ॥२६६१॥

शक्तिपात्रं वीरपात्रं निःशेषं नैव कारयेत् ।
यावच्चक्रं तु तत् पश्चात् तेभ्यो दद्याच्च तौ पुनः ॥२६६२॥

चक्रमध्येऽशुचिधिया करस्य क्षालनादिकम् ।
यः करोति विमूढात्मा स भवेदापदां पदम् ॥२६६३॥

निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम् ।
श्रीचक्रमध्ये यः कुर्यात् स भवेद् योगिनीपशुः ॥२६६४॥

चक्रमध्ये घटे भिन्ने पात्रे च स्खलिते प्रिये ।
दीपनाशे च तत् शान्त्यै श्रीचक्र कारयेत् प्रिये ॥२६६५॥

मत्ता जपन्ति ध्यायन्ति स्तुवन्ति प्रणमंति च ।
बोधयन्ति च पृच्छन्ति नंदन्ति ज्ञानिनः प्रिये ॥२६६६॥

मत्ता भ्रमन्ति गर्जन्ति हसन्ति विवदन्ति च ।
रुदन्ति स्त्रियमिच्छन्ति निंदन्त्यज्ञानिनः प्रिये ॥२६६७॥

परिहासं प्रलापं च विनयं वहुभाषणम् ।
औदासीन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत् ॥२६६८॥

पात्रहस्तो महादेवि न भ्रमेच्चक्रमध्यगः ।
पूर्णपात्रं करे धृत्वा न तिष्ठेच्च चिरं प्रिये ॥२६६९॥

नालपेत् पात्रहस्तः सन् न भिद्यात् पात्रमम्बिके ।
पादाभ्यां न स्पृशेत् पात्रं न बिन्दुं पातयेदधः ॥२६७०॥

नैकहस्तेन दातव्यं न मुद्रावर्जितं पिबेत् ।
पात्रं न चालयेत् स्थानात् न कुर्यात् पात्रसंकरम् ॥२६७१॥

श्रीगुरुज्येष्ठपूज्यानां पुरतः कुलनायिके ।
नोपविश्य पिबेन् मद्यमिति शास्त्रस्य निश्चयः ॥२६७२॥

सशब्दं न पिबेन् मद्यं निःशब्दं नैव पूरयेत् ।
नान्योऽन्यं ताडयेत् पात्रं न पात्रं चानयेदधः ॥२६७३॥

साधारं नोद्धरेत् पात्रमनाधारे न निक्षिपेत् ।
रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत् प्रिये ॥२६७४॥

प्रक्षाल्य गोपयेत् पात्रमित्याज्ञा पारमेश्वरी ।
यदा संदीपितोल्लास· कौलिकः पशुमोक्षते ॥२६७५॥

पठेद् वा पशुशास्त्राणि संगच्छेद् वा पशुस्त्रियम् ।
कुर्यात् पशुप्रसंगं च पशुकार्याणि वाचरेत् ।
धर्मार्थायुर्यशोलाभज्ञानसौख्यादि नश्यति ॥२६७६॥

श्रीचक्रस्थं कुलद्रव्यं यः पशुभ्यः प्रयच्छति ।
स्नेहाल्लोभाद् भयाद् वापि स भवेद् योगिनीपशुः ॥२६७७॥

विपद्यपि न कर्तव्यो वाग्वादश्चक्रमध्यगे ।
पितृमातृसमं पश्येत् तेनोक्तं परुषं सहेत् ॥२६७८॥

यथा स्त्रीपुत्रमित्रादि दृष्ट्वा चेतः प्रहृष्यति ।
तथा चेत् कौलिकान् दृष्ट्वा स भवेद् योगिनीप्रियः ॥२६७९॥

ब्रह्मादिस्तंबपर्यन्तं यस्य मे गुरुसंततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ॥२६८०॥

इति निश्चितबुद्धिर्यः स भवेदावयोः प्रियः ।
प्रवृत्ते भैरवीचक्रे सर्वे वर्णाः द्विजातयः ॥२६८१॥

निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् ।
नारी वा पुरुषः षंढश्चांडालो वा द्विजोत्तमः ॥२६८२॥

चक्रमध्ये न भेदोऽस्ति सर्वे देवसमाः स्मृताः ।
क्षीरेण सहितं तोयं क्षीरमेव यथा भवेत् ॥२६८३॥

तथा श्रीचक्रमध्येऽपि जातिभेदो न विद्यते ।
नगरीनिर्झराद्यंबु गंगां प्राप्य यथैकताम् ॥२६८४॥

यांति श्रीचक्रमध्येऽपि चैकतां मानवास्तथा ।
स्वर्गादि पुण्यलोकेषु देवादन्यद् यथा नहि ॥२६८५॥
तथैव चक्रमध्येऽपि मानवाः शिववत् स्मृताः ।
वहुनात्र किमुक्तेन चक्रमध्ये कुलेश्वरि ॥२६८६॥
मद्रूपाः पुरुषाः सर्वे त्वद्रूपाः प्रमदाः प्रिये ।
चक्रमध्ये च मूढात्मा जातिभेदं करोति यः ॥२६८७॥
तं भक्षयन्ति योगिन्यस्त्वां शपे कुलनायिके ।
देशिकैः स्थापिते कुंभे तत्र देवीपुरं भवेत् ।
पंचानां मेलनं यत्र तत्रैवाहं त्वया सह ॥२६८८॥

अत्र मंडलप्रवृत्ते पूर्वं निवृत्ते रुत्तरं जातिव्यवस्था, मध्ये नेति तत्त्वविदा संमति । तस्मात् ब्राह्मणेतराणामपि चक्रे ब्राह्मणवदुपवेशार्हत्त्वमुक्तम् । तत्र निर्वाणतंत्रे 'नात्राधिकार सवपामित्यारभ्य 'ब्राह्मणा कर्मनिष्ठा ये त एवात्राधिकारिण.' इत्यंन्तवाक्याना विरोधादत्रेय व्यवस्था । पचपात्रग्रहणानंतरं जातिभेदो नास्ति ।

यच्च यामले—

पंच पात्रान्तरे जाते जातिभेदो न विद्यते ।
न च कुंभस्थापनादौ ब्राह्मणेतरदर्शनम् ॥२६८९॥
तत्त्वशुद्धिं चरेद् यावत् तावन्मौनं समाचरेत् ।
अथवा संस्कृता वाणी वक्तव्या प्राकृता न च ॥२६९०॥

तेन देववाण्या वक्तुमसमर्थस्याभिषिक्तकुलज्ञकौलिकस्यापि चक्रेश्वरत्वाधिकारो नास्ति । यत. 'गुरुवद् भावयेच्चक्रे यतश्चक्रेश्वर शिव' इत्याद्युक्तत्वात् ।ब्राह्मणेतराणामसंस्कृतज्ञाना चक्रेश्वरत्वे कार्यकारित्वे नाधिकार.। पचपात्रादूर्ध्वं सर्वमनवद्यमिति दिक् ।

स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ।
अथवा मिथुनं कृत्वा क्रमात् समुपवेशयेत् ॥२६९१॥
पङ्क्त्याकारेण वा सम्यक् चक्राकारेण वा प्रिये ।
शिवशक्तिधिया सर्वाश्चक्रमध्ये समर्चयेत् ॥२६९२॥
अविभक्तौ यथा चाबांलक्ष्मीनारायणौ प्रिये ।
यथा वाणीशतानंदौ तथा वीरः सशक्तिकः ॥२६९३॥

मद्यकुंभसहस्रैश्च मांसभारशतैरपि ।
न तुष्यामि वरारोहे भगलिंगामृतं विना ॥२६९४॥

न चक्रांकं न पद्मांकं न शंखांकमिदं जगत् ।
लिंगांकं च भगांकं च तस्मात् शक्तिशिवात्मकम् ॥२६९५॥

शिवशक्त्योस्तु संयोगो यस्मिन् काले प्रजायते ।
सा संध्या कुलनिष्ठानां समाधिः साभिधीयते ॥२६९६॥

सकामो न स्त्रियं गच्छेदनिच्छन्तीमदीक्षिताम् ।
सद्यः संस्कारसंशुद्धां विहितत्वाद् व्रजेत् स्त्रियम् ॥२६९७॥

इति श्रीमदागमरहस्ये सत्संग्रहे चक्रोल्लासभेदवासनानिर्णयो नामैकादश पटल । आदितस्त्वेकोनचत्वारिंशत् ॥

## अथ द्वादशः पटलः ।

अथ शक्तिपूजनम् । शक्तिसंगमतन्त्रे—

नारी त्रैलोक्यजननी नारी त्रैलोक्यरूपिणी ।
नारी त्रिभुवनाधारा नारी देहस्वरूपिणी ॥२६९८॥

पुंरूपं वा स्त्रियो रूपं यत् किंचिद्रूपमुत्तमम् ।
नारीचक्रे सर्वरूपं यत् किंचिज्जगतीगतम् ॥२६९९॥

न च नारीसमं सौख्यं न च नारीसमा गतिः ।
न नारीसदृशं भाग्यं न नारीसदृशं तपः ॥२७००॥

न नारीसदृशं राज्यं न नारीसदृशो जपः ।
न नारीसदृशं तीर्थं न नारीसदृशो लयः ॥२७०१॥

न नारीसदृशो यागो न नारीसदृशं यशः ।
न नारीसदृशं मित्रं न भूतं न भविष्यति ॥२७०२॥

अथ शक्तिलक्षणानि तत्रैव—

सुन्दरी तरुणी रम्या चार्वंगी चारुहासिनी ।
गुरुभक्ता जपासक्ता महाकामकुतूहला ॥२७०३॥

दर्शनात् मोहिनी साध्वी कटाक्षादिप्रमोचिनी ।
केशरंजनसंसक्ता वस्त्ररजनसंयुता ।
गर्भद्रावकलायुक्ता पुष्पोत्पादनतत्परा ॥२७०४॥

नानापाककलायुक्ता लेह्यपेयकरी तथा ।
शय्यासंरंजनी दिव्या मुखगंधविधायिनी ॥२७०५॥

गीततालमृदंगादिवीणावादनतत्परा ।
काव्यालापसमस्यादिपल्लवादिसमन्विता ॥२७०६॥

नानाचित्रकलायुक्ता सौरभ्यसुरतान्विता ।
लोमशातनसंयुक्ता संकुचीकरणाकुला ॥२७०७॥

कुचस्थौल्यदाढर्चकरा नानाऽभरणभूषिता ।
लिंगं दृष्ट्वापि देवेशि अविकारपरायणा ॥२७०८॥

योनौ लिंगप्रवेशेऽपि विकारपरिवर्जिता ।
सर्वदोषविहीना या रूपसौभाग्यशालिनी ।

एवं लक्षणसंपन्ना सा शक्तिः परिकीर्तिता ॥२७०९॥
पुस्वरूपं महेशानि कथ्यते शृणु सांप्रतम् ।
नानाविलासकुशलः सर्वशक्तिसमन्वितः ॥२७१०॥

तरुणः सुन्दरः शूरश्चिरमैथुनकारकः ।
दीर्घलिंगी दृढाघाती द्रावणेषु च तत्परः ॥२७११॥
कामशास्त्रकलायुक्तो मंत्राद्यौषधसंयुतः ।
स्तम्भज्ञानी लिंगवृद्धिस्थूलदार्ढचक्रियान्वितः ॥२७१२॥

मकारपंचकासक्तो भक्तभक्तो जितेन्द्रियः ।
सर्वकालजपासक्तः सर्वतंत्रार्थतत्त्ववित् ॥२७१३॥
आकर्षणवशीकारतथोच्चाटनकृत्परः ।
ज्ञानी विज्ञानसंयुक्तः कामादिदोषवर्जितः ॥२७१४॥

संगीतवाद्यवीणादिकाव्यनाट्यकनाग्रणीः ।
षट्पल्लवानां विज्ञाता कुलभक्तो महोत्तमः ॥२७१५॥

अष्टांगयोगविज्ञानी योगैश्वर्यविभूषितः ।
योनिं संचुंब्य वालोच्य विकारादिविवर्जितः ।
स्त्रीस्वरूपस्य विज्ञानी देहज्ञानी तथापरः ॥२७१६॥

शापानुग्रहणे दक्षः सर्वभूतदयापरः ।
सर्वचक्रस्य विज्ञानी दिव्यांवरविभूषितः ॥२७१७॥

दिव्याभरणसंयुक्तः सर्वसौगंध्यसंयुतः ।
सर्वदा धूपगेहस्थः त्रिकालज्ञो महामतिः ॥२७१८॥

स्त्रीरूपध्यानसंपन्नः सर्वदा तत्स्वरूपवान् ।
समस्याकोशविज्ञानी देहरंजनसंयुतः ॥२७१९॥

ईदृग्विधो महेशानि साधनार्हो न चान्यथा ।
तत्रापि कालिकाभक्तः कलौ दुर्लभ एव च ॥२७२०॥

एवं गुणां समालोक्य सस्मितास्यां महेश्वरि ।
साधनं कारयेद् देवि नान्यथा शांकरं वचः ॥२७२१॥

योनिपूजां विना तद्वत् तथा च रमणं विना ।
सप्तजन्मदरिद्रत्वं नरके वास एव च ॥२७२२॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
एतत्पातकजो दोषो जायते नात्र संशयः ॥२७२३॥

वीरो वाप्यथवा दिव्यो ह्यज्ञात्वा नरकं व्रजेत् ।
गुरुपूजाकराकृष्टि र्न्यासस्तस्याः समीहितम् ॥२७२४॥

परस्परावलोकश्च ध्यानकर्म प्रकीर्तितम् ।
नखदन्तक्षतादीनि धूपदीपप्रदापनम् ॥२७२५॥

तत् तत्वज्ञविशेषश्च प्रेम्णा मुद्रा प्रकीर्तिता ।
पूजनं गायनं स्तोत्रं रेतःपातो विसर्जनम् ॥२७२६॥

इति प्रोक्तं महेशानि कौलसंकल्पसिद्धिदम् ।
एवं श्रुत्वा ततो देवी शिवं वाक्यमथाब्रवीत् ॥२७२७॥

सत्यमेतद् विना योषित्संगात् मंत्रो न सिध्यति ।
संग एव हि कर्तव्यः कर्तव्यं न च मैथुनम् ॥२७२८॥

पूजनीया सदा योषा मद्भावकृतनिश्चया ।
तस्मान्न मैथुनं देव कर्तव्यं मम साधकैः ॥२७२९॥

मम भावस्वरूपा सा मत्स्वरूपा च साऽप्यहम् ।
अनेन रमते देव सा कथं भवता विना ॥२७३०॥

भवता दृढभावेन सदृशो जायते च यः ।
मद्भावप्रतिपन्नायामधिकारी स मैथुने ॥२७३१॥

यादृशस्त्वं दृढो ज्ञाने मद्भावैकपरायणः ।
तादृशो भविता देवं निःशंकश्च रमेत् तदा ॥२७३२॥

कदाचित् पतितां याति कदाचिद् याति सूनुताम् ।
कदाचिद् गुरुतां याति कदाचिद् वापि शिष्यताम् ॥२७३३॥

ऐक्यनिश्चयविज्ञाने स वै दोषैर्न लिप्यते ।
स विष्णुः स शिवः साक्षात् स योग्यः सर्वकर्मसु ॥२७३४॥

अहं हि जगतां धात्री जननी जन्मकारणम् ।
मद्भावप्रतिपन्नायामहमेव सुनिश्चितम् ॥२७३५॥

कर्तव्यं मैथुनं नैव तस्यामनधिकारिणा ।
मोहाद् वा गुरुमौढ्यात् वा यदा तत् कुरुते कुधीः ॥२७३६॥

वीरो वाप्यथवा दिव्योऽबुद्ध्वा च नरकं व्रजेत् ।
गुरुपत्नीं द्विजपत्नीं पितृपत्नीं प्रपूज्य च ॥२७३७॥

मैथुने नरकं यावत् तावत् कोटिगुणं भवेत् ।
या या यद्भावमापन्ना नारी तत् तन्मयी हि सा ॥२७३८॥

अहं रुष्टतया सम्यङ् नाशयामि तमीश्वर ।
मया हतोऽपि पापात्मा प्राप्नोति नरकं महत् ॥२७३९॥

अथवा सुचिरं जीवेन् महादुर्गतिसंयुतः ।
निरन्तरं रोगपीडा जायते तस्य पापिनः ॥२७४०॥

कदाचन शिरःपीडा कदाचित् स्याज्ज्वरो नरः ।
कदाचिद् गात्रभंगः स्यात् कदाचिद् गात्रपीडनम् ॥२७४१॥

कदाचिदपि कंडूतिः कदाचित्तु विचर्चिका ।
अनालोक्यं च वाधिर्यं खंजता कुब्जता तथा ॥२७४२॥

अन्येऽपि विविधा रोगाः कुष्ठाद्याः प्रभवन्ति च ।
चक्षुर्नाशः श्रुतिच्छेदो नासाच्छेदस्तथैव च ॥२७४३॥

पादच्छेदः करच्छेदः शिरश्छेदोऽपि जायते ।
शत्रुपीडा राजपीडा वह्निपीडा च जायते ॥२७४४॥

कुलं तस्यान्नदोषेण म्रियते नात्र संशयः ।
प्रार्थनामपि कुर्वाणो न लभेदन्नमुष्टिकम् ॥२७४५॥

मूलाहारः फलाहारः पत्राहारो जलाशनः ।
प्रायशो जायते पीडा तपःफलविवर्जितः ॥२७४६॥

तस्य स्यादसकृद्बन्धुर्द्रोही भृत्याश्च तस्कराः ।
स्वगोत्रकलहो नित्यं स्वगोत्रहिंसनं तथा ॥२७४७॥

सुहृद्भिर्द्वेष्यभावः स्याद् रिपुणा बध्यते स तु ।
स्वयोषापि विषं दद्यान् मित्रं वा सेवकोऽथवा ॥२७४८॥

औषधं तु भवेत् तस्य महाहालाहलं प्रभो ।
हितं पथ्यं सुहृद्वाक्यं न कदाचन रोचते ।
हितापि गदिता वाणी तस्य काचिद् हिता नहि ॥२७४९॥

चारुक्ता मंत्रजावाणी विपरीतैव जायते ।
तदाज्ञाकारिणो न स्युः सुहृद्भृत्यादयस्तथा ॥२७५०॥

एकादशगृहस्थोऽपि ग्रहः पीडयते ध्रुवम् ।
अन्यथा सिद्धिमापन्ना मंत्राः स्युर्हतसिद्धयः ॥२७५१॥

एते ये कथिता दोषा योषिन्मैथुनसंभवाः ।
अधिकारविहीनानामधिकारयुते नहि ॥२७५२॥

शिव उवाच—

अधिकारी भवेत् कीदृग् देवेशि भवदर्चने ।
ममानुग्रहतो देवि तदेव वक्तुमर्हसि ॥२७५३॥

देव्युवाच—

शृणु देव प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
गोपितं सर्वतन्त्रेषु न देयं यस्य कस्यचित् ॥२७५४॥

अहमेव परं ज्ञानमहमेव परा गतिः ।
अहमेव परं ध्यानमहमेव परा श्रुतिः ॥२७५५॥

मत्तः परतरं विश्वे न किंचिदवलोकयेत् ।
अहमेव जगत् सर्वं जगदेवाहमीश्वर ॥२७५६॥

मद्भावभाविता नारी भवेदेतादृशः शिवः ।
एवं ज्ञानविशिष्टः स्यादधिकारी भवेत् शिव ॥२७५७॥

ब्रह्मविष्णुमहेशादि सर्वदेवमयो हि सः ।
जायमानस्य वालस्य मातृयोनिस्वलिंगयोः ॥२७५८॥

संपर्केण विकारो हि न यथा जायते क्वचित् ।
साधकस्य तथा यस्य मतिः स्यादविकारिणी ॥२७५९॥

सोऽधिकारी भवेन् नित्यं यागादौ सह योषिता ।
मद्भावप्रतिपन्नाया मत्स्वरूपाहमेव सा ॥२७६०॥

विकारं न हि योषायां तस्यार्मापित एव हि ।
ध्रुवं यस्य स्थिता बुद्धिः सोऽधिकारी न संशयः ।
मातृयोनिं परित्यज्य सर्वयोनिं विचारयेत् ॥२७६१॥

संगमे साधकश्रेष्ठः शिशुवत् क्रीडते भुवि ।
प्रथमं न्यासकाले तु यावद् धैर्यं न जायते ॥२७६२॥

तावत् कामविलोपार्थं यतितव्यं प्रयत्नतः ।
कामभावविलोपार्थं संगं कृत्वैव योषिता ॥२७६३॥

साधयेत् सर्वकार्याणि यावद् ज्ञानं च जायते ।
ततो ज्ञाने समुत्पन्ने स्वच्छन्दं विहरेत् पुमान् ॥२७६४॥

एवं कर्तुमशक्तस्तु नाधिकारी कथंचन ।
कुर्याज्जपं तथा होमं तर्पणं मार्जनं तथा ॥२७६५॥

द्विजानां भोजनं चैव योषित्संगविवर्जितम् ।
साधकस्य भवेद् यस्य यत्स्वरूपेष्टदेवता ॥२७६६॥

तद्वर्णसमतेजोभिः पूर्णं भुवनमण्डलम् ।
भावनाभिः स्थिरीकृत्य देवताध्यानतत्परः ॥२७६७॥

यथास्वरूपं वर्णादि चिंतयेद् यतमानसः ।
एवं यस्य मनो नास्ति तस्य प्रतिनिधिः स्मृतः ॥२७६८॥

कुमार्यामिव कर्तव्यं न क्षरत्यां कदाचन ।
यतः स्यात् मैथुनायोग्या न विकाराय कल्प्यते ॥२७६९॥

न प्रयोगादिकं क्वापि गृहस्थो निजयोषिता ।
कुमारीभोजनादेव कुमारीपूजनादपि ॥२७७०॥

कुमारीचिंतनादेव त्रैलोक्यविजयीभवेत् ।
यद्युक्तलक्षणा शक्ति र्वीरश्चापि सलक्षणः ॥२७७१॥

तदा शक्तिसमावेशचेष्टां ज्ञात्वाथ साधयेत् ।
पुण्यक्षेत्रे पुण्यपीठे पुण्यद्रुमसमाकुले ।
साधयेत् शक्तिमंत्रं यः तस्य सिद्धिरदूरतः ॥२७७२॥ इति ।

अन्यच्च—

कौलावधूतमार्गेषु तीर्थयात्रां न च व्रजेत् ।
तीर्थाटनं च सन्यासं व्रतधारणमेव च ॥२७७३॥

उपवासं मुण्डनं च सर्वथा परिवर्जयेत् ।
पूर्णाभिषेकः शिरसि तेन तत्र न मुण्डनम् ॥२७७४॥

परद्रोहं परीवादं परवित्तं प्रतिग्रहः ।
परकांतां विशेषेण शाक्ते पंच विवर्जयेत् ॥२७७५॥

कौलतीर्थानि भिन्नानि तत्र कौलो वसेत् सदा ।
एकस्यामेव देवेशि संति पीठानि कृत्स्नशः ।।२७७६।।

तत्पीठमधिपीठं स्याद् वेश्यायामधिराजता ।

देव्युवाच—

देवेश श्रोतुमिच्छामि कौलतीर्थानि सर्वशः ।।२७७७।।

ईश्वर उवाच—

ब्राह्मणी तु गया प्रोक्ताऽयोध्या च वाहुजा स्मृता ।
वैश्या चावंतिका प्रोक्ता शूद्री तु मथुरा स्मृता ।।२७८८।।

दासी मायापुरं देवि नटी गोदावरी मता ।
मालाकारिणिका देवि चित्रकूटं प्रकीर्तितम् ।।२७७९।।

कुम्भकारिणिका देवि श्रीपुरं परिकीर्तितम् ।
उड्यानं सौचिकी प्रोक्तं योगिनी पौंड्रवर्धनम् ।।२७८०।।

जालंधरं कुविन्दी च तन्तुवायी च कांचिका ।
असिमार्जनिका देवि कामरूपमिति स्मृतम् ।।२७८१।।

रजकी पुष्करं प्रोक्तं चर्मकारी तु काशिका ।
अयस्कारी महादेवि कोलापुरमितीरितम् ।।२७८२।।

शौंडक्यास्तु गृहं देवि नेपालमिति कीर्तितम् ।
केदारपीठं देवेशि नापिती परिकीर्तिता ।।२७८३।।

गोकर्णपीठं देवेशि त्वाष्ट्री वै परिकीर्तिता ।
उज्जयिनी भवेत् पीठं कलावत्याः प्रकीर्तितम् ।।२७८४।।

कालेश्वरं त्वंबुकी स्यात् कैवर्त्ती हस्तिनापुरम् ।
शौक्लिकी राजगेहं तु जयंती तैलकारिणी ।।२७८५।।

कान्यकुब्जं मागधी स्यात् सर्वत्र गृहयोजनम् ।
वेश्यागृहं प्रयागं स्यात् श्रीशैलं तु कुमारिका ।।२७८६।।

कैलासपीठमाभीरी क्षीरिका पुंश्चली स्मृता ।
हिरण्याख्यं पुरं देवि स्वैरिणी परिकीर्तिता ।।२७८७।।

अट्टहासं च सैरंध्री दूतिका मारुतेश्वरम् ।
ओंकारपीठं देवेशि रंडागृहमितीरितम् ॥२७८८॥
प्रतिवेशिनिका गेहं पीठं मलयसंज्ञकम् ।
स्वजायाया गृहं देवि विरजापीठमीरितम् ॥२७८९॥
कुट्टिन्यास्तु गृहं देवि पूर्णचन्द्रमिति स्मृतम् ।
श्रीगारुडीगृहं देवि पीठ वै देवमातृकम् ॥२७९०॥
आम्रातकेश्वरं पीठं चाण्डालीगृहमीरितम् ।
पौत्रीगृहं कामकोटं प्रपौत्र्याः कावरं मतम् ॥२७९१॥
मातुलान्या स्थिरं क्षेत्रं तत् संबंधिन्याश्चरस्थिरम् ।
राजकन्यागृहं देवि माहेन्द्रमिति कीर्तितम् ॥२७९२॥
कन्यागृहं महादेवि जलेश्वरमितीरितम् ।
स्नुषागृहं महेशानि विचित्रमिति कीर्तितम् ॥२७९३॥
भगिन्या भृगुपीठं स्यात् शालिकाया महापथम् ।
यवनी गदिता देवि मेरुकागिरिरेव च ॥२७९४॥
यस्या विवाह्यते कन्या तद्गृहं वामनं स्मृतम् ।
श्रीकेलिकुञ्चिकागेहं प्रोक्तं वै हिंगुलाभिधम् ॥२७९५॥
परस्त्रीविदुतीर्थं स्यात् सर्वतीर्थं रजस्वला ।
तानि सर्वाणि तीर्थानि मातंगीगमने सकृत् ॥२७९६॥
एतत् प्रोक्तं महादेवि किमन्यत् श्रोतुमिच्छसि ।

देव्युवाच—

देवेश श्रोतुमिच्छामि चतुष्पीठस्य लक्षणम् ॥२७९७॥

शिव उवाच—

रहस्यं च प्रवक्ष्यामि यद् ज्ञानादमरो भवेत् ।
शालकस्य तु या पत्नी कुरुक्षेत्रं तु तद्गृहम् ॥२७९८॥
तत् कन्याया गृहं देवि श्रीगौरीमुखसंज्ञकम् ।
तरुणी सुन्दरी रामा स्वभार्याभगिनी तु या ।
तज्ज्येष्ठादि महेशानि कनिष्ठांतक्रमेण च ॥२७९९॥

जेष्ठा तु केलिकुञ्ची स्यात् कनिष्ठा केलिगेहिनी ।
चतुःपीठमिदं भद्रे क्रमाच्च कथित त्विह ॥२८००॥

शक्तिचेष्टां प्रवक्ष्यामि सावधानावधारय ।
विपरीतरता चेत् सा तदा काली प्रकीर्तिता ॥२८०१॥

गंधधूपप्रिया सा चेत् सिद्धविद्यास्वरूपिणी ।
शयने सुन्दरी प्रोक्ता रतिगोष्ठ्यां तु तारिणी ॥२८०२॥

छिन्ना रतान्ते देवेशि माने हि वगला मता ।
शृङ्गारकरणे देवि महालक्ष्मी प्रकीर्तिता ॥२८०३॥

तस्याः समा कारणं च मातंगी परिकीर्तिता ।
संयोगवार्ता भुवना निद्रार्त्ता भैरवी मता ॥२८०४॥

सर्वान्तरायो देवेशि दूरात् संदृश्यते यदि ।
हस्ते नायाति चेत् सा वै तदा धूमावती भवेत् ॥२८०५॥

स्वेच्छारते स्पर्शकाली स्वेच्छया तु विपर्यये ।
श्रीमहादक्षिणाकाली महासाम्राज्यनायिका ॥२८०६॥

स्वेच्छया पुष्पयुक्ता चेत् श्रीमहाकामकालिका ।
बलाद् रते सिद्धकाली संक्षेपादिदमीरितम् ॥२८०७॥

सिद्धेश्वरीलक्षणं च कथ्यते शृणु सांप्रतम् ।
यस्या विवाह्यते कन्या सा चेद् वीरांगना यदि ॥२८०८॥

सापि वेश्या यदि भवेत् तदा सिद्धेश्वरी मता ।
केलिकुञ्ची महेशानि व्यभिचारपरायणा ॥२८०९॥

कुलीनस्य तु या भार्या सापि वेश्या भवेद् यदि ।
वागीश्वरीति विख्याता महापीठेश्वरी परा ॥२८१०॥

शालिका यदि चेद् वेश्या लिंगास्वादनतत्परा ।
विशालाक्षीति सा प्रोक्ता सर्वसिद्धिप्रदर्शिका ॥२८११॥

श्यालकस्य च या कन्या सा यदा व्यभिचारिणी ।
कामाक्षीति च सा ज्ञेया सर्वसिद्धिकरा भुवि ॥२८१२॥

तत्पत्न्यास्तु गृहे देवि शतलिंगावधि यदि ।
महाराजेश्वरी ख्याता त्रैलोक्यसिद्धिदायिका ॥२८१३॥

वीरपत्नी स्वयंवीरा प्रोक्ता श्रीमन्महेश्वरी ।
मत्सुता कुलविद्यानामाद्या श्रीत्रिपुरांबिका ॥२८१४॥

तत्सुता भुवनेशानी शाक्तस्य शांकरी कला ।
दिव्यस्य विमला प्रोक्ता पूर्णस्य कालिका स्मृता ॥२८१५॥

गुरुपत्नी तु कामेशी तत्सुता बालिका स्मृता ।
लोपामुद्रा तत्स्नुषा स्याच्चातुर्वर्ण्यक्रमं शृणु ॥२८१६॥

द्विजस्त्री यदि चेद् वेश्या सा प्रोक्ता कुलसुन्दरी ।
त्वरिता चैव संप्रोक्ता व्यभिचारपरायणा ॥२८१७॥

क्षत्रियस्य च या कन्या स्नुषा वेश्यादियोगतः ।
कौलिनी माधवी देवी वाराही कामसुन्दरी ॥२८१८॥

मोहिनीति क्रमेणैव व्यभिचारक्रमेण च ।
वैश्यास्त्री यदि वा वेश्या व्यभिचारपराऽथवा ॥२८१९॥

स्वप्नावती भोगवती नित्यक्लिन्ना च कुक्कुटी ।
अघोरा सिद्धचामुण्डा सुता स्नुषा क्रमेण च ॥२८२०॥

शूद्रपत्नी सुता कुब्ची वेश्या वा व्यभिचारिणी ।
अश्वारूढा च धनदा कुब्जिका शवरेश्वरी ॥२८२१॥

अनंगमाला नीलाख्या क्रमेण परिकीर्तिता ।
कन्याष्टकं प्रवक्ष्यामि येन देवीमयो भवेत् ॥२८२२॥

नटी कापालिकी वेश्या रजकी नापितांगना ।
मालाकारस्य गोपस्य कुम्भकारस्य कन्यका ॥२८२३॥

कन्याष्टकमिदं प्रोक्तं कुलाष्टकमथो शृणु ।
राजवेश्या गुप्तवेश्या देववेश्या तथैव च ॥२८२४॥

नृत्यपात्रतीर्थवेश्या कुट्टिनी व्यभिचारिणी ।
कुलाष्टकमिदं प्रोक्तं महाकुलाष्टकं शृणु ॥२८२५॥

पंचलिंगहृता वेश्या दशलिंगा भगेश्वरी ।
पंचविंशतिलिंगा च लिंगतुष्टा प्रकीर्तिता ॥२७२६॥

पंचाशल्लिंगसंयुक्ता लिंगसिद्धा प्रकीर्तिता ।
शतलिंगा भगानंदा सहस्रा भगसुंदरी ॥२८२७॥

असंख्यलिंगसंयुक्ता भगब्रह्मपरा मता ।
विश्वलिंगा सर्वयोनिः सर्वस्मादपि चोत्तमा ॥२८२८॥

सहस्रभगसंदर्शान् मुक्तो भवति मानवः ।
सहस्रभगसंदर्शो देवतादर्शनं ध्रुवम् ॥२८२९॥

पूर्वोक्तं यच्चतुःपीठं तद्भेदं किंचिदुच्यते ।
श्यालकस्य तु भार्यायाः कुरुक्षेत्रं यदीरितम् ।
तत्कन्यायास्त्रिकोणं च गौरीमुखमुदीरितम् ॥२८३०॥

श्यालिकायास्त्रिकोणं च पंचभद्राभिधं च यत् ।
भार्या ज्येष्ठा तु या प्रोक्ता सा चात्र केलिकुंचिका ॥२८३१॥

तस्या योनिर्विश्वभद्रं सर्वपीठोत्तमोत्तमम् ।
एतासां व्यभिचारेण नामान्यन्यानि सशृणु ॥२८३२॥

स्वर्गद्वारं कामविलं महापथाभिधं परम् ।
वांछासरणिश्चतुर्थः स्याच्चतुःपीठानि पार्वति ॥२८३३॥

वर्षषोडशपर्यन्तं पूर्वा पुण्यद्रवा मता ।
द्वात्रिंशत्वर्षपर्यन्तममृतान्दोलिका मता ॥२८३४॥

ततोऽष्टवर्षपर्यन्तं सुधासागरनामकम् ।
ततो दिग्वर्षपर्यन्तमानन्दवननामकम् ।
पूर्वषोडशपर्यन्तं महासिद्धिमुखाभिधम् ॥२८३५॥

पंचपीठानि पूर्वस्यामधिराजक्रमेण च ।
तत् कन्यायां महेशानि शृणु यत्नेन सांप्रतम् ॥२८३६॥

अथ षोडशपर्यन्तं योगवीणा प्रकीर्तिता ।
पुष्पिता चेद् हि ब्रह्माण्डं कीर्तितं हि चतुष्ककम् ॥२८३७॥

द्वात्रिंशद्वर्षपर्यन्तं साम्राज्यगुटिकाभिधा ।
ततोऽष्टवर्षपर्यन्तमानन्दतूलिका मता ॥२८३८॥

ततो दिग्वर्षपर्यन्तं सौभाग्यकमला भवेत् ।
अथ श्रीशक्तिकागेहलक्षणं शृणु पार्वति ।
अथ षोडशपर्यन्तं महासाम्राज्यमण्डलम् ॥२८३९॥

स्वाराज्यमण्डलं देवि तदनंतरगं भवेत् ।
वैराज्यमण्डलं देवि ततः सर्वज्ञपीठकम् ॥२८४०॥

पूर्वषोडशपर्यन्तं द्वे प्रोक्ते ऋद्धिकामुके ।
सर्वसिद्धिप्रदादेव्याः केलिकुंच्याः प्रकीर्त्यंते ॥२८४१॥

पूर्वषोडशपर्यन्तं विश्वरूपाभिधं भवेत् ।
षोडशोत्तरगं देवि षष्टिसिद्ध्यभिधं भवेत् ॥२८४२॥

द्वात्रिंशदुत्तरं देवि सुंदरी मोहनाभिधम् ।
श्रीकालीमोहनाख्यं तु तदनन्तरमीरितम् ॥२८४३॥

चतुर्णामपि पुष्पं चेत् पुष्पिणीयोगमाचरेत् ।
रूढिजातिक्रिया चेत् स्यादधिराजादि योजयेत् ॥२८४४॥

पीठानि कथितान्यत्र रूपशीलक्रमेण च ।
स्त्रीमात्रे परमेशानि योगोऽयं विनिवेद्यताम् ॥२८४५॥

साधको देवदेवेशि निर्विकल्पो जितेन्द्रियः ।
कामक्रोधादिरहितो घृणालज्जादिवर्जितः ॥२८४६॥

चुंबनं कुचसंमर्दस्तथालिंगनतत्परः ।
सर्वदा वीक्षयेद् योनिं तस्याः लिंगं प्रदर्शयेत् ॥२८४७॥

दृष्टदोषेऽपि देवेशि मनःक्षोभं न कारयेत् ।
कृतमन्येन रमणं स्त्रीयोनौ स्वस्य पार्वति ॥२८४८॥

निरंतरं कृतं द्वित्रैः दश पंचभिरेव वा ।
एवं ज्ञात्वापि देवेशि विकाररहितो यदि ॥२८४९॥

ईदृग्विधो निर्विकल्पः साधनार्हो न चान्यथा ।
यदि दैववशाद देवि स्वस्त्री चेद् व्यभिचारिणी ॥२८५०॥

तथापि तस्याः संतोषं कारयेद् यत्नतः शिवे ।
अन्यथा नारकी भूयात् नात्र कार्या विचारणा ॥२८५१॥

सैव सृष्टि र्जगद्धात्री सैव कारणमीश्वरि ।
तस्या निवारणं देवि कर्तुं केनात्र शक्यते ॥२८५२॥
तया यत्क्रियते देवि सर्वं तत् तोषरूपकम् ।
मन्यमानो महेशानि साधको भवति ध्रुवम् ॥२६५३॥

कादिहादिक्रमे चैव सर्वं संसाधयेद् ध्रुवम् ।
अथ वक्ष्ये महेशानि यौवनांकुरमादितः ॥२८५४॥

ब्रह्माण्डमेतद् देवेशि स्त्रीदेहे तिष्ठति प्रिये ।
सुन्दरीपीठभेदं च वनानि वाटिकास्तथा ॥२८५५॥

ब्रह्माण्डानामनंतं च स्त्रीदेहे स्फुटमेव च ।
स्त्रीरूपं च जगत्सर्वं यत् किंचिदिह दृश्यते ॥२८५६॥

तद्रूपपूजनाद् देवि पूजिताः सर्वदेवताः ।
महाविद्याश्च योगिन्यो मातृकाद्याश्च याः पराः ॥२८५७॥

यथायोग्यस्थानपीठे निवसन्त्येव पार्वति ।
शास्त्रात् सर्वं तु विज्ञाय यथायोगेन योजयेत् ॥२८५८॥

पूर्वोक्तं यत् पशूनां तु दिव्यानामेतदेव तु ।
वीराणामपि देवेशि दिव्ये वीरे न भेदता ॥२८५९॥

समस्तज्ञानसंयोगात् ब्रह्मांडाख्यप्रदक्षिणा ।
पृथ्वीप्रदक्षिणा देवि पशूनां परिकीर्तिता ॥२८६०॥

सा पृथ्वी शक्तियोनिः स्यात् त्रैलोक्यं योनिमध्यगम् ।
योनिप्रदक्षिणा देवि वीराणां परिकीर्तिता ॥२८६१॥

गुप्ता व्यक्ता द्विधा देवि पृथिवी परिकीर्तिता ।
व्यक्ताद् गुप्ता महापुण्या तत् प्रदक्षिणमाचरेत् ॥२८६२॥

सर्वश्रेष्ठा महेशानि ब्रह्माण्डाख्यप्रदक्षिणा ।
पादमात्रे कृते देवि परशंभुः सदाशिवः ॥२८६३॥

शिव एव विजानाति फलबाहुल्यमत्र तु ।
स्मरणाद् भाषणाद् देवि त्रैलोक्यं पूजितं भवेत् ॥२८६४॥

शाक्ते श्रृङ्गारः संप्रोक्तः शैवे तु विरहो भवेत् ।
शक्तिस्तारुण्यवाटी स्यात् नाभी कूपः प्रकीर्तितः ॥२८६५॥

कुचौ घटौ महेशानि हास्यं पुष्पं प्रकीर्तितम् ।
कामद्वारं महेशानि भवेत् नवरसाश्च ये ।
नेत्रस्थानपंचकेन तिष्ठन्ति परमेश्वरि ॥२८६६॥

सामरस्यरसो ब्रह्म स एवात्मा प्रकीर्तितः ।
तद्वादनं ध्वनिः प्रोक्तस्तद्रसस्त्वमृतार्णवः ॥२८६७॥

उद्दीपनालंबनं तु सुगंधः परिकीर्तितः ।
मानसं भ्रमरः प्रोक्तो गतयः पक्षिणः स्मृताः ॥२८६८॥

मृगपश्वादयो भेदाः गतयस्तेऽपि संस्मृताः ।
रागास्तालाश्च रागिण्यस्तद्वार्तालापनं भवेत् ॥२८६९॥

सर्वे हावाश्च देवेशि उत्खातारोपणं मतम् ।
स्थायीभावः सेचनं स्याद् विभावाश्चालवालकम् ॥२८७०॥

स्थानात् स्थानांतरे यानमनुभावाः प्रकीर्तिताः ।
मालाकारो वसन्तः स्यात् कटाक्षाः कामनिर्मितिः ॥२८७१॥

मध्या प्रौढा प्रगल्भाद्येकद्वित्र्यावलिका मता ।
मालात्रुटिर्भवेन् मानस्तन्नतिर्हारनायकः ॥२८७२॥

मालत्यादीनि पुष्पाणि रतिहासा भवन्ति च ।
रतान्तहासो देवेशि सौगंधकेसरादिकम् ॥२८७३॥

एवं सर्वं तु विज्ञाय पंचगंधाष्टकं शिवे ।
तद्धर्मस्तु महेशानि मयात्र परिकीर्तितः ॥२८७४॥

तद्वार्तानुग्रहः क्रोधः शापश्च परिकीर्तितः ।
तुष्टिः प्रसन्नता प्रोक्ता निंदा क्षोभः प्रकीर्तितः ॥२८७५॥

ताटस्थ्यं चैव वैमुख्यं शक्तिरूपं प्रकीर्तितम् ।
आग्नेयी स्वर्ग इत्युक्तः सौरी मानवलोकता ॥२८७६॥

चांद्री पाताललोकत्वं त्रैलोक्यं कोणमध्यके ।
बिन्दुवर्षस्तु पर्जन्यः सर्वं संक्षेपतो मतम् ॥२८७७॥

शयनं क्रीडनं नाट्यं काव्यं तद्रूपचिंतनम् ।
काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च ॥२८७८॥

शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ।
पुनः पुनः किं वक्तव्यं त्रैलोक्यं तन्मयं यतः ।
चतुर्विंशतिवाद्यानि संयोगध्वनिरेव च ॥२८७९॥

कराकृष्टिर्मूर्च्छना स्यात् नीविकामोचनं शिवे ।
प्रोक्तः स्वर्गो महेशानि प्रवेशो मोक्ष एव च ॥२८८०॥

अन्यत्र निर्गमो मोक्षो मूढानां दुःखभागिनाम् ।
एतदज्ञानतो देवि फलं संसारजं शिवे ॥२८८१॥

अज्ञानादपि देवेशि फलं नैव प्रयच्छति ।
ज्ञानादेव महेशानि किं तद्यन्न करे स्थितम् ॥२८८२॥

ज्ञानात् कीटोऽपि निर्मुक्तस्तद् योगं शृणु पार्वति ।
जीवः कीटः पुरा भूत्वा भ्रमरं पश्यति प्रिये ॥२८८३॥

तदालोकनसद्भावाद् भ्रमरत्वं प्रजायते ।
पुनः कीटो नहि भवेत् सारूप्याद् रूपतां गतः ॥२८८४॥

शून्यस्य भावनाद् देवि शून्यं तस्यास्तु कोणगम् ।
अनन्तकोटिसंख्याता भ्रमरा यन्मुखोद्गताः ॥२८८५॥

तस्याः परस्वरूपिण्याः सद्भावं तु समभ्यसेत् ।
सुगमोऽयं परो भावश्चेतनः पुरुषोऽपि वा ॥२८८६॥

शिवरूपः स च प्रोक्तः सर्वसिद्धं महेश्वरि ।
जीवः कीटः पुरा भूत्वा भृङ्गत्वमधिगच्छति ॥२८८७॥

ततः षट्चक्रसंभेदं ज्ञात्वा तद्रसभुग् भवेत् ।
तत्परागं महेशानि स्थापिते यंत्रपीठके ॥२८८८॥

तेन मंत्रांल्लिखेद् देवि तस्योच्चारणमाचरेत् ।
मंत्ररूपो भवेत् तेन शिव एव न संशयः ॥२८८९॥

स्वयंशक्तिस्तदद्वयं च शक्तिस्वक्रमयोगतः ।
शैवशाक्ते शाक्तशैवे तत्द्वयक्रमयोगतः ॥२८९०॥

चक्राणि चैव विज्ञाय उक्तमार्गेण पार्वति ।
चक्राणि चैव निर्भिद्य स्वरूपं तत् स्वरूपकम् ॥२८९१॥

न कीटत्वं न भृंगत्वं स्वरूपेणैव देवता ।
देवतारूपभावेन क्षणात् तद्रूपतां व्रजेत् ॥२८९२॥

अर्धनारीस्वराख्यो हि त्वर्द्धयोगः प्रकीर्तितः ।
अर्द्ध शिवो विजानाति काली जानाति पूर्णतः ॥२८९३॥

दिव्ययोगो महेशानि तवाग्रेऽयं प्रकाशितः ।
दिव्यचक्रे जीवचक्रे शालग्रामे तथैव च ॥२८९४॥

वाणलिंगे महेशानि नावाहनविसर्जने ।
प्रत्यक्षरूपाण्येतानि देवास्तिष्ठन्ति सर्वदा ॥२८९५॥

अग्नौ दीपशिखामध्ये जले च दर्पणेऽपि च ।
सूर्यबिंबे चन्द्रबिंबे स्फाटिके पूजयेत् सदा ॥२८९६॥

यंत्रं तु गृहमित्युक्तं बिन्दुः सिंहासनं भवेत् ।
शालग्रामो भवेद् देहं चक्राणि पीठसंचयः ॥२८९७॥

वाणलिंगे स्फाटिकेऽपि हीरे मारकतेऽथवा ।
शालग्रामे जीवचक्रे सर्वान् देवान् प्रपूजयेत् ॥२८९८॥

यो भावो यस्य वै प्रोक्तस्तेन भावेन तिष्ठति ।
पुष्पमेकतमं स्थाप्य पूजयेत् परमेश्वरि ॥२८९९॥

जीवयुक्तं तु यद् यंत्रं तद् यंत्रं सिद्धरूपकम् ।
दिव्यचक्रं यदा प्राप्तं जीवचक्रं तदा न च ॥२६००॥

जीवचक्रं यदा प्राप्तं वाणलिंगं न चार्चयेत् ।
वाणलिंगं यदा प्राप्तं शालग्रामस्तदा न च ॥२६०१॥

शालग्रामो यदा प्राप्तस्तदान्यत्र न पूजयेत् ।
शालग्रामं तथा यंत्रद्वयमेकत्र नार्चयेत् ॥२६०२॥

शालग्रामो भवेद् यंत्रं शालग्रामो गृहं भवेत् ।
यंत्रं तु गृहमित्युक्तं गृहस्था देवता मता ॥२६०३॥

शालग्रामे तथा यंत्रे सहसैव प्रसीदति ।
जीवचक्रे महेशानि प्रसन्नाऽस्ति निरंतरम् ॥२६०४॥

जीवचक्रस्य विज्ञानी कलौ दुर्लभ एव च ।
वालुकायां भवेत् तैलं वंध्यापुत्रं प्रसूयते ॥२६०५॥

खपुष्पमपि जायेत अयोनिर्मनुजोऽपि वा ।
जीवचक्रस्य विज्ञानी कलौ क्वापि न वै भवेत् ॥२६०६॥

अग्रस्थान्नं परित्यज्य भिक्षामटति दुर्मतिः ।
तथा जीवं परित्यज्य परिधावति धावति ॥२६०७॥

अहो जीवस्य विज्ञानी शिव एव न चापरः ।
जीवं जीवे नियुंजीत जीवं जीवेन योजयेत् ॥२६०८॥

जीवं जीवेन संयोज्य जीवन्मुक्तो नरो भवेत् ।
अहो धन्यात्परो धन्यो जीवचक्री नरोत्तमः ॥२६०९॥

अथोच्यते जीवचक्रसाधनं सिद्धिदायकम् ।
शक्तिमानीय देवेशि पूर्वोक्तलक्षणान्विताम् ॥२६१०॥

गंधर्वोद्वाहयोगेन मौल्येनापि महेश्वरि ।
द्रव्यदानेन देवेशि कर्तव्यं साधनं परम् ॥२६११॥

चतुष्कपीठाभावे तु तत् तन्नामानि कल्पयेत् ।
सर्वाभावे स्वस्त्रियां च कर्तव्यं साधनं वरम् ॥२६१२॥

प्रसूनतूलिकां कृत्वा उच्चस्थाने निधापयेत् ।
पात्रासादनकं कृत्वा पूजाद्रव्याणि चानयेत् ॥२९१३॥

पंचषोढापरो भूत्वा तस्यां न्यासादिकं चरेत् ।
सापि वेश्या मतंगोत्था साऽपि प्रथमपुष्पिणी ॥२९१४॥

अथवा केलिकुंच्यादि प्रतिमासादि पुष्पिणी ।
यदि भाग्यवशाद् देवि लभ्यते तत् तथाचरेत् ॥२९१५॥

तरुणीं सुंदरीं रम्यां यौवनोद्धतमानसाम् ।
मदोन्मत्तां कंजनेत्रां सदा कामाभिलाषिणीम् ॥२९१६॥

संगमोद्युक्तहृदयां प्रार्थयेद् विधिपूर्वकम् ।
ईदृग्विधां समानीय यथोक्तं कर्ममाचरेत् ॥२९१७॥

प्रसूनतूलिकायां तु संस्थाप्य परमेश्वरि ।
सर्वोपचारैः संपूज्य चुंबनालिंगनादिभिः ॥२९१८॥

सांगां सावरणां देवीं ध्यात्वा पूज्य प्रयत्नतः ।
स्वयमक्षोभितो भूत्वा तस्याः क्षोभं समाचरेत् ॥२९१९॥

क्षोभे जाते च देवेशि योनिं कुर्याद् मुखांतरे ।
यथासंख्यं जपेत् तत्र योनिद्वारं विकासयन् ।
वीक्ष्य सहस्रं संजप्य मध्ये जिह्वां ततः क्षिपेत् ॥२९२०॥

जिह्वया मार्जयेद् योनिं सहस्रं तत्र संजपेत् ।
तद्रसं विलिहन् देवि नाडीत्रयगतं परम् ॥२९२१॥

तया यदुक्तं देवेशि तदेव कारयेद् ध्रुवम् ।
पूजा न जाता देवेशि तयोक्तं योगमाचरेत् ॥२९२२॥

योगं कृत्वा रेतसा तु तत्र यंत्रं विलिख्य च ।
तत्सर्वं विलिहन् देवि जपं कुर्यादनन्यधीः ॥२९२३॥

पूजा जपो होमकर्म तर्पणं मार्जनं तथा ।
द्विजानां भोजनं चैव सर्वदा यत्र तिष्ठति ॥२९२४॥

शय्याभंगी भवेत् पूजा जपो जल्पः प्रकीर्तितः ।
प्रवेशनं होमकर्म तर्पणं वर्षणं च यत् ॥२९२५॥

तत्क्षालनं मार्जनं स्याद् दंशनं द्विजभोजनम् ।
ईदृग्विधं महापीठं स्वयंभूसंज्ञकं परम् ॥२९२६॥

यस्य दर्शनमात्रेण यावत्यः संति सिद्धयः ।
स्वयमागत्य दासत्वं कुर्वन्त्येव न संशयः ॥२९२७॥

अनन्तयुगपर्यन्तं वीरसाधनकोटयः ।
कृता येन महेशानि तत्फलं निमिषाद् भवेत् ॥२९२८॥

आमूलान्तं च संवीक्ष्य सप्तचुंबनयोगतः ।
ओष्ठं पीत्वा नेत्रयुग्मं कपोले भालदेशके ॥२९२९॥

योनौ सप्तममादिष्टं तेन सिद्धीश्वरो भवेत् ।
हस्ताहस्तिकया धृत्वा दिक्सहस्रं जपेन् मनुम् ॥२९३०॥

कालिका वरदा तस्य नात्र कार्या विचारणा ।
लिंगं दत्वा तत्करे तु दशसाहस्रकं जपेत् ॥२९३१॥

साधकः साधनाशक्तः कल्पद्रुमसमो भवेत् ।
तस्या लिंगं प्रदर्श्याथ स्वयं योनिं प्रवीक्ष्य च ॥२९३२॥

दशसाहस्रकं जप्त्वा दशविद्याधिपो भवेत् ।
मुखे मुखं तु संदत्वा दशसाहस्रकं जपेत् ॥२९३३॥

महाकविवरो भूत्वा वादिराजो भवेद् ध्रुवम् ।
चामरं रविबिंबं च त्रिसूत्रं च सरोरुहम् ॥२९३४॥

तिलपुष्पं चन्द्रबिंबं खंजरीटं च पर्वतम् ।
पृथ्वीं विकसितां योनिं दशस्थानानि पार्वति ॥२९३५॥

जीवचक्रं मुखे धृत्वा लक्षं जपति वादिराट् ।
तद्रसं विलिहन् देवि लक्षं जपति कालिका ॥२९३६॥

जिह्वां दत्वा जपेल्लक्षं शक्तिपातकरो भवेत् ।
लिंगं दत्वा जपेल्लक्षं सर्वज्ञः साधको भवेत् ॥२९३७॥

आलोक्य प्रजपेल्लक्षं कविराट् साधको भवेत् ।
लिंगं दत्वा जीवचक्रे सप्तचुंवनयोगतः ॥२९३८॥

मुखं मुखे प्रदत्वा तु लक्षं जपति शंकरः ।
संयोगो ग्रहणं देवि महाकल्पांततोऽपि यत् ॥२९३९॥

सूर्यग्रहो यथायोगो विपरीते निशाकरः ।
प्रमादान् मनसा वापि मोहतोऽपि न गालयेत् ॥२९४०॥

तया यदुच्यते वाक्यं तदेव कारयेत् प्रिये ।
तया योगे समारब्धे पूर्णयोगो यदाचन ॥२९४१॥

पुरुषस्य न जातो हि तेन सः क्रियते मुहुः ।
ग्रस्तास्तः स तु विज्ञेयः सर्वपर्वोत्तमोत्तमः ॥२९४२॥

स्वयं योगे समारब्धे स्वस्वपूर्वं तु सच्युतिः ।
तया कार्यं समारब्धं तस्या पातो न जायते ।
ग्रस्तोदयः स विज्ञेयः सर्वसिद्धिप्रदायकः ॥२९४३॥

इति रात्रिपरं योगं दिवायोगं शृणु प्रिये ।
तस्याः स्वस्वक्रमेणैव तस्यास्त्वर्धोदयो मतः ॥२९४४॥

महोदयः स्वयोगे स्याद् वार्ता दशहरा मता ।
तद् वार्ताक्षय्यरूपाख्या तृतीया परिकीर्तिता ॥२९४५॥

एवं निगदितं देवि लतारूपं शृणु प्रिये ।
महाचीनद्रुमलतावेष्टितः साधकोत्तमः ॥२९४६॥

रात्रौ यदि जपेन् मंत्रः सैव कल्पलता भवेत् ।
मुखे चन्द्रस्तु सीमन्ते रविः संकीर्तितो बुधैः ॥२९४७॥

नेत्रे कामः कर्णयुगे सनत्कुमार एव च ।
अधरेऽमृतवारीशो जिह्वायां च सरस्वती ।
कल्पद्रुमः करयुगे कामधेनु र्ललाटयोः ॥२९४८॥

वाञ्छामणिस्पर्शमणि स्तनयोः परिकीर्तितौ ।
दक्षिणावर्त्तकम्बुस्तु कंठदेशे प्रकीर्तितः ॥२९४९॥

चिन्तामणिर्हृदंभोजे शेषो वेण्यां प्रतिष्ठितः ।
सप्तस्वर्गा मस्तकान्ते सप्तपातालकं नसि ॥२६५०॥

मादयो ह्यवताराश्च जंघायां देवतागणाः ।
नाभौ ब्रह्मा त्रिसूत्रे तु त्रिगुणात्मा सदाशिवः ॥२६५१॥

रोमावल्यां महाविष्णुर्योनौ ब्रह्माण्डगोलकम् ।
पृष्ठवंशे राक्षसाश्च भाग्यलक्ष्मीर्मुखांबुजे ॥२६५२॥

दानलक्ष्मीः करयुगे हृदये करुणाभिधा ।
सामरस्ये वीरलक्ष्मीर्देवे सौख्याभिधा स्मृता ॥२६५३॥

कुलशास्त्रे कीर्तिलक्ष्मी र्माने खड्गाभिधा भवेत् ।
अनेककोटिब्रह्माण्डं योनिमध्ये प्रतिष्ठितम् ॥२६५४॥

तत्त्वाग्निवेदभुवनद्वीपास्त्रैलोक्यशक्तयः ।
वार्तालापे चतुर्वेदाः सर्वशास्त्राणि वै कटौ ॥२६५५॥

ब्रह्माण्डगोलके यच्च यत् किंचिज्जगतीतले ।
तत्सर्वं शक्तिदेहेषु सर्वदा व्याप्य तिष्ठति ॥२६५६॥

शक्तिशृङ्गारमारभ्य मोक्षान्तं पूर्वगं शिवे ।
सर्व तिष्ठति देवेशि क्रोधे संहारशक्तयः ॥२६५७॥

महामंत्रास्तथा हासे महाविद्याः कटाक्षयोः ।
चीनद्रुमलतायास्तु माहात्म्यं परमेश्वरि ॥२६५८॥

विचित्रमेतद् देवेशि शृणु यत्नेन सांप्रतम् ।
अन्यवृक्षलतामूलं गतं भूमितलं भवेत् ॥२६५९॥

एतद् वृक्षस्य मूलं तु मध्यभागे विराजते ।
मध्ये भूमि र्महेशानि शाखाश्च परितः स्मृताः ॥२६६०॥

अधःशाखास्तूर्ध्वशाखामूलं मध्ये च भूमिका ।
जलं तत्रैव देवेशि प्रयागं तत्र कीर्तितम् ॥२६६१॥

ब्रह्माण्डगोलं पुष्पं च फलं बीजं च पार्वति ।
तत्रैव तिष्ठति प्राज्ञे वृक्षश्चलति सर्वदा ॥२६६२॥

वारुणीं वदति सानन्दां स्वेच्छाचारी निरंकुशः ।
परमानन्दरूपात्तु लता तस्याः प्रकीर्तिता ॥२६६३॥

महानंदस्वरूपाख्या चिदानंदस्वरूपिणी ।
पूर्णानन्दस्वरूपा सा महासमरसात्मिका ॥२६६४॥

ब्रह्मानंदस्वरूपा सा चिद्घनानंदरूपिणी ।
लता प्रोक्ता महेशानि संयोगानंदरूपिणी ॥२६६५॥

जगत्त्रयं सैव सूते पंचभूतानि सैव च ।
संहारकर्त्री सैव स्यान्मोक्षरूपा तु सा मता ॥२६६६॥

ब्रह्मरूपा तु सैव स्यान् मुक्तयस्तु चतुर्विधाः ।
यन् मूलज्ञानमात्रेण सदा तिष्ठन्ति पार्वति ॥२६६७॥

सालोक्यं चैव सारूप्यं सायुज्यं च तृतीयकम् ।
सान्निध्यं च चतुर्थं स्यात् सर्वं शक्तचां प्रतिष्ठितम् ॥२६६८॥

नवरुद्रसमायुक्ता नवरात्राभिधा भवेत् ।
कलावर्षं तु चैत्राख्यमाश्विनाख्यं तदुत्तरम् ॥२६६९॥

द्वाविंशद्वर्षयन्तं कीर्तितं परमेश्वरि ।
द्वात्रिंशद्वर्षपर्यन्तं प्रोक्ता दीपावली कला ॥२६७०॥

तदुत्तरं दारुणा स्यात् पर्वं शृणु महेश्वरि ।
वर्षद्वादशपर्यन्तं मोहरात्रिः प्रकीर्तिता ॥२६७१॥

संयोगे योगनिद्रा स्यान् महानिद्रा विसर्जने ।
आनंददीक्षा देवेशि विपरीता प्रकीर्तिता ॥२६७२॥

चीनद्रुमलतायास्तु मूलं चैवालवालकम् ।
पुष्पं फलं तथा बीजमेकत्रैव प्रतिष्ठितम् ॥२६७३॥

अधो भागेऽन्यवृक्षस्य मूलमस्ति वरानने ।
ऊर्ध्वं शाखा तत्र पुष्पं फलं तत्र तदुत्तरम् ॥२६७४॥

एतन् मूले जलं देयं यस्मात् शुष्यति नो तरुः ।
तस्माज्जलं प्रदेयं स्याद् रक्षकः पुरुषाधमः ॥२६७५॥

स्वमूलं च न जानाति पररक्षार्थमुद्यतः ।
स्वरक्षिका स्वयं देवी जलबिन्दुं घटस्थितम् ॥२९७६॥
ध्वजस्तस्य प्रणाली स्यादिदं संक्षेपतो मतम् ।
देवालये नदीतीरे रम्ये वा यत्र कुत्रचित् ॥२९७७॥
त्रिधा त्रिशक्तिसंजापी गवाक्षयोगमभ्यसेत् ।
सुखासने समासीनो भूतशुद्ध्यादिसंयुतः ॥२९७८॥
ऋषिच्छंदादिषोढान्तं कुल्लुकांतं महेश्वरि ।
कृत्वा ध्यात्वा महेशानि गवाक्षे दृष्टियोजनम् ॥२९७९॥
अंगुष्ठादिशिखान्तं हि समालोच्य जपं चरेत् ।
भ्रमरं सूर्यबिंबं च त्रिवेणीं पुष्करं तथा ॥२९८०॥
तिलपुष्पं खंजरीटं पर्वतं कामरूपकम् ।
अमृतं पुष्पितं देवि संगीतं नाट्यमेव च ॥२९८१॥
समालोच्य जपेद् देवि कामगेहं विशेषतः ।
एकद्वित्र्यादिलक्षा तं समालोच्य जपं चरेत् ॥२९८२॥
तत्रैव पुष्पितां दृष्ट्वा कृत्वा संयोगमादरात् ।
गवाक्षयोगसामर्थ्याज्जपं कुर्यादनन्यधीः ॥२९८३॥
अष्टावधानी देवेशि भवत्येव न संशयः ।
अथवान्यप्रकारेण साधनांतरमुच्यते ॥२९८४॥
कुलजां युवतीं वीक्ष्य यौनौ लिंगं प्रदापयेत् ।
मंथानं कारयेद् देवि गवाक्षमभ्यसेत् तथा ॥२९८५॥
तद्रसं विलिहन् देवि स्वरसं च ततः परम् ।
एवं मासाष्टकं कुर्यात् सिद्धिदाता न संशयः ॥२९८६॥
दशावधानो देवेशि भवत्येव न चान्यथा ।
वीरपत्नीं समानीय शवशय्यां समाचरेत् ॥२९८७॥
वीरसाधनवत् कृत्वा शवमाच्छाद्य यत्नतः ।
शक्तिं लिंगोपरि स्थाप्य सप्तचुंबनयोगतः ॥२९८८॥

गवाक्षयोगमासाद्य तत्रैव परमेश्वरि ।
वर्षमात्रं जपेद् देवि कालीरूपो नरो भवेत् ॥२९८९॥

शतावधानो देवेशि भवत्येव न संशयः ।
अथवान्यप्रकारेण साधनांतरमुच्यते ॥२९९०॥

महाशवं मध्यभागभूमावाच्छाद्य यत्नतः ।
मृदुचूडकमुंडाना कोमलं च चतुर्थकम् ॥२९९१॥

क्रमेण दिक्षु संयोज्य तत्र शक्ति समानयेत् ।
आसनं तत्र संदत्वा महाव्याघ्रासनं तथा ॥२९९२॥

तत्र वेश्यां समानीय योनौ लिंगं निधाय च ।
स्पर्शषट्कासनं कृत्वा जपं कुर्यादनन्यधीः ॥२९९३॥

वर्षमात्रं जपेद् देवि समयादिषु तत्परः ।
सहस्राद्यवधानं च कर्तुं शक्तो नरो भवेत् ॥२९९४॥

कुंकुमं केसरं चापि समानीय प्रयत्नतः ।
वामहस्ते तु संस्थाप्य दक्षे यंत्रं समालिखेत् ॥२९९५॥

वामेन तर्पणं कुर्यात् सहस्रमयुतं च वा ।
शक्तेर्मुखं समालोक्य तर्पणं सर्वदाचरेत् ॥२९९६॥

सर्वसिद्धीश्वरो भूयात् नात्र कार्या विचारणा ।
अस्मिन् यागे महेशानि यागोपकरणं शृणु ॥२९९७॥

कुचौ तु कलशौ प्रोक्तौ सामान्यार्घस्तु नाभिका ।
भगध्वजो विशेषार्घ्यस्त्रिकोणं यंत्रमीरितम् ॥२९९८॥

गमागमावृत्तिरुक्ता पुष्पं प्रदर्शनं स्मृतम् ।
आलापस्तु जपः प्रोक्तस्त्ववलोको वरः स्मृतः ॥२९९९॥

क्रोधस्तु निग्रहः प्रोक्तः करग्राहो भयं भवेत् ।
तस्याः पादप्रसारस्तु पृथिव्यास्तु प्रदक्षिणा ॥३०००॥

चुंबनं स्तोत्रपाठोऽत्र कुचमर्दस्तपःक्रिया ।
गले पादस्य निक्षेपः सिंहासनमितीरितम् ॥३००१॥

विपरीतं दोलिकाख्या पूजा प्रोक्ता महेश्वरि ।
विसर्जनं वीर्यपातो मुद्रा त्वालिंगनं भवेत् ॥३००२॥

ओष्ठसंचुंबनं देवि खेचरीयोग ईरितः ।
कपोलचुंबनं देवि गुटिका परिकीर्तिता ॥३००३॥

ललाटचुम्बनं देवि लम्बिका परिकीर्तिता ।
नेत्रसंचुंबनं देवि ह्यंजनं परिकीर्तितम् ॥३००४॥

करसचुंबनं देवि खड्गसिद्धिः प्रकीर्तिता ।
योनिसंचुंबनं देवि मनोरथमयी गतिः ॥३००५॥

जिह्वाप्रदानं देवेशि कालवंचनमीरितम् ।
रससंलेहनं देवि ब्रह्मरूपं न संशयः ॥३००६॥

आलोचनं पृथिव्यास्तु देवतादर्शन भवेत् ।
तत्संगिना सदा भाव्यं तामालोक्य जपेत् सदा ॥३००७॥

कोटिब्रह्माण्डदानादि ह्येकतः परिकीर्तितम् ।
तच्छायालोकनं देवि सर्वात् श्रेष्ठतरं भवेत् ॥३००८॥

तपश्चर्या कोटितीर्थे यागानामपि कोटयः ।
देवालयानामानंत्यं कृतं येन निरंतरम् ॥३००९॥

तेनेदं प्राप्यते देवि दर्शनं बिन्दुरूपिणः ।
ब्रह्मणो दर्शनं देवि शब्दब्रह्ममहत्तरम् ॥३०१०॥

चंद्रामृतं राहुभिया तथा स्वर्गामृतं प्रिये ।
राक्षसानां च संभीत्या ओष्ठे योनौ विराजते ॥३०११॥

चन्द्रामृतं चाधरोष्ठे योनौ स्वर्गामृतं प्रिये ।
सदा तिष्ठति देवेशि ज्ञानात् सिद्धि र्न चान्यथा ॥३०१२॥

अज्ञानाद् विषरूपं स्यात् नात्र कार्या विचारणा ।
विना मार्गं महेशानि गतिश्चैव कथं भवेत् ॥३०१३॥

मार्गप्रदर्शनाद् देवि गतिः सर्वत्र दृश्यते ।
तन्मार्गदर्शनार्थं हि मकाराः पञ्च कीर्तिताः ॥३०१४॥

मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
ज्ञात्वा फलं समाप्नोति नात्र कार्या विचारणा ॥३०१५॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्चमकाराश्च पञ्चनामप्रचारकाः ॥३०१६॥
आत्मविद्याशिवाः सर्वं पूर्णेति पञ्चमं विदुः ।
पञ्चतत्त्वानि देवेशि शाक्ते च परिकीर्तिताः ॥३०१७॥
पञ्चमुद्रा नामधरास्ता अहो वच्मि सांप्रतम् ।
ब्राह्मी च वैष्णवी रौद्री ईश्वरी श्रीसदाशिवा ॥३०१८॥
पञ्चमुद्राः समाख्यातास्तत्तन्नामधराः शिवे ।
संतर्प्य कुण्डलीशक्तिं पञ्चमुद्राविधानतः ॥३०१९॥
अलिं च पिशितं मीनं मुद्रा मैथुनमुत्तमम् ।
मकारपञ्चकं यत्र तत्र देवी न संशयः ॥३०२०॥
न मद्यं माधवीमद्यं मद्यं शक्तिरसं स्मृतम् ।
सुषुम्णा शङ्खिनी मत्स्यं मुद्रा उन्मन्यनुत्तमम् ॥३०२१॥
सामरस्यामृतोल्लासं मैथुनं तत् सदाशिवम् ।
महाकुण्डलिनीशक्तिस्तद्योगार्थं महेश्वरि ॥३०२२॥
शक्तिः प्रोक्ता महेशानि न भोगार्थं मयेरिता ।
कुण्डलीसामरस्यार्थं स्वयंभूलिंगमीरितम् ॥३०२३॥
एतदभ्यासयोगेन कुण्डली रसवान् भवेत् ।
अवाच्यं यद् भवेद् ब्रह्म तद्रसस्तु तथा भवेत् ॥३०२४॥
तथा समरसानन्दरसः संकीर्तितो मया ।
अज्ञानादपि देवेशि भोगवासनयापि वा ॥३०२५॥
फलं संसारजं देवि गर्भरूपेण जायते ।
ज्ञानात् फलमवाप्नोति त्रैलोक्यविजयाभिधम् ॥३०२६॥
तस्मात् तु पञ्चमी मुद्रा कीर्तिता तु मया तव ।
संयोगामृतयोगेन कुण्डल्युत्थानकारणात् ॥३०२७॥
चन्द्रपात्रे यदा याति तन्मद्यं परिकीर्तितम् ।
मणिपूरे दशदले सुषुम्णाया यदा गतिः ॥३०२८॥

तत् करामृतसंयोगाद् द्वितीया परिकीर्तिता ।
हृत्पद्मे द्वादशारे तु शङ्खिनी कूर्मसंस्थिता ॥३०२९॥
सुधासागरक्रीडायां मत्स्यस्तत्र प्रकीर्तितः ।
मुद्रा तृतीया गदिता चतुर्थी षोडशच्छदे ॥३०३०॥
चन्द्ररूपाग्निसंभिन्ना वर्त्तुला बिन्दुगर्भिता ।
भगध्वजाख्यचक्रके घटिता तु चतुर्थिका ।
पञ्चमुद्रा मया प्रोक्ता मुख्यभावफलाप्तये ॥३०३१॥
स्थूलसूक्ष्मक्रमेणैव प्रोक्तमेतन् महेश्वरि ।
स्थूलं मनसि संधाय सूक्ष्मं पश्चात् समभ्यसेत् ॥३०३२॥
मकारपंचकेनैव ज्ञानमेतस्य जायते ।
कर्मदूती ज्ञानदूती द्विधा चैव प्रकीर्तिता ॥३०३३॥
बाह्याभ्यन्तरभेदेन यथाज्ञानं च साधयेत् ।
कर्मदूतीं च संसाध्य ज्ञानदूतीमथाभ्यसेत् ॥३०३४॥
मकाररूपो मार्गो हि कीर्तितस्ते मया यतः ।
एवं कर्तुमशक्तश्चेत् तत् तत् प्रतिनिधिं चरेत् ॥३०३५॥
गुडार्द्रकरसो देवि मुद्रा तु प्रथमा मता ।
तथैव विजया प्रोक्ता ताम्रपात्रे पयस्तथा ॥३०३६॥
मधुमिश्रा तु प्रथमा कीर्तिता चानुकल्पके ।
पिण्याकं लवणं देवि द्वितीया परिकीर्तिता ॥३०३७॥
लसुनं तिंतिणीकं च तृतीया परिकीर्तिता ।
सूर्यमण्डलसंकाशा चन्द्रमण्डलसन्निभा ।
गोधूममाषसंभूता स्यात् सुंदरि चतुर्थिका ॥३०३८॥
शक्तयालापः पंचमी स्यात् तथैव चापराजिता ।
करवीरपुष्पसहिता संयोगानन्ददायिनी ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥३०३९॥

इति श्रीमदागमरहस्ये सतसंग्रहे शक्तिरहस्यनिर्णयो नाम
द्वादश पटल. ॥१२॥ आदितश्चत्वारिंशत् ।

## अथ त्रयोदशः पटलः ।

दूतीयागमथो वक्ष्ये खेचरत्वप्रदायकम् ।
यस्यानुष्ठानमार्गेण स्वयं ब्रह्मत्वमाप्नुयात् ॥३०४०॥

तथा च देवीयामले—

संति नानाविधा धर्मा ऐहिकामुष्मिकप्रदाः ।
तत्सारं तु समालोक्य तथान्यमंत्रसंग्रहम् ॥३०४१॥

तन्मध्ये सारभूतं च सद्यः प्रत्ययकारकम् ।
न कस्यापि वरारोहे प्रोक्तवान् त्रिदशेष्वपि ॥३०४२॥

दूतीयागे कृते मंत्री सर्वज्ञो जायते ध्रुवम् ।
न तस्य पुनरावृत्ति· कल्पकोटिशतैरपि ॥३०४३॥

देवा यक्षाश्च गंधर्वा ऋषयश्च मुनीश्वराः ।
ब्रह्मविष्णुमहेशाद्यास्तथा च पितृदेवताः ॥३०४४॥

दूतीयागविधिं कृत्वा तत् तत् पदमवाप्नुयुः ।
विधिवत् सुकृती कृत्वा दूतीयागं तु पार्वति ॥३०४५॥

कृतकृत्यो न संदेहः सुंदरी सुप्रसीदति ।
येषां वंशे प्रजायेत दूतीयागो महेश्वरि ॥३०४६॥

ते धन्याश्च समृद्धार्थास्ते वंद्याः सुहृदः सदा ।
कायेन मनसा वाचा सर्वथा न प्रकाशयेत् ॥३०४७॥

सुतं पत्नीं शिरो दद्यात् न देयमिदमुत्तमम् ।
कुर्यात् प्रयत्नतश्चैव दूतिकायजनं प्रिये ॥३०४८॥

यैः कृतं यजनं दूत्यास्तैरिष्टाः क्रतवोऽखिलाः ।
पुरश्चर्यादिसकलं कृतं तेन न संशयः ॥३०४९॥

अश्वमेधसहस्राणि वाजपेयशतानि च ।
आसमुद्रा च धरणी दत्ता तेन सदक्षिणा ॥३०५०॥

मेरुमंदरतुल्यानि सुवर्णान्यर्पितानि च ।
गोकोटिदानाद् यत् पुण्यं तत् पुण्यं जायते प्रिये ॥३०५१॥

सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो यतः ।
तस्मात् सर्वप्रयत्नेन दूतीयागं समाचरेत् ॥३०५२॥

पूजा संपूर्णदा भद्रे सर्वारिष्टप्रशामकम् ।
यदनुष्ठानमात्रेण सर्वमाचरितं भवेत् ।
शक्तिपूजा प्रकर्तव्या विधिवद् भक्तिसंयुतैः ॥३०५३॥ इति ।

तद्दूतीयाग द्विविधम् । आन्तर बाह्य च । ज्ञाननिष्ठानामान्तरम् । कर्मनिष्ठाना बाह्यम् । तद् बाह्य द्विविधम् । कालीकुलश्रीकुलभेदात् । तत्तत्क्रम च तत्तत् कल्पे द्रष्टव्यम् ।

यथात्र सर्वसाधारण कुमारीतन्त्रे—

यथोक्तलक्षणां दूतीं नवानां कामपि प्रिये ।
पूजयेत् परया भक्त्या वित्तशाठ्यविवर्जितः ॥३०५४॥

उक्ताभावे च या काचिदात्मीया वा पराऽथवा ।
पूजनीया विधिज्ञेन कर्मणां फलसिद्धये ॥३०५५॥

मंत्राधिदेवता बुद्ध्या पूज्या सर्वोपचारकैः ।
विविधैः फलतांबूलै वंस्त्रालंकारहेमभिः ॥३०५६॥

संभोगवासनां धृत्वा यः कुर्यात् शक्तिपूजनम् ।
स दारिद्र्यमवाप्नोति नारकी च भवेद् ध्रुवम् ॥३०५७॥

वीरचूडामणौ च—

आनीय युवतीं रम्यां श्यामां लक्षणलक्षिताम् ।

श्यामालक्षण कामशास्त्रे—

स्निग्धनखनयनदशना निरनुशया मानिनी स्थिरस्नेहा ।
सुस्पर्शशिशिरमांसलवरांगविवरांगना श्यामा ॥३०५८॥

वीरचूडामणौ—

अत ऊर्ध्वं न पूज्या स्यादित्याज्ञा पारमेश्वरी ।
पूजिता चेद् वरारोहे तर्पणं निष्फलं भवेत् ॥३०५९॥

अथ पूजाविधिं तस्याः शृणु देवि समाहिता ।
याममात्रे गते रात्रौ कुलपूजां समारभेत् ॥३०६०॥

तांबूलपूरितमुखो धूपामोदसुगंधितः ।
रक्तचंदनदिग्धांगो रक्तमाल्यानुलेपनः ।।३०६१।।
रक्तवस्त्रपरीधानो लाक्षारुणगृहे स्थितः ।
तदानीय कुलं सम्यगुद्वर्तनमनन्तरम् ।।३०६२।।
स्नानं रक्तदुकूलादिगंधमालाविभूषिताम् ।
सुगंधिसंस्कृतां कृत्वा सर्वाभरणभूषिताम् ।।३०६३।।
प्रणम्य पादौ प्रक्षाल्य स्वागतादि समाचरन् ।
वामभागे समालिख्य पद्मं वै वर्तुलं शुभम् ।।३०६४।।
स्वेतरक्तसमायुक्तं नीलसिंदूरचर्चितम् ।
पीठशक्तिविधानेन संपूज्या नव शक्तयः ।।३०६५।।
रतिः प्रीतिः प्रिया कांतिः कामिनी कामपालिनी ।
कंदर्पदलिनी दुर्गा भवानी पीठशक्तयः ।।३०६६।।
वियद् हंसं समुच्चार्य मनुबिन्दुकलाचितम् ।
महाप्रेतपदं पश्चाद् हृदयान्तमिदं मनुम् ।।३०६७।।
अनेनासनमभ्यर्च्य गृहीत्वा वामहस्तकम् ।
निवेश्य तूलिकामध्ये नानापुष्पसुगंधिनि ।।३०६८।।
चंदनागरुकर्पूरकस्तूरीकुंकुमादिभिः ।
समाकीर्णे निवेश्याथ पूजयेत् कुलनायिकाम् ।।३०६९।।
आचम्य श्रीगुरून् स्मृत्वा गणेशं दक्षवामयोः ।
मध्ये शक्तिमिष्टरूपां प्रणम्याशां निबध्य च ।।३०७०।।
निवेश्य तूलिकामध्ये नानापुष्पसुगंधिना ।
भूतशुद्धयादिकं सर्वं स्वकल्पोक्तक्रमेण च ।।३०७१।।
विधाय न्यासजालानि तथा मूलषडंगकम् ।
कृत्वा कुलशरीरेऽपि न्यासजालं महेश्वरि ।।३०७२।।
सामान्यार्घं च सस्थाप्य कलशादिक्रमेण च ।
पंचद्रव्याणि संशोध्य पात्राणि स्थापयेत् ततः ।
तत्त्वशुद्धिं विधायाथ शक्तिसंस्कारमाचरेत् ।।३०७३।।

मनोहरा मनोरामा मदनोन्मादिनी प्रिये ।
मोहिनी दीपिनी चैव शोषिणी च वंशकरी ॥३१००॥

रंजनी सुभगादेवी षोडशी प्रियदर्शना ।
षोडशस्वरसंयुक्ता एताः कामकलाः यजेत् ॥३१०१॥

ततश्चन्द्रकला पूज्या शिरसश्चरणावधि ।
पूषा वशा च सुमना रतिः प्रीतिस्तथा धृतिः ॥३१०२॥

श्रद्धा सौम्या मरीचिश्च शैलजा चांशुमालिनी ।
अंगिरा शशिनी चैव च्छाया संपूर्णमंडला ॥३१०३॥

तथा तुष्ट्यमृते चैव कला सोमस्य षोडश ।

उत्तरतन्त्रे अंगिरास्थाने मदिरेति पाठः । तच्च कालीकुलपरम् ।

स्वरैरेव प्रपूज्या हि सर्वकामार्थसिद्धये ॥३१०४॥

पूजास्थानानि च दक्षपादादि मूर्धान्तं कामकला । मूर्धादि वामपादान्तं सोमकलाः ।

दक्षांगुष्ठं पादगुल्फौ जानुजंघे तथैव च ।
नाभिवक्षःकक्षकण्ठगंडोष्ठनयनेषु च ॥३१०४॥

मुखे ललाटे च मुखे शिरसि क्रमतोऽर्चयेत् ।
एतेषु विपरीतेन पूज्याश्च शशिनः कलाः ॥३१०६॥इति।

अत्रैव श्रीविद्यायां विशेष रहस्ये—

स्मृत्वा ऋष्यादिकं मंत्री षडंगन्याससंयुतः ।
कुलांगे गंधपुष्पाद्यैः पूजयेच्च त्रिकूटया ॥३१०७॥

त्रिपुरा मस्तके पूज्या कुंतले त्रिपुरेश्वरी ।
ललाटे त्रिपुराध्यक्षा भ्रुवोस्त्रिपुरवासिनी ॥३१०८॥

नेत्रयोस्त्रिपुरेशानी कर्णयोस्त्रिपुरार्चिता ।
नसि त्रिपुरा त्र्यक्षरीति गंडयोस्त्रिपुरांबिका ॥३१०९॥

मुखे त्रिपुरविद्या च कण्ठे त्रिपुरमालिनी ।
स्कंधयोस्त्रिपुरादेवी हस्तयोस्त्रिपुरोत्तमा ॥३११०॥

वक्षसि त्रिपुराश्री च कुचयोस्त्रिपुरेष्टदा ।
कुक्षौ त्रिपुरमूर्त्तिश्च पार्श्वयोस्त्रिपुराकला ॥३१११॥

पृष्ठे त्रिपुरचक्रेशी नाभौ त्रिपुरसूदिनी ।
योनौ त्रिपुरयोनिश्च गुह्ये त्रिपुरगोपिता ॥३११२॥

ऊर्वोस्त्रिपुरमंत्रेशी जान्वोस्त्रिपुरजंगमा ।
जंघयोस्त्रिपुरा ज्येष्ठा पादयोस्त्रिपुरांचिता ॥३११३॥

पादादि मूर्ध्निपर्यन्तगात्रे त्रिपुरसुंदरी ।
पूजनीया महादेवि गंधाक्षतप्रसूनकैः ।
बालाक्रमं मस्तकेऽस्याः संपूज्य तदनन्तरम् ॥३११४॥ इति ।

उत्तरतन्त्रे ज्ञानार्णवे च—

भगे तदीये विज्ञेया नाड्यस्तिस्रः प्रवाहिकाः ।
एका तु वाहिका चान्द्री सौरी चान्या प्रवाहिका ॥३११५॥

आग्नेयी चापरा ज्ञेया पूजयेत् ताश्च साधकः ।
अम्बुः स्रवति चान्द्री सा पुष्पं स्रवति भानवी ॥३११६॥

वीर्यं स्रवति चाग्नेयी तास्तु नामभिरर्चयेत् ।
वाग्भवाद्यै र्नमोयुक्तैः पूजयेत् सुप्रसन्नधीः ॥३११७॥

पूजयेत् मदनागारे रक्तचन्दनचर्चिते ।
विद्यया भगमालिन्या पूजयेत् तां समाहितः ॥३११८॥

वाग्भवं भगशब्दान्ते भुगे भगिनि चालिखेत् ।
भगोदरि तदन्ते स्याद् भगमाले भगावहे ॥३११९॥

भगगुह्ये भगान्ते च योने भगनिपातिनि ।
सर्वान्ते च ततो देवि ब्रूयाद् भगवशंकरि ॥३१२०॥

भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लिन्ने भगान्ते च स्वरूपे सर्वमालिखेत् ॥३१२११॥

भगानि मे ह्यानयान्ते वरदेऽथ समालिखेत् ।
रेते सुरेते च भगक्लिन्ने क्लिन्नद्रवे ततः ॥३१२२॥

अदीक्षितकुलासंगात् सिद्धिहानिस्तु जायते ।
अभिषेकाद् भवेत् शुद्धि र्मंत्रस्योच्चारविद्भिः ॥३०७४॥
बलाद् वा यत्नतो वापि अभिषेकं समाचरेत् ।
आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ॥३०७५॥
नमःशब्दं समुच्चार्य इमां शक्ति ततो वदेत् ।
पवित्रीकुरुशब्दान्ते मम शक्ति कुरु प्रिये ॥३०७६॥
वह्निजायां समुच्चार्य शुद्धिमंत्रः सुरेश्वरि ।
सामान्यार्घजलेनैव त्रि.सिञ्चेन् मंत्रमुच्चरन् ॥३०७७॥
तस्याः कर्णेऽभेदबुद्ध्या मायाबीजं समुच्चरेत् ।
एवं शक्ति तु संस्कृत्य तस्यै दद्याच्च पात्रकम् ॥३०७८॥
भोगपात्रयुतं चैव नानाव्यंजनसंयुतम् ।
दत्वा संतर्प्य तां सम्यक् तरुणोल्लाससंयुत ॥३०७९॥
तरुणोल्लाससंयुक्तां पर्यंके तु निवेशयेत् ।
भयलज्जादि सर्वाणि परित्यज्याथ दूतिका ॥३०८०॥
कंचुकं च परित्यज्य तथा वस्त्रं च पार्वति ।
आचार्यानुचरी रक्ता मनसा सुखदायिनी ॥३०८१॥
एवंविधा यदा दूती तदा पूजां समारभेत् ।
संकल्पं च प्रकल्प्याथ कृत्वा मंडलमुत्तमम् ॥३०८२॥
मंचकं गजदंतस्य हेमरूप्यादिनिर्मितम् ।
विशुद्धक्षौमरचितां तूलिकां तत्र योजयेत् ॥३०८३॥
पुष्पाण्याकीर्य तन्मध्ये कर्पूरस्य रजस्तथा ।
मंडूकादिस्तत्र देवि उपर्युपरि पूजयेत् ॥३०८४॥
मंडूकं पूजयेदादौ रुद्रं कालाग्निसंयुतम् ।
आधारशक्ति कूर्मं च तथा शेषवराहकौ ॥३०८५॥
पृथिवीं च तथा कंदं नालं पद्मदलांस्तथा ।
केसराणि च संपूज्य कर्णिकां पूजयेत् ततः ॥३०८६॥

एवं मंचकमभ्यर्च्य तस्य पादचतुष्टये ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमाद्यजेत् ॥३०८७॥

अपूर्वान् पूजयेदेतान् तत्पादानां समीपतः ।
आत्मान्तरात्मापरमज्ञानात्मानः क्रमात् ततः ॥३०८८॥

स्ववर्णादिममंत्रैश्च पूज्य संपूजयेद् गुणान् ।
तस्योपरि कुलं स्थाप्य पूजयेत् तां समाहितः ॥३०८९॥

पूजयेत् परमेशानि पंचकामशरांस्ततः ।
ह्रीं चैव कामराजं क्लीं कन्दर्पमैं च मन्मथम् ॥३०९०॥

ब्लूं मकरध्वजं चैव स्त्रीं चैव हि मनोभवम् ।
ॐकारादि नमोन्तं च कुसुमैर्गंधसंयुतैः ॥३०९१॥

पूजयित्वा चतुर्दिक्षु पूजयेत् कुलनायकान् ।
वटुकादींश्चतुर्दिक्षु पूजासंसिद्धिहेतवे ॥३०९२॥

मातृकां विन्यसेत् तस्या देहे कामशरान्विताम् ।
अनेन मनुना तस्या ललाटे सुमनोहरम् ॥३०९३॥

त्रिकोणं तत्र संलिख्य सिंदूराद्यैर्वरानने ।
वाग्भवं कामबीजं च स्त्रीबीजं कामराजकम् ॥३०९४॥

हस्ख्लेमात्मकं दत्वा आधारशक्तिमुद्धरेत् ।
श्रीपादुकां ततो दत्वा पूजयामि वदेत् ततः ॥३०९५॥

महाप्रेतासनं मध्ये बालां च पूजयेत् ततः ।
त्रिकोणमध्ये बालाख्यां कामेशीं परिपूजयेत् ॥३०९६॥

गणेशं च कुलाध्यक्षं दुर्गां लक्ष्मीं सरस्वतीम् ।
त्रिकोणेषु च संपूज्य वसंतं मदनं प्रिये ॥३०९७॥

स्तनयोः पूजयेत् पश्चात् मुखे तस्याः कलाधरम् ।
दक्षपादादि मूर्धान्तं वामे मूर्धादि सुंदरि ॥३०९८॥

पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः ।
श्रद्धाप्रीती रतिश्चैव धृतिः कांतिर्मनोरमा ॥३०९९॥

क्लेदय द्रावयांतेऽथ सर्वसत्त्वान् भगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्वं च ॥३१२३॥

सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं ब्लूं जमादिकम् ।
भें ब्लूंमों ब्लूं च हें ब्लूं हे क्लिन्ने ब्रूयात् ततः परम् ॥३१२४॥

सर्वाणि च भगान्यन्ते मे वशं चानयेति च ।
स्त्रीबीजं च हरप्रान्ते क्लेमात्मकमक्षरम् ॥३१२५॥

भुवनेशीं समालिख्य विद्येयं भगमालिनी ।
त्रितारान्तेऽनया पूज्य त्रिकोणं क्षोभवर्जितः ॥३१२६॥

अत्राप्यावाहनं नास्ति जीवन्यासं महेश्वरि ।
मूलदेवीं यजेत् तत्र षोडशैरुपचारकैः ॥३१२७॥

अत्रैव श्रीविद्याया विशेष. ज्ञानार्णवे—

त्रिकोणं तद्भगं ज्ञात्वा सर्वसिद्धिप्रदाभिधम् ।
सर्वानन्दमयं मध्ये चक्रयुग्मं प्रपूजयेत् ॥३१२८॥

पूर्ववत् क्रमयोगेन श्रीविद्यां तत्र पूजयेत् ।
षोडशैरुपचारैश्च तदन्ते पूजयेत् शिवम् ॥३१२९॥

शिव लिंगमिति ।

तारं च भुवनेशानीं तथा त्रिपुरसुन्दरीम् ।
नमः शिवाय विद्येयं दशार्णा परिकीर्तिता ॥३१३०॥

त्रिपुरसुन्दरीमिति त्रिकूटाम् ।

अनया विद्यया देवि स्वर्लिंगं पूजयेत् शिवे ।
यजेत् तत्पुरुषाघोरसद्योवामेशसंज्ञकैः ॥३१३१॥

निवृत्तिश्च प्रतिष्ठा च विद्या शांतिस्तथैव च ।
शांत्यतीताश्च संपूज्य षडंगावरणं यजेत् ॥३१३२॥

समग्रविद्यामुच्चार्य नंदिकेशं प्रपूजयेत् ।
मध्ये वृषणयोर्देवि गंधपुष्पाक्षतादिभिः ॥३१३३॥

निवेद्य सर्वं धूपादिः विजितेन्द्रियमानसः ।
सर्वसंक्षोभिणीं मुद्रां बध्वा योनिं प्रचालयेत् ॥३१३४॥

क्षोभिण्या वामया देवि गजतुण्डाख्ययाऽथवा ।
उच्चरन् भगमालां च द्राविणीबीजमुच्चरन् ।
प्रक्षुभ्य च वरारोहे यावदेतत् प्रवर्तते ॥३१३५॥ इति ।

उत्तरतन्त्रे—

अर्चयेद् गंधपुष्पाद्यैः स्वशिवं तदनन्तरम् ।
यजेत् तत्पुरुषाघोरसद्योवामेशसंज्ञकैः ॥३१३६॥

निवृत्तिं च प्रतिष्ठां च विद्यां च तदनन्तरम् ।
शांतिं च शांत्यतीतां च तदंगे तदनन्तरम् ॥३१३७॥

समग्रविद्यामुच्चार्य त्रिकोणं च पुनर्यजेत् ।
अवधूतेश्वरीं कुब्जां कामाख्यां समयामपि ॥३१३८॥

वज्रेश्वरीं कालिकां च तथा दिक्करवासिनीम् ।
तथा चण्डेश्वरीं तारां पूजयेत् तत्र साधकः ।
तदनुज्ञां ततो लब्ध्वा दत्वा तांबूलमेव च ॥३१३९॥

शिवं तत्र विनिक्षिप्य गजतुण्डाख्यमुद्रया ।
चिन्तयन् द्राविणीं विद्यां द्राविण्या मुद्रया तथा ॥३१४०॥

वाग्भवं भुवनेशानीं चपलेति पदं तथा ।
अंते चपलचित्तोऽथ रेतो मुंचयुगं तथा ॥३१४१॥

क्लूं क्रीं स्त्रीं तथा हें च द्राविणीयं नवाक्षरी ।
त्रिर्विमृश्य तदन्ते च श्लोकरूपं मनुं स्मरेत् ॥३१४२॥

धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥३१४३॥

स्वाहान्तोऽयं महामंत्र आरंभे परिकीर्तितः ।
ततो जपेत् स्त्रियं गच्छन् विद्यां त्रिभुवनेश्वरीम् ॥३१४४॥

अष्टोत्तरसहस्रं वा शतं वा क्षुब्धमानसः ।
विहरेद् विविधै र्भावैः शक्तिसंतोषकारकैः ॥३१४५॥

मौली कुन्तलकर्षणं नयनयोराचुंबनं गंडयो
र्दन्तेनाधरयोः क्षतिर्हृदि हृति मुष्ट्या च नाभौ भगे ।
कक्षोरूषु कपोलमंडलयुगे श्रोण्यां च देया नखाः
सीमन्ते लिखनं नखैरुरसिजं गृह्णीत गाढं ततः ॥३१४६॥

कुर्वीताविरतं मनोभवगृहे मातंगलीलायितं
ग्रीवांगुष्ठपदादिगुल्फहननं चान्योन्यतः कामिनो. ॥३१४७॥

इति कामशास्त्रे ।

ततो रेत पातसमये—

प्रकाशाकाशहस्ताभ्यामवलंब्योन्मनीस्रुचम् ।
धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥३१४८॥

स्वाहान्तोऽयं महामंत्रः शुक्रत्यागे प्रकीर्तितः ।
कुलामृतं प्रयत्नेन गृह्णीयाद् दुर्लभं ततः ॥३१४९॥

कुलामृतं च संशोध्य ब्रह्मरूपं विचिन्त्य च ।
अर्घ्यपात्रामृते क्षिप्त्वा तेन देवीं प्रतर्पयेत् ॥३१५०॥

गुरूणां साधकानां च सर्वेषां तर्पणं चरेत् ।
तेनामृतेन दिव्येन सर्वे तुष्टा भवन्ति च ।
यत् कामं वांछते मंत्री तत्क्षणादेव सिद्ध्यति ॥३१५१॥

शोधनमत्रस्तु द्रव्यशोधनपटले पुरैवोक्त ।

अयं बिंदुरजः साक्षात् संविदेव न संशयः ।
प्रकृतिः परमेशानि बीजं पुरुष उच्यते ॥३१५२॥

सर्वसाक्षीसामरस्यं शिवशक्तिमयं यतः ।
तयोर्योगे महेशानि योग एव न संशयः ॥३१५३॥

सीत्कारो मंत्ररूपस्तु भाषणं स्तवनं भवेत् ।
आलिंगनं तु कस्तूरीकर्पूरघुसृणादिकम् ॥३१५४॥

नखदन्तक्षतादीनि पुष्पाणि विविधानि च ।
मैथुनं तर्पणं विद्धि वीर्यपातो विसर्जनम् ॥३१५५॥

वीर्यामृतं परब्रह्मरूपं साक्षान्न संशयः ।
विचिकित्सापरो मंत्री जायते गुरुतल्पगः ॥३१५६॥

अतएव वरारोहे निर्विकल्पः सदा भवेत् ।
चुंबने परमैश्वर्यं नखदन्तक्षतैः सुखम् ॥३१५७॥

संभोगे च सुखं यत्तु तद् विष्णोः परमं पदम् ।
आलिंगनं हरेद् रोगान् धनधान्यादि चुम्बने ॥३१५८॥

नखदंतताडनाद्यैः भोगं मोक्षं न दुर्लभम् ।
सायुज्यं संगमेन स्यात् सत्यमेतन्न संशयः ॥३१५९॥

न दद्याच्चुंबनं देवि दरिद्रो जायते ध्रुवम् ।
आलिंगनं विना मंत्री कुष्ठी भवति निश्चितम् ॥३१६०॥

नखदंतक्षतेनैव विना स्याल्लोकगर्हितः ।
तस्मात् सर्वं विधातव्यं साधकेनेष्टतुष्टये ॥३१६१॥

इति कर्मदूतीयजनम् ।

अथ ज्ञानदूती यथा ज्ञानार्णवे—

दूत्यन्तरं प्रवक्ष्यामि येन ब्रह्म सनातनम् ।
प्रणवाख्ये योगगेहे प्रविश्य परमंदिरे ॥३१६२॥

इच्छाज्ञानक्रियाद्रव्यरचितं सुभगान्वितम् ।
अमुया परमेशानि तत्त्वज्ञानमये शिवे ॥३१६३॥

पर्यंके पुरुषार्थैश्च पादैश्च परिमंडिते ।
आत्मान्तरात्मापरमात्माज्ञानात्मांगभूषिते ॥३१६४॥

तत् पदार्थं त्वं पदार्थं पदार्थमसि सुंदरि ।
पदार्थत्रयमेतत् तु गुणसूत्रप्रकाशकः ।
एतत् सूत्रमयैः पट्टै गुंफिते सुरमंडिते ॥३१६५॥

सुमनोवाससुभगे परामत्र प्रपूजयेत् ।
जातिभेदस्तु दूतीनां चतुर्धामरवंदिते ॥३१६६॥

हस्तिनी शङ्खिनी चैव चित्रिणी पद्मिनी प्रिये ।
चतुर्विधा हि दूत्यस्तु सुन्दर्यश्चारुलोचने ॥३१६७॥

वैखरी हस्तिनी ज्ञेया स्थूला यस्माद् वरानने ।
ययेदं धार्यते सर्वं ब्रह्माण्डं परिमंडलम् ॥३१६८॥

वर्गाष्टकेन देवेशि सूते दिक्पालसञ्चयम् ।
तेनेयं करिणी प्रोक्ता मध्यमा शङ्खिनी भवेत् ॥३१६९॥

शङ्खिनी तु यथा भद्रे विशुद्धा पापवर्जिता ।
सर्वदेवप्रिया सा हि शांतिसौरम्यशोभिता ॥३१७०॥

तथा वनस्पतिगता मध्यमा या वरानने ।
चित्रिणी वल्लरी देवि महादोषविनाशिनी ॥३१७१॥

यस्याः फलं वरारोहे सर्वशक्तिमयं सदा ।
शिवशक्तिमयं देवि प्राणिमात्रं जगत्त्रयम् ॥३१७२॥

तेषु सर्वेषु पश्यन्ति जीवेषु परमाश्रया ।
परब्रह्मणि संलीना परांबा परमेश्वरि ॥३१७३॥

तां दूतीं तत्र संपूज्य समाधिकुसुमैः शुभैः ।
तदंगेषु कलाः पूज्याः क्रमेण सुरवंदिते ॥३१७४॥

पद्मिनी त्वपरा ज्ञेया हंसावस्था विकाशिनी ।
हंसोदयेन पद्मं हि त्यक्त्वा स्वं पत्रमद्रिजे ॥३१७५॥

विकाशं याति सौभाग्यं तथा वस्तुविलासकम् ।
परा प्रकाशमायाति पद्मिनी संमता भवेत् ॥३१७६॥

तस्या देहे वरारोहे कलाः पूज्यास्तु षोडश ।
चित्कला सत्कला ज्ञानकला संवित्कला तथा ॥३१७७॥

आत्मनश्च कला ज्ञेयाश्चतस्रः परमेश्वरि ।
विरागता मोक्षकला परमाणुकला तथा ॥३१७८॥

विद्याकलाचतुष्कं च विज्ञेयं चान्तरात्मनि ।
विद्या संतोषतावृत्तिः परब्रह्मप्रकाशता ॥३१७९॥

परमात्मकला ज्ञेया संलीना वरवर्णिनि ।
भूयः शांतिकला बोधकला व्याप्तिकला परा ॥३१८०॥

ज्ञानात्मनः कला ज्ञेया चतस्रः परमेश्वरि ।
कलाः षोडश देवेशि श्रीविद्या तत्र संस्थिता ॥३१८१॥

षोडशार्णा महाविद्या कलाषोडशरूपिणी ।
आत्मनाग्निस्वरूपेण त्रैलोक्यं रचयत्यसौ ॥३१८२॥

अंतरात्मस्वरूपं तु तस्य रूपञ्च विश्रुतिः ।
अतएव रजोरूपस्तमोरूपः परः शिवः ॥३१८३॥

परमात्मावधिर्ज्ञेया तेनात्मा च तया युत. ।
एताः कलाः वरारोहे परादेहे विभांति च ॥३१८४॥

तत्पदार्थं तु जानीहि मुखमस्या वरानने ।
त्वं पदार्थोऽसि वाच्यार्थः कुचयुग्मं क्रमेण हि ॥३१८५॥

योगेन परमेशानि नादब्रह्ममयो भवेत् ।
नादोद्भूतं वरारोहे विश्वयोनिर्न संशयः ॥३१८६॥

तत्र शक्तिं च संपूज्य स्वात्मलिंगे शिवं यजेत् ।
परस्परप्रभावेण ब्रह्मानन्दः शिवो भवेत् ॥३१८७॥

तद्रस मनसा देवि वहन् नासागतं स्मरेत् ।
अथामृतेन संयोज्य तेन श्रीचक्रमर्चयेत् ॥३१८८॥

ब्रह्मानंदमयं ज्ञानं कथयामि वरानने ।
न ब्राह्मणोऽब्राह्मणश्च क्षत्रियोऽक्षत्रियस्तथा ॥३१८९॥

वैश्योऽवैश्यस्तथा नैव शूद्रोऽशूद्रो महेश्वरि ।
चांडालो नैव चांडालः पुक्कसो नैव पुक्कसः ॥३१९०॥

सर्वं समं विजानीहि एवमात्मनि निश्चयात् ।
आकाशात् पतितं तोयं निम्नमार्गेण गच्छति ॥३१९१॥

ग्राममध्यगतं सर्वं विष्ठामूत्रादिपूरितम् ।
गंगामृते तदेव स्यात् कालुष्यं तत्र न क्वचित् ॥३१९२॥

तथा संविन्मये ज्ञाने समत्वेनैव वर्तते ।
अतएव महेशानि मंत्री सर्वमयो भवेत् ॥३१९३॥

इति ज्ञानदूती ।

अथ वीरपुरश्चर्या कथयामि महेश्वरि ।
पुरश्चरणकाले तु परयोषां प्रपूजयेत् ॥३१९४॥

दीक्षितां वस्त्रभूषाद्यं भोज्यैः पायससंभवैः ।
आरंभकाले नियतं भोजयेत् तां प्रपूज्य च ॥३१९५॥

नानाविधं पिष्टकं च नानारससमन्वितम् ।
दुग्धं दधि घृतं भक्तं नवनीतं सशर्करम् ॥३१९६॥

उपलाखण्डचूर्णं च नानाविधरसान्वितम् ।
नारिकेलं कपित्थं च नागरंगं सुदर्शनम् ॥३१९७॥

लिपाकं बीजपूरं च दाडिमीफलमुत्तमम् ।
नानारण्यफलं चैव नानागंधविलेपनम् ॥३१९८॥

चदनं मृगनाभिं च श्रीखंडं नवपल्लवम् ।
टंकणं लोध्रकं चैव जलजं वनजं तथा ॥३१९९॥

नानाशैलसमुद्भूतं नानालंकारभूषणम् ।
शून्यगेहे समानीय चार्घोदकविशोधितम् ॥३२००॥

अमृतीकृत्य तत् सर्वं शक्तिं स्वाभिमुखं नयेत् ।
ब्राह्मणी क्षत्रिया वैश्या शूद्री च कुलभूषणा ॥३२०१॥

वेश्या नापितकन्या च रजकी नटिनी तथा ।
विशेषवैदग्ध्ययुताः सर्वा एव कुलांगनाः ॥३२०२॥

अष्टकन्यारूपभेदं विलोक्य हर्षसंयुतः ।
ब्राह्म्याद्यष्टकशक्तीनां नामभिः कृतसंज्ञकाः ॥३२०३॥

आसनं प्रथमं दत्वा स्वागतं च पुनः पुनः ।
अर्घ्यं पाद्यमाचमनीयं मधुपर्कं जलं ततः ॥३२०४॥

स्नापयेद् गंधपुष्पादि केशसंस्कारमेव च ।
धूपयित्वा ततः केशान् कौशेयं च निवेदयेत् ॥३२०५॥
ततः स्थानान्तरे पीठमास्तीर्य पादुकाद्वयम् ।
दत्वा तत्र समासीनां नानालंकारभूषणैः ॥३२०६॥
भूषयित्वानुलेपं च गंधमाल्यं निवेदयेत् ।
तां तां शक्ति समावाह्य मूर्ध्नि तासां समर्चयेत् ॥३२०७॥
भोज्यं मंडलमध्ये च स्वर्णपात्रे सुशोभने ।
चर्व्यं चोष्यं च लेह्यं च पेयं भक्ष्यं निवेदयेत् ॥३२०८॥
अदीक्षिता भवेद् या तु मायाबीजं तदादिशेत् ।
तासां सव्येषु कर्णेषु ततः स्तोत्रं समाचरेत् ॥३२०९॥
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।
कृपया हर मे विघ्नं मंत्रसिद्धि प्रयच्छ मे ॥३२१०॥
माहेशि वरदे देवि परमानन्दरूपिणि ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे॥३२११॥
कौमारि सर्वविघ्नेशि कुमारक्रीडने वरे ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१२॥
विष्णुरूपधरे देवि विनतासुतवाहिनि ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१३॥
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१४॥
शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१५॥
चामुंडे मुंडमालासृक्चर्चिते विघ्ननाशिनि ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१६॥
महालक्ष्मि महोत्साहे क्षोभसंतापहारिणि ।
कृपया हर मे विघ्नं मन्त्रसिद्धि प्रयच्छ मे ॥३२१७॥

मितिमात्रमये देवि मितिमात्रवहिष्कृते ।
एके वहुतरे देवि विश्वरूपे नमोऽस्तु ते ॥३२१८॥

एतत् स्तोत्रं पठेद् यस्तु मंत्रारंभेषु संयतः ।
विदग्धां वा समालोक्य तस्य विघ्नं न जायते ॥३२१९॥

कुलीनस्य द्वारदेवाः कथितास्तव सुव्रत ।
दीक्षाकाले नित्यपूजासमये नार्चयेद् यदि ॥३२२०॥

तस्य पूजाफलं भद्र नीयते यक्षराक्षसैः ।
यदि क्रीडापरास्तास्तु भोजने तद् गृहाद् बहिः ॥३२२१॥

स्थितस्तावत् पठेत् स्तोत्रं यावत् तृप्तिः प्रजायते ।
आचम्य मुखवासादि तांबूलं च निवेदयेत् ॥३२२२॥

ततो दद्यात् पुनर्माल्यं गंधचंदनपंकिलम् ।
नमस्कृत्य वरं प्रार्थ्य विसृज्य च सुखी भवेत् ॥३२२३॥

अन्या यदि न चागच्छेन्निजकन्या निजानुजा ।
अग्रजा मातुलानी वा माता वा तत् सपत्निका ॥३२२४॥

पूर्वाभावे परा योज्या मदंशा योषितो यतः ।
सर्वाभावे चैकतरा पूजनीया प्रयत्नतः ॥३२२५॥

एका च युवती तत्र पूजिता चावलोकिता ।
सर्वा एव परादेव्यः पूजिताः कुलभैरव ॥३२२६॥

आदावन्ते च मध्ये च लक्षपूर्त्तौ विशेषतः ।
न पूजयति चेत् कान्तां तदा विघ्नैं विलुप्यते ॥३२२७॥

पूर्वार्जितं फलं नास्ति का कथा परजन्मनि ।
तस्मात् सर्वप्रयत्नेन पूजयेत् कुलसुंदरीम् ॥३२२८॥

इति श्रीमदागमरहस्ये सत्संग्रहे दूतीयजनं नाम त्रयोदश पटल. ॥१३॥ आदितश्चैकचत्वारिंशत् ॥४१॥

---

# अथ चतुर्दशः पटलः ।

अथ वीरसाधनम्—

वीरचर्यापरो वीरो वीरसाधनमाचरेत् ।
वीरचर्यापरं वीरं दृष्ट्वा देवी प्रसीदति ॥३२२९॥

कादिहादिक्रमे चैव सर्वदा साधनं चरेत् ।
श्रीविद्यायां महेशानि वीरसाधनमाचरेत् ॥३२३०॥

काली तारा सुंदरी च ह्यहोरात्रेण सिद्धिदा ।
सुंदर्यां नीलगंधर्वौ कर्तव्यौ सिद्धिमिच्छता ॥३२३१॥

महादिव्यक्रमेणैव महावीरक्रमेण च ।
महानीलक्रमेणैव कादिहादिकहात्मिका ॥३२३२॥

सिद्ध्यत्येव महेशानि श्री ह्री धू च पशुक्रमात् ।
अन्या दिव्यक्रमेणैव एता अपि महेश्वरि ॥३२३३॥

स्वयंभूपुष्पक्रमतः कालिका सिद्धिदा भवेत् ।
स्वजातपुष्पक्रमतः साधना भैरवीमनौ ॥३२३४॥

स्वयंभूक्रमयोगेन किं न सिध्यति भूतले ।
या काली सैव तारा स्यात् या तारा सैव कालिका ॥३२३५॥

या काली सैव छिन्ना स्यात् या छिन्ना सैव तारिणी ।
या सुन्दरी सैव काली सर्वसिद्धिप्रदा मता ॥३२३६॥

चतसृणां न भेदोऽस्ति भेदभाक् नरकं व्रजेत् ।
माला पात्रासनं चैव चतसृणां शुभं मतम् ॥३२३७॥

मंत्रे ध्याने विशेषोऽस्ति तथा नाम्नि विशेषता ।
प्रयोगादौ विशेषोऽस्ति सुन्दर्यामेव पार्वति ॥३२३८॥

तिसृणां न च भेदोऽस्ति त्रिशक्तिः कीर्तिता यतः ।
अथासनानि वक्ष्यामि सर्वकार्यार्थसिद्धये ॥३२३९॥

मृद्वासनसमारूढः कोमले चूडके तथा ।
योनित्वग्विष्टरमपि अस्थिभूम्यासनं तथा ॥३२४०॥

कुचासनं तथा देवि तथैव सुरतासनम् ।
मुण्डासनं तथा देवि पञ्चमुंडासनं तथा ॥३२४१॥

त्रिमुण्डमेकमुण्डं वा आसनार्थं प्रकीर्तितम् ।
चिताऽपि आसने शस्ता श्मशानं सर्वथोत्तमम् ॥३२४२॥

अचूडकं तथा प्रोक्तं तथैव च शवासनम् ।
मृतासनं तथा प्रोक्तं महाशवमथासनम् ॥३२४३॥

वीरासनं महेशानि महावीरासनं तथा ।
योनिपुष्पासनं देवि कीर्तितान्यासनानि च ॥३२४४॥

तत्रादौ संप्रवक्ष्यामि मुण्डानां लक्षणं शुभम् ।
यस्य साधनमात्रेण साक्षात् शिवमयो भवेत् ॥३२४५॥

ब्रह्मक्षत्रियविट्शूद्राश्चतुर्धा चास्थिजातयः ।
श्वेता रक्ता तथा पीता कृष्णा वै तुर्यका मता ॥३२४६॥

एतन्मुण्डरहस्यं ते मया प्रोक्तं महेश्वरि ।
सद्यः कृत्तं त्रिरात्रस्थं सप्तरात्रस्थगं तथा ॥३२४७॥

त्रिसप्तरात्रमध्यस्थं तूत्तमादिक्रमात् शृणु ।
उत्तमं मध्यमं चैव ह्यधमं ह्यधमाधमम् ॥३२४८॥

सद्यः कृत्तं तु यन्मुण्डमुत्तमं परिकीर्तितम् ।
त्रिरात्रमध्यगं मुण्डं मध्यमं परिकीर्तितम् ॥३२४९॥

षड्रात्रान्तरगं मुण्डमधमं परिकीर्तितम् ।
त्रिसप्तरात्रमध्यस्थं कीर्तितं ह्यधमाधमम् ॥३२५०॥

सद्यः कृत्तं तु यन्मुण्डं सर्वकार्ये प्रकीर्तितम् ।
त्रिरात्रमध्यगं मुण्डं मालायंत्रे प्रकीर्तितम् ॥३२५१॥

षड्रात्रमध्यगं मुण्डं पात्रकार्ये विनिर्दिशेत् ।
त्रिसप्तरात्रमध्यस्थं मालायंत्रादिके मतम् ॥
षड्मासमध्यगं मुंडं सामान्यं तदुदीरितम् ॥३२५२॥

अन्यच्च कालिकापरिशिष्टे—

त्रिरात्रमध्यगं मुण्डं मालार्थं परिकीर्तितम् ।
षड्रात्रान्तरगं मुण्डं सामान्यं तदुदीरितम् ॥३२५३॥

सद्यः कृत्तं तु यन्मुंडं मालायंत्रे प्रशस्यते ।
पात्रार्थसाधने शस्तं ह्यभावात् सप्तरात्रजम् ॥३२५४॥

सद्यः कृत्तं तु यन्मुण्डं साधनार्थं प्रकीर्तितम् ।
उत्तमं मुण्डमादाय हस्तमात्रं खनेद् बुधः ॥३२५५॥

कुलवृक्षस्य मूले वा श्मशाने वा चतुष्पथे ।
निर्जने शून्यगेहे वा तस्योपरि जपं चरेत् ॥३२५६॥

वलिं दत्वा प्रयत्नेन दिक्पालेभ्यो यथाविधि ।
दिग्बंधभूतशुद्धयादीन् कृत्वा वै जपमाचरेत् ॥३२५७॥

यावत् संख्यं जपेन् मंत्रं तद् दशांशेन होमयेत् ।
सिद्धं मुण्डं पुरा कृत्वा मालादीन् कारयेत् प्रिये ॥३२५८॥

स्वेच्छामृतं द्विवर्षं च स्त्रियं वृद्धं द्विजं तथा ।
अन्नाभावे मृतं कुष्ठं सप्तरात्रोर्ध्वगं तथा ॥३२५९॥

एवमष्टशवं त्यक्त्वा वीरसाधनमाचरेत् ।
वीरासनमिदं प्रोक्तं देवीतुष्टिकरं परम् ॥३२६०॥

सप्तरात्रोत्तरं प्राप्तं चांतरिक्षे स्थितं शवम् ।
शूले निपातितं वापि पात्रार्थे शस्यते प्रिये ॥३२६१॥

अंतरिक्षे स्थितं देवि षण्मासोत्तरगं तथा ।
मालाकार्ये प्रशस्तं च त्वधस्थं सप्तरात्रजम् ॥३२६२॥

शनिभौमदिने वापि शरीरे मृतसंभवे ।
चतुर्दश्यां पौर्णमास्याममायां दीपकोत्सवे ॥३२६३॥

संक्रांत्यामष्टमीयुक्ते तथा दुर्गोत्सवे प्रिये ।
एवं वीरदिने देवि तथा वीररणागमे ॥३२६४॥

जातं मुंडं शुभं शस्तमथ शूलादिके स्थितम् ।
खड्गेन हननं कृत्वा गृहीत्वा जपमाचरेत् ॥३२६५॥

विशेषस्तु सिद्धेश्वरीमते—

अथातः संप्रवक्ष्यामि वीरसिद्धिकरं परम् ।
यस्य विज्ञानमात्रेण महाकालसमो भवेत् ॥३२६६॥

पादुका खड्गवेतालधातुवादश्च यक्षिणी: ।
गुटिकाञ्जनसिद्धिश्च गुप्तिश्च तिलकःशिवे ॥३२६७॥

सर्वं सभवति क्षिप्रं नान्यथा शांकरं वचः ।
कालिका तारिणी छिन्ना त्रिशक्तिरिति कीर्तिता ॥३२६८॥

त्रिशक्तिविषये देवि साधनेयं प्रकीर्तिता ।
मुंडकोपासनं नाम सर्वसिद्धिप्रदायकम् ॥३२६९॥

रणवीरं महावीरं तथा पाशगलानपि ।
शूलप्रोतान् यष्टिविद्धान् षट्त्रिंशदस्त्रविद्धकान् ॥३२७०॥

सर्पादिजीवदष्टान् वै गजव्याघ्रविदारितान् ।
अपमृत्युमृतान् देवि शवान्याहृत्य पार्वति ॥३२७१॥

महावीरैं महामुंडै दुर्गं कृत्वा प्रयत्नतः ।
रणवीरं समारभ्य महावीरांतगं शिवे ॥३२७२॥

आसनार्थं प्रकर्तव्यं परितो मुंडदुर्गकम् ।
दिक्नंदाष्टाद्रिरसकैः सहस्रैः पंचभिश्च वा ।
अभावे त्रिसहस्रेण मुण्डदुर्गं समाचरेत् ॥३२७३॥

तारा सारूप्यचक्रं तु स्वाग्रे संलिख्य पार्वति ।
पात्रार्थं च तथा स्वार्थं देवार्थमपि पार्वति ॥३२७४॥

स्थानं त्यक्त्वा प्रयत्नेन साधयेद् दुर्गसाधनम् ।
दुर्गेऽरण्ये नदीतीरे तडागे शून्यवेश्मनि ।
रणे श्मशाने देवेशि त्रिपथे वा चतुष्पथे ॥३२७५॥

कुलवृक्षतले चैव देवी शिवगृहेऽथवा ।
एकलिंगे प्रयत्नेन मुण्डदुर्गं प्रसाधयेत् ॥३२७६॥

एकस्मिन् साधिते देवि त्रैलोक्यं साधितं भवेत् ।
वीरसाधनसामग्रीं पुरतः स्थाप्य पार्वति ॥३२७७॥

वीरवेषो दयायुक्तः खादिरान् दशकीलकान् ।
अन्तर्बधं बहिर्बंधं कृत्वा यत्नेन पार्वति ॥३२७८॥

वीरसाधनवत् कर्म सर्वं कृत्वा महेश्वरि ।
यावदग्रे समायांति मुण्डानि परमेश्वरि ॥३२७९॥

तावदिष्टाभवंत्येव दशविद्याक्रमेण च ।
काली तारा तथा छिन्ना सुन्दरी वगलामुखी ॥३२८०॥

तुष्टा पंच विशेषेण भविष्यंति क्षणेन च ।
यो यो वलिर्याचते तैः स स देयः प्रयत्नतः ॥३२८१॥

वरो ग्राह्यः प्रयत्नेन वीरचर्यापरायणः ।
वीरजापी वीरपात्री वीरमालासनी प्रिये ॥३२८२॥

मुण्डदुर्गे नरः स्थित्वा क्षणात् त्रैलोक्यसिद्धिभाक् ।
भीतिं च तृणवत् कृत्वा महावीरो दिगंबरः ॥३२८३॥

शिवरूपो नरो भूयात् नात्र कार्या विचारणा ।
घटीपंचकयोगेन वीरः शिवसमो भवेत् ॥३२८४॥

सर्वेष्टास्तस्य सिध्यन्ति महाकालस्वरूपिणः ।
गोपनीया कलौ देवि साधकेन हितेच्छया ॥३२८५॥

कौलसर्वस्वेऽपि—

त्रिमुण्डं पञ्चमुण्डं वा वसुरंध्रदिशां क्रमात् ।
रुद्रमुण्डासनं देवि विंशन्मुण्डासनं तथा ॥३२८६॥

शतमुण्डासनं वापि यथालाभं च कारयेत् ।
वरासनानि देवेशि कथ्यन्ते सुमुखी भव ॥३२८७॥

वरासनप्रयोगो हि सर्वत्र दुर्लभः स्मृतः ।
स्तोत्रपाठश्च कवचं नामसाहस्रकं तथा ॥३२८८॥

पूजाजपस्तथा देवि चिरयोगे प्रकीर्तितः ।
यदैवं कार्यमुत्पन्नं यत्र कुत्रापि पार्वति ॥३२८९॥

क्व पूजास्तोत्रपाठादि होमान्तमथवा क्व च ।
यत्र यल्लभ्यते देवि तत्र तच्च समाचरेत् ॥३२९०॥

यथालाभेन कर्तव्यं प्राप्ते काले च साधकैः ।
वरप्रयोगे देवेशि द्विधा चासनसंस्थितिः ॥३२९१॥

देहासनानि देवेशि परिभाषासनानि च ।
भद्राद्यानि महेशानि देहजानि भवंति वै ॥३२९२॥

व्याघ्रमुण्डकंबलाश्वमेषजान्यपि पार्वति ।
गजोष्ट्रासनरूपाणि कुशजानि यथाक्रमात् ॥३२९३॥

परिभाषासनान्येवं कथितानि मया तव ।
प्रत्येकं द्विविधो भेदस्त्वासनानां महेश्वरि ॥३२९४॥

निर्जीवानि सजीवानि सर्वसिद्धिकराणि च ।
सजीवानामभावे नु निर्जीवानि प्रकल्पयेत् ॥३२९५॥

अश्वासनं गजश्चैव पल्लकी मानुषस्तथा ।
महिषोष्ट्रवृषश्चैव भल्लूको वानरस्तथा ॥३२९६॥

व्याघ्रश्च जंबुको देवि मेषाजौ परमेश्वरि ।
उष्ट्रश्च मृगभेदश्च कुशमृत्प्रकृतिश्च वा ॥३२९७॥

कुक्कुरः कुक्कुटो देवि मयूरः शरभस्तथा ।
गवयः शूकरश्चैव शरभः शवरस्तथा ॥३२९८॥

तरणिश्च रथश्चैव शकटश्च सुखासनम् ।
दण्डिका दोलिकाचक्रं चक्रदोलागृहाभिधा ॥३२९९॥

पादासनमथारोहो नारिकेलासनं तथा ।
पूगो मधूकश्चाम्रश्च वटोऽश्वत्थश्च तालकः ॥३३००॥

खर्जूरः पिंगलः प्लक्षः शमी जम्बू तथैव च ॥
गजाश्वासनकं देवि तथा नररथः शिवे ॥३३०१॥

वृषभाख्यो हयाख्यश्च महिषाख्योऽपि पार्वति ।
नरयानं राजयानं छन्नयानं च पार्वति ॥३३०२॥

वरासनानि देवेशि कथितानि मया तव ।
अश्वाः पञ्चविधाः प्रोक्ताः गतयोऽष्टादश स्मृताः ॥३३०३॥

वाल्हीकाश्चैव कांबोजाः कोंकणराकसंभवाः ।
पञ्चमाः पर्वतोत्थाश्च वर्णानेषां शृणु प्रिये ॥३३०४॥

सर्वेऽपि सूर्यरूपाः स्युः वर्णभेदात् ग्रहत्वता ।
सूर्यः सोमस्तथा भौमो बुधश्च गुरुरेव च ॥३३०५॥

शुक्रः शनिस्तथा राहुः केतुश्च नवमः स्मृतः ।
नववर्णक्रमेणैव पञ्चवर्णक्रमेण वा ॥३३०६॥

फलमेषां महेशानि कथ्यते शृणु साम्प्रतम् ।
सूर्यवर्णं समारुह्य विंशत्साहस्रकं जपेत् ॥३३०७॥

शत्रुमध्ये च विजयी जायते नात्र संशयः ।
सोमवर्णं समारुह्य दिक्सहस्रं जपेत् शिवे ॥३३०८॥

कीर्तिलक्ष्मीपतिर्भूयात् नात्र कार्या विचारणा ।
भौमवर्णाश्वमारुह्य त्रिसहस्रं मनुं जपेत् ।
दरिद्रोऽपि धनाढ्यः स्यात् नात्र कार्या विचारणा ॥३३०९॥

बुधवर्णं समारुह्य त्रिंशत्साहस्रकं जपेत् ।
रोगी रोगात् प्रमुच्येत दरिद्रो धनवान् भवेत् ॥३३१०॥

गुरुवर्णाश्वमारुह्य नवसाहस्रकं जपेत् ।
नवऋद्धीश्वरो भूयात् नात्र कार्या विचारणा ॥३३११॥

भृगुवर्णाश्वमारुह्य लक्षसंख्यं जपं चरेत् ।
लभते वांछितां सिद्धिं देवता वरदा भवेत् ॥३३१२॥

शनिवर्णाश्वमास्थाय त्रिसहस्रं जपेत् सदा ।
सर्वबाधाविनिर्मुक्तो धनवान् जायते शिवे ॥३३१३॥

राहुवर्णं समास्थाय सहस्राणां तु सप्ततिम् ।
प्रजपेन् मानवो यस्तु स च लक्ष्मीपति र्भवेत् ॥३३१४॥

केतुवर्णं समारुह्य पंचविंशत्सहस्रकम् ।
प्रजपेन् मानवो यस्तु परराज्यजयी भवेत् ॥३३१५॥

वांछासनानि देवेशि भवंत्येतानि निश्चितम् ।
वाल्हीके मंडलात् सिद्धः कांबोजे पक्षमात्रतः ॥३३१६॥

कोंकणे च दशाहेन चैराके द्विगुणात् तथा ।
फलं तु पार्वतीयानां मासाद् भवति निश्चितम् ॥३३१७॥

गजासनं प्रवक्ष्यामि तत् तद् भेदेन पार्वति ।
भद्रो मन्द्रो मृगो मिश्रश्चतुर्धा जायते गजः ॥३३१८॥

भद्रासनं समासाद्य लक्षार्धं प्रजपेन् नरः ।
अपि देवीं वशीकृत्य त्रैलोक्यविजयी भवेत् ॥३३१९॥

अन्वर्थवेदी शूरश्च कृपावान् न च कर्कशः ।
मधुपिंगलनेत्रश्च शुभ्रदन्तः पुरोच्छ्रितः ॥३३२०॥

विंशद्भिश्च नखैर्युक्तो अष्टादशभिरेव वा ।
विद्युद्दवाग्निसिंहेभ्यो न बिभेत्यंकुशादपि ॥३३२१॥

कल्याणमेधा तेजस्वी स भद्रः परिकीर्तितः ।
मंद्रासने नरः स्थित्वा त्रिसहस्रं जपं चरेत् ॥३३२२॥

मासमात्रप्रयोगेण वांछासिद्धिमवाप्नुयात् ।
कूर्मसंस्थानगमनो मंदो मंदगतिक्रमः ॥३३२३॥

संमील्य लोचने नित्यं निद्रांध इव गच्छति ।
धीरोऽनुरक्तो हस्तिन्यां जितवेगो जितश्रमः ॥३३२४॥

निर्ममो मंदबुद्धिश्च धृतिमान् मंद उच्यते ।
मृगासने नरः स्थित्वा सहस्रं प्रत्यहं जपेत् ॥३३२५॥

भैरवादीन् वशीकुर्यान् नात्र कार्या विचारणा ।
तनुपात् कर्णयुक् स्तब्धस्तथा रोमश्च मेहनः ॥३३२६॥

दीर्घजिह्वश्च वृषणो दीर्घगात्रोऽवशस्तथा ।
रूपादिभयशंकी च वनचारी तनूदरः ॥३३२७॥

ह्रस्वश्रवणलांगूलो दीर्घक्रमणविक्रमः ।
पुनः पुनश्च निनदं कृत्वा धावति वै मृगः ॥३३२८॥

मिश्रासने नरः स्थित्वा नंदसाहस्रकं जपेत् ।
एवं षण्मासयोगेन किं तद् यन्न करे स्थितम् ॥३३२९॥

वह्वाशी वह्वलीकश्च दंडपातेषु चाक्षमः ।
गच्छेत् प्रकृष्टवेगश्च भारं प्राप्यावसीदति ॥३३३०॥

कृच्छ्राच्चाप्यायते नागः क्षिप्रं च परिहीयते ।
कट्वम्ललवणैश्चैव रूक्षैश्चातुरतां व्रजेत् ॥३३३१॥

नित्यं च सांत्वयेदेनं न चैनमपि तापयेत् ।
सर्वेषां लक्षणैः कैश्चिद् युक्तो मिश्रो भवेद् गजः ॥३३३२॥

पल्लकीं तु समारुह्य सर्वकालं जपेत् मनुम् ।
वांछासिद्धिमवाप्येह भूपालो विजयी भवेत् ॥४३३३॥

पल्लकीं तु समासाद्य त्रिसंध्यं प्रजपेत् शिवे ।
अपि दासकुले जातः सोऽपि राज्यमवाप्नुयात् ॥३३३४॥

मानुषासनमासाद्य कालीमंत्रं जपेत्तु यः ।
नरनाथो भवेद् देवि नात्र कार्या विचारणा ॥३३३५॥

महिषासनमासाद्य सहस्राणां तु सप्ततिम् ।
प्रजपेत् परमेशानि शत्रुसंहारको भवेत् ॥३३३६॥

वृषभासनमासाद्य दिक्सहस्रं जपेत् शिवे ।
सर्वसिद्धियुतो भूत्वा शिव एव न संशयः ॥३३३७॥

भल्लूकासनमासाद्य भैरवं प्रत्यहं जपेत् ।
वेतालसिद्धिमासाद्य शककर्ता नरो भवेत् ॥३३३८॥

व्याघ्रासनं समाश्रित्य सर्वकालं जपेत् शिवे ।
देवीतुल्यो नरो भूयान् नात्र कार्या विचारणा ॥३३३९॥
शिवासनं समाश्रित्य कालीं तारां जपेत् सदा ।
सम्राड् भोक्ता नरो भूयान् नात्र कार्या विचारणा ३३४०॥
शिवापरिचयं कृत्वा शिवां पूज्य प्रयत्नतः ।
जपेत् तत्र महेशानि प्रोक्तमेतत् शिवासनम् ॥३३४१॥
एषामारोहणाभावात् योग्यतारोहणेन हि ।
तेषां संगे समूहे च तैः समं भोजनं चरेत् ॥३३४२॥
तदभावे महेशानि त्वङ्निःसारणयोग्यता ।
वर्तते तन्महेशानि कुलाचारक्रमेण च ॥३३४३॥
सर्वं विज्ञाय यत्नेन हये वा शकटे रथे ।
पल्लक्यां सुखयाने वा गजे वान्यासनेऽपि वा ॥३६४४॥
शोधनं व्याघ्रवत् कार्यं प्रकृतं शृणु कथ्यते ।
मेषासनं समारुह्य दिवारात्रं जपेन् मनुम् ॥३३४५॥
षण्मासाभ्यासयोगेन शाकिनी वरदा भवेत् ।
अजासने नरः स्थित्वा निशि जप्याद् दिने दिने ॥३३४६॥
मासपञ्चकयोगेन पञ्चकामसमो भवेत् ।
उष्ट्रासनं समारुह्य ताम्बूलपूरिताननः ॥३३४७॥
मन्त्रमात्रं जपेद् देवि मासमात्रं निरंतरम् ।
दुष्टशत्रुविनाशश्च भवत्येव न संशयः ॥३३४८॥
मृगासने नरः स्थित्वा सर्वकालं जपेत् शिवे ।
राजराजसमो भूयाद् वायुतुल्यपराक्रमः ॥३३४९॥
एतेषां तु कुशेनैव प्रकृतिं कारयेत् प्रिये ।
तत्र स्थित्वा जपं कुर्यादेतदेव फलं लभेत् ॥३३५०॥
मृत्तिकाप्रकृतिं कृत्वा प्राणसंस्थापनं चरेत् ।
तत्र स्थित्वा जपेद् देवि फलमेतद् भवेद् ध्रुवम् ॥३३५१॥

कुक्कुरासनमासाद्य सर्वकालं जपेन् मनुम् ।
वेतालः किंकरो भूयाद् भैरवः सुप्रसीदति ॥३३५२॥

कुक्कुरासनयोगेन किं तद् यन्न करे स्थितम् ।
कुक्कुटासनमारुह्य जपेदिष्टमनुं शिवे ॥३३५३॥

सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।
मयूरासनमासाद्य मासमात्रं जपेन् मनुम् ॥३३५४॥

कार्तिकेयप्रसादेन सर्वाः सिध्यन्ति सिद्धयः ।
शरभासनमारुह्य ह्यहोरात्रं जपेन् मनुम् ॥३३५५॥

सर्वसिद्धीश्वरो भूयाद् यदि चेन् न पलायते ।
गवयासनमासाद्य सर्वदुःखान् विनाशयेत् ॥३३५६॥

शूकरासनमारुह्य त्रिकालं प्रजपेन् मनुम् ।
सर्वपापविनिर्मुक्तो मानवो भवति ध्रुवम् ॥३३५७॥

शंवरासनमासाद्य मंत्रमष्टसहस्रकम् ।
जप्त्वा गंधर्वसाहाय्यं प्राप्नोत्येव न संशयः ॥३३५८॥

तरणिं तु समारुह्य सर्वकालं जपेत् शिवे ।
महाविद्येश्वरो भूयान् नात्र कार्या विचारणा ॥३३५९॥

महानौकां समारुह्य कामिनीसुरत चरेत् ।
रतासने मनुं जप्त्वा त्रिकालज्ञानवान् भवेत् ॥३३६०॥

रथमारुह्य प्रजपेल्लक्षसंख्यं मनुं शिवे ।
जप्त्वा राज्यमवाप्नोति सत्यमेव न संशयः ॥३३६१॥

शकटासनमारुह्य सर्वकालं जपेत् शिवे ।
मासमात्रप्रयोगेण यमिच्छेत् तं वशं नयेत् ॥३३६२॥

सुखासने नरः स्थित्वा चतुर्मासं निरंतरम् ।
जपं कुर्यात् महेशानि मानसेप्सितकामुकः ॥३३६३॥

सुखासने रतं कृत्वा भैरवीं प्रजपेद् यदि ।
सर्वशत्रून् विनिर्जित्य सर्वत्र जयमाप्नुयात् ॥३३६४॥

दोलासनं समारुह्य त्रिसंध्यं च सहस्रकम् ।
देवीं ध्यायन् जपेद् यस्तु स्वेष्टसिद्धिं लभेच्च सः ॥३३६५॥

चक्रासने नरः स्थित्वा त्रिसहस्रं जपेन् मनुम् ।
त्रैलोक्यभ्रामरीशक्तिस्तस्य हस्ते व्यवस्थिता ॥३३६६॥

कुररासनमासाद्य निशि जप्याद् दिने दिने ।
डाकिनीमेलनं भूयान् नात्र कार्या विचारणा ॥३३६७॥

कच्छपासनमासाद्य सर्वदा प्रजपेन् मनुम् ।
सर्वबाधाविनिर्मुक्तः सर्वसिद्धीश्वरो भवेत् ॥३३६८॥

खड्गासनं समारुह्य यस्त्रिसंध्यं जपेन् मनुम् ।
सर्वसिद्धिसमायुक्तो गुटिकां लभते ध्रुवम् ।
गजासनं समारुह्य जपेत् सप्तशतीस्तवम् ॥३३६९॥

सर्वबाधाविनिर्मुक्तः पक्षावर्तनयोगतः ।
एतेषामस्थिसम्भूतां मालां कृत्वा जपं चरेत् ॥३३७०॥

एतेषामासने स्थित्वा सिद्धिभाग् भवति ध्रुवम् ।
संख्या सामान्यतः प्रोक्ता सर्वकर्मप्रसाधने ॥३३७१॥

जपसंकल्पपूर्तिस्तु भवेन् मा भवति प्रिये ।
तथाप्यासनयोगेन सर्वाः सिध्यन्ति सिद्धयः ॥३३७२॥

जीवचक्रे यथा सिद्धिस्तथा जीवासने प्रिये ।
प्रवक्ष्येऽद्य महेशानि संशुद्धिर्व्याघ्रचर्मणः ॥३३७३॥

सलोमं सुन्दरं सांगं समादायाजिनं प्रिये ।
क्रोधबीजेन संस्पृष्ट्वा जपेन् मूलं च सप्तधा ॥३३७४॥

षडंगं न्यासमाचर्य तस्यांगे मायया प्रिये ।
पुच्छे पादौ तथा पाणौ शिरश्चेति षडंगकम् ॥३३७५॥

गंधपुष्पाक्षतं दद्यात् क्रोधबीजेन पार्वति ।
प्राणप्रतिष्ठामंत्रेण प्राणस्थापनमाचरेत् ॥३३७६॥

ध्यात्वा सिंहं महाभीमं संस्मितं साधकं प्रति ।
सिंहमन्त्रेण देवेशि पूजयेच्चन्दनादिभिः ॥३३७७॥

सिंहमंत्रं प्रवक्ष्यामि शृणु भैरवि सांप्रतम् ।
प्रणवं च समुद्धृत्य वज्रेति पदमुद्धरेत् ॥३३७८॥

नखदंष्ट्राय शब्दान्ते महासिंहाय तत्परम् ।
महाभीमाय च पुनर्वर्मास्त्रं वह्निवल्लभा ॥३३७९॥

सिंहमन्त्रोऽयमाख्यातो देवि द्विनखवर्णवान् ।
अनेन पूजयेच्चर्म ध्यायन् सिंहं महेश्वरि ॥३३८०॥

स्वदक्षे संमुखे वापि मुखं तस्य च कारयेत् ।
तत्र तावज्जपेद् देवि यावल्लोमक्षयं न हि ॥३३८१॥

निषिद्धस्पर्शनाद् देवि पुनः संस्कारमाचरेत् ।
व्याघ्राजिने च देवेशि सप्ताहात् सिद्धिमाप्नुयात् ॥३३८२॥

व्याघ्रासनमधिकृत्य यामले देवी प्रति शिववाक्यम्—

व्याघ्राजिनस्य माहात्म्यं वक्ष्येऽहं परमेश्वरि ।
यत्र ब्रह्मादयो देवाः समंतात् सततं स्थिताः ॥३३८३॥

दक्षपादे स्थितो ब्रह्मा वामहस्ते तथेश्वरः ।
पृष्ठे सदाशिवो ज्ञेयो मुखे च भैरवः स्वयम् ॥३३८४॥

पुच्छे गणेश्वरो ज्ञेयो भैरवाश्च तथा स्थिताः ।
जया देवी स्थिता चाग्रे पश्चिमे विजया स्थिता ॥३३८५॥

अजिता चोत्तरे देशे दक्षिणे चापराजिता ।
उमादेवी स्थिता पूर्वे दुर्गा चेशानकोणके ॥३३८६॥

उत्तरे भद्रकाली च स्वस्तिका वायुकोणके ।
स्वाहा पश्चिमदेशे तु नैर्ऋते च शुभंकरी ॥३३८७॥

श्रीश्चैव दक्षिणे देशे गौरी चाग्नेयकोणके ।
लोकधात्री स्थिताधःस्ताद् वागीशी च तथोर्ध्वके ॥३३८८॥

व्याघ्रचर्मणि देवेशि देव्यश्च परितः स्थिताः ।
व्याघ्रचर्मस्थितस्यापि साधकस्य महेश्वरि ॥३३८९॥

अधोवातादिकं चेत् स्यात् कंपते भुवनत्रयम् ।
विघ्नाश्च बहवस्तस्य रोगाश्चैव भवन्ति हि ॥३३९०॥

तस्माद् यत्नात् साधको वै सावधानो भवेत् शिवे ।
अधोवायुस्ततो वर्ज्यो व्याघ्रचर्मस्थयोगिना ॥३३९१॥

व्याघ्रचर्मस्थितो वीरो योगवान् जप तत्परः ।
स एव भैरवः साक्षात् सर्वदेवमयः प्रभुः ॥३३९२॥

यस्मिन् गेहे स्थितं चर्म व्याघ्रस्य विधिशोधितम् ।
सर्वे देवाः स्थितास्तत्र तद् गेहं तीर्थसन्निभम् ॥३३९३॥

येन साधनमात्रेण मंत्रसिद्धिः प्रजायते ।
गोपनीयो विधिरयं यत्नतः पशुसंनिधौ ॥३३९४॥

स्नेहाल्लोभाच्च यो ब्रूयाद् देवताशापमाप्नुयात् ।
अवरोहासनान्येव कथ्यन्ते शृणु सांप्रतम् ॥३३९५॥

नारिकेलं समारभ्य जंबूपर्यन्तमेव च ।
कदलीमण्डलं कृत्वा कदलीवनमेव च ।
प्रजपेद् यत्नतो यस्तु तारासिद्धिमवाप्नुयात् ॥३३९६॥

कुलवृक्षास्ततो देवि सर्वेषां फलमुच्यते ।
नारिकेले भवेद् राज्यं पूगे चैव मनोरथान् ॥३३९७॥

मधूके कामिनीप्राप्तिश्चाम्रे सर्वज्ञता मता ।
वटे त्रैकालिकज्ञानमश्वत्थे सर्वकामनाः ॥३३९८॥

तालवृक्षे जयावाप्तिः खर्जूरे राजमान्यता ।
पिप्पले सर्ववश्यत्वं प्लक्षे चाकर्षणं परम् ॥३३९९॥

राज्यलक्ष्मीः शमीवृक्षे जम्बूवृक्षे धनागमः ।
दिक्सहस्रं जपेद् देवि सर्ववृक्षे निरन्तरम् ॥३४००॥

समारुह्य लभेत् सिद्धिं नात्र कार्या विचारणा ।
श्लेष्मातककरंजाख्यबिल्वाश्वत्थकदम्बकाः ॥३४०१॥

निंबो वटोदुम्बरश्च चम्पकः केसरो दश ।
दशवृक्षान् समासाद्य प्रत्येकं दिक्सहस्रकम् ॥३४०२॥

प्रजपेद् यत्नतो देवि अणिमाद्यष्टकं तथा ।
मोक्षकामौ क्रमेणैव लभते नात्र संशयः ॥३४०३॥

कालीवृक्षाः समुद्दिष्टाश्छिन्नावृक्षान् शृणु प्रिये ।
श्लेष्मातकं विभीतं च शाखोटं खर्जूरं तथा ॥३४०४॥

पिप्पलं च वटं चैव सपुष्पां वस्तुवाशिनीम् ।
निंबाश्वत्थौ करंजं वा श्लेष्मातककदम्बकौ ॥३४०५॥

बिल्वं वटं शालतालौ शाखोटं खर्जूरं तथा ।
ताराविद्याविधौ प्रोक्ता श्रीविद्यायां शृणु प्रिये ॥३४०६॥

पूर्वं द्वादश ये ख्याता त एव श्रीविधौ स्मृताः ।
एतेषामपि देवेशि फलं तु पूर्ववद् भवेत् ॥३४०७॥

इति संक्षेपतः प्रोक्तं देवतासननिर्णयम् ।
कथ्यते देवदेवेशि यथावदवधारय ॥३४०८॥

श्रीविद्या देवदेवेशि पंचप्रेतासनस्थिता ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥३४०९॥

एते पञ्च महाप्रेताश्चतुष्कं पादगोचरम् ।
सदाशिवस्तु कशिपुः कामेशश्छादनं भवेत् ॥३४१०॥

तत्रस्था सुन्दरी देवी कालिकायां शृणु प्रिये ।
अतिकालः करालश्च विकरालः कपालधृक् ॥३४११॥

चतुष्टयं पादरूपं श्रीकालः कशिपुः स्मृतः ।
महाकालश्छादनं स्यात् तद् हृदिस्था तु कालिका ॥३४१२॥

विपरीतरता प्रोक्ता श्रीमहाकालिकांबिका ।
महाश्मशाननिलया प्रत्यालीढपदापरा ॥३४१३॥

शर्वसिंहासनगता महोग्रतारिणी मता ।
तारायां कालिकायां च छिन्नायामपि पार्वति ॥३४१४॥

मंडूकादि भवेत् पीठमाधारादिकमेव वा ।
ऋतुमत्यां तथाशक्तौ यत् किंचित् पीठमर्चयेत् ॥३४१५॥

अथासनाना कालनियमास्तत्रैव—

ऋतुवस्त्रासनं देवि सूत्रान्तं परिकीर्तितम् ।
मुण्डासनं तु भंगान्तं तथा शवाशनं शिवे ।
कुचासनं जपांतं च सुरतासनमेव च ॥३४१६॥

मृदुकोमलचूड़ादिचूर्णांतं परिकीर्तितम् ।
तथा वीरासनं देवि समानीय प्रयत्नतः ॥३४१७॥

हृन्मलं दूरतस्त्यक्त्वा हृदयं शोधयेत् पुनः ।
वस्त्राच्छन्नं भूमयं वा कृत्वा स्थित्वा जपं चरेत् ॥३४१८॥

नरचर्मासनं देवि गजचर्मासनं तथा ।
वस्त्रासनं सभंगांतं सलोमांतं च केशरी ॥३४१९॥

सच्छिद्रान्तं मृगाख्यं च तूरगाख्यं त्रोटनांतकम् ।
योनित्वगासनं देवि सलेशान्तं महेश्वरि ॥३४२०॥

योन्यासनं सजीवांतं पातान्तं सुरतासनम् ।
विपरीतासनं देवि तत्पातान्तं प्रकीर्तितम् ॥३४२१॥

जिह्वास्पर्शासनं देवि तत्तत्त्वान्तं प्रकीर्तितम् ।
तदन्ते संत्यजेद् देवि जघन्यं चोत्तरोत्तरम् ॥३४२२॥

विष्टरासनकं देवि छेदनान्तं प्रकीर्तितम् ।
व्याघ्रासनमलोमांतं केचिद् भंगान्तमूचिरे ॥३४२३॥

इति संक्षेपतः प्रोक्तं फलसंख्यां शृणु प्रिये ।
ऋतुमत्यासने देवि त्रिदिनात् त्रिगुणाकृतिः ।
ऋतुवस्त्रासनं देवि त्रिमासात् फलदायकम् ॥३४२४॥

मुण्डासनं तु षण्मासैर्दिनान्तं तु शवासनम् ।
नरचर्मासने देवि त्रिमासात् फलमुच्यते ॥३४२५॥

कुचासने द्विमासेन फलं भवति सुंदरि ।
रतासने महेशानि पक्षांते तु फलं लभेत् ॥३४२६॥

मृद्वासने तु मासेन कोमले तत्त्वसंख्यया ।
अचूडके विष्णुतत्त्वे वीरे यामत्रयेण च ॥३४२७॥

वस्त्रासने पंचवर्षैः सिंहे स्यात् पंचयामकैः ।
मृगाख्ये वेदवर्षैश्च ऊर्णाख्ये दशवर्षतः ॥३४२८॥

योनित्वगासने देवि सप्ताहेन फलं लभेत् ।
योन्यासने च पक्षान्ते सुरताख्ये दिनाष्टकैः ॥३४२९॥

विपरीते षड्दिनैश्च जिह्वास्पर्शे द्विवेदकैः ।
सप्तचुंबनके देवि सप्ताहेन फलं लभेत् ।
विष्टरे मासषट्कैश्च फलं भवति निश्चितम् ॥३४३०॥

यद्वा—

सिंहदन्तीवाजिहंसश्येनशार्दूलशारभैः ।
क्षेमंकरो सर्पशुकमंडूककूर्मरूपकैः ॥३४३१॥

एकद्वित्रिक्रमेणैव पादस्थाने निवेश्य च ।
कृत्वासनानि देवेशि मंत्रसाधनमाचरेत् ॥३४३२॥

यद्वासनानि संप्राहुरष्टधातुमयानि च ।
नानाकाष्ठमयान्याहुः सौगंध्यकाष्ठजान्यपि ॥३४३३॥

लोहे मारणसंसिद्धिस्ताम्रे शांतिरनुत्तमा ।
सीसे स्तंभनकर्म स्याद् रीत्यां द्वेषणमाचरेत् ॥३४३४॥

रौप्ये राज्यादिसंसिद्धिः स्वर्णे सर्वाप्तिरुत्तमा ।
वंगे स्त्रीमोहनं कुर्यात् पित्तले कांसठे जपः ॥३४३५॥

खादिरे शत्रुनाशार्थं चंदने सर्वसाधना ।
रक्तकाष्ठे वश्यसिद्धिः पीते स्तंभनमुत्तमम् ॥३४३६॥

कृष्णकाष्ठे मारणं स्यात् पालाशे कार्यसाधनम् ।
पैप्पले सर्वकार्याप्ति र्वटे पुत्रं लभेन् नरः ॥३४३७॥
औदुंबरे भूतरक्षा रक्ते देव्याः प्रदर्शनम् ।
वर्णवस्त्रभवं देवि तत् तद् वर्णफलं भवेत् ॥३४३८॥
हस्तमात्रं द्विहस्तं वा तावदायतमेव च ।
हस्तार्द्धार्द्धं महेशानि वितस्तिर्वा यथाक्रमम् ॥३४३९॥
सन्निवेशो यथा भूयात् तथात्रैव विधीयताम् ।
सिंहासनं राजसिद्धयै सर्वसिद्धयै गजासनम् ॥३४४०॥
हयासनं वांछिताप्त्यै हंसे सर्वार्थसाधना ।
उच्चाटनं भवेत् श्येने शार्दूले तु मनोरथाः ॥३४४१॥
शरभे देवताप्राप्तिः क्षेमं कुर्यान् महोदयः ।
सर्वशत्रुविनाशश्चेत् शुके तु पृथिवीगतिः ॥३४४२॥
मंडूके सर्ववांछाप्तिः कूर्मे धनपति र्भवेत् ।
मार्जारे कूटनाशश्च नाकुले विषनाशनम् ॥३४४३॥
समस्तविषनाशार्थे मयूरासनमीरितम् ।
चाषे चोद्भ्रान्ति धूल्यादिनाशनं दुष्टनाशनम् ॥३४४४॥
पारावते धनप्राप्तिश्चकोरे दुष्टनाशनम् ।
सारसे धातुवादः स्याद् वृषभे धनसम्पदः ॥३४४५॥
वके स्तंभनमुद्दिष्टं शशके शत्रुनाशनम् ।
पूजने च जपे होमे मार्जने तर्पणेऽपि च ।
यत् फलं कथितं देवि तत् फलं सममेव तु ॥३४४६॥
अथोच्यते महेशानि मुडाद्यासनसाधनम् ।
रहस्यातिरहस्यं च न कुत्रापि मयेरितम् ॥३४४७॥
मृद्वासनं भवेदादौ द्वितीयं स्यादचूडकम् ।
कोमलं च तृतीयं स्यात् मुण्डं प्रोक्तं चतुर्थकम् ॥३४४८॥
मृतासनं पंचमं च षष्ठं वीरासनं मतम् ।
महावीरासनं देवि सप्तमं परिकीर्तितम् ॥३४४९॥

सप्तानां च क्रमाद् देवि मालापात्रार्थमोश्वरि ।
साधनं संप्रवक्ष्यामि येन सिद्धीश्वरो भवेत् ॥३४५०॥
अर्वाक् पण्मासतो गर्भं च्युतमाहुर्मृदुं बुधाः ।
चूडोपनयनै र्हीनं मृतं वा चूडकं विदुः ॥३४५१॥
निवृत्तचूडको वालो हीनोपनयनः शिवे ।
यो मृतः पंचमे वर्षे तमेव कोमलं विदुः ॥३४५२॥
सामान्यमरणं प्राप्तं प्रोक्तं देवि मृतासनम् ।
वीररूपेण संजातं तच्च वीरासवं विदुः ॥३४५३॥
आवेशशूलपाशादि महावीरासनं मतम् ।
अखण्डांग शवं देवि सखण्डं मुण्डमुच्यते ॥३४५४॥
तन्मुण्डं यंत्रमालादिपात्रकर्मणि कीर्तितम् ।
शवमानीय देवेशि गर्भजं यदि वा शवम् ॥३४५५॥
सप्तमाष्टममासोनं चूडकं वापि कोमलम् ।
स्थानं संशोध्य यत्नेन वीरवेषो मुदान्वितः ॥३४५६॥
ततः संस्कारमाचर्य संस्थाप्य विमले स्थले ।
गंधाष्टकं समादाय प्रोक्षयेत् प्रेतमन्त्रतः ॥३४५७॥
पंचामृतैः पंचगव्यैः करणपंचसमंत्रितैः ।
मूलेन स्थापयेत् तत्र पीठचक्रे धरण्यधः ॥३४५८॥
त्रिकोणं बिंदुमायां च चतुरस्त्रत्रिकोणकम् ।
ततस्त्रिकोणबाह्ये तु पद्ममष्टदलं लिखेत् ॥३४५९॥
षोडशारं च तद् बाह्ये त्रिवृत्तं त्रिगुणान्वितम् ।
मूलदेवीं तत्र मध्ये मूलेन परिपूजयेत् ॥३४६०॥
वृत्तं त्रिगुणितं चैव मादिमाद्येन योजयेत् ।
वाङ्मायाकमलां तत्र वर्णादौ सर्वकर्मसु ॥३४६१॥
वह्ने र्दशकलास्तत्र कोणे चाष्टदले तथा ।
षोडशारे त्रिवृत्ते च कलां सोमस्य पूजयेत् ॥३४६२॥

तत्रैव स्थापयेद् वीरं मृद्राख्यं वा प्रयत्नतः ।
स्वयंत्रं विलिखेत् तत्र साधारं शक्तिपूर्वकम् ।।३४६३।।

सुधासिंधुं मणिद्वीपं चिंतामणिगृहं तथा ।
श्मशानं पारिजातं च तन्मध्ये शववेदिकाम् ।।३४६४।।

धर्म ज्ञानं च वैराग्यमैश्चर्यं तदनन्तरम् ।
अधर्मादि ततो मंत्रान् पाणिपादे च युग्मकम् ।।३४६५।।

अकारादिक्षकारान्तं मातृकान्यासमुत्तमम् ।
तत् स्थाने पूजयेन् मंत्री हृदि न्यासादि पूजयेत् ।।३४६६।।

करन्यासं ततो मंत्री कराभ्यां पूजयेत् ततः ।
अधोमुखं तु तं कृत्वा तन्मुखे मधुरं वदेत् ।।३४६७।।

हे वीरपरमानंद देवोपर्यकशंकर ।
अष्टसिद्धिं च मे देहि मम शांतिं सदा कुरु ।।३४६८।।

एतद् ब्रूहि च वीरेन्द्र वसुवर्णं मुखे क्षिपेत् ।
एला लवंग जाती च फलतांबूलसंयुतम् ।
खदिरार्द्रकं गुडं च कर्पूरं रक्ततंतुना ।।३४६९।।

मूलेन भावयेत् तत्र गुटिकां दृढमुष्टिकाम् ।
अर्केन्दुसितवाद्यालनिर्मितां दीपवर्तिकाम् ।।३४७०।।

निमंत्रयेत् ततः शाक्तः सप्तवारानुक्रमात् ।
चंदनागरुपुष्पाद्यैः मूर्ध्नि देवीं प्रपूजयेत् ।।३४७१।।

जीवन्यासं ततो मंत्री प्राणमंत्रेण विन्यसेत् ।
गुदे लिंगे तथा नाभावुदरे गुह्यदेशके ।।३४७२।।

ऊरुजानू तथा जंघा गुल्फपादतलेषु च ।
शिरः कण्ठे नासिकायां चक्षुषोः कर्णयोरपि ।।३४७३।।

शिखाकवचगंडेषु चोर्ध्वाधोष्ठकयोस्तथा ।
दन्तयोश्चैव जिह्वायां शिरः पृष्ठे च पार्श्वयोः ।।३४७४।।

हृदादिके च बाहुभ्यां पादाभ्यां च तथेश्वरि ।
सर्वांगे विन्यसेदेवं पीठन्यासमनुत्तमम् ॥३४७५॥
सूर्यस्य मंडलं तत्र तपिन्यादि कलात्मकम् ।
मृतकाय शवायात्र नमश्चान्ते पदं ततः ॥३४७६॥
स्नापयेन् मूलमंत्रेण पूरितेनाष्टवारिणा ।
सूर्यसोमात्मकं पीठमग्निरूपं प्रकल्पयेत् ॥३४७७॥
मेरुपृष्ठऋषिश्छन्दः सुतलं तदनन्तरम् ।
कूर्मो देवस्ततः पश्चाद् धर्मार्थसाधने ततः ॥३४७८॥
मोक्षेऽपि मानसश्चैव सिध्यर्थे परिकीर्तितः ।
मुद्रा कौर्मी दर्शयित्वा अस्त्रावगुंठने ततः ॥३४७९॥
शक्ति योनि मत्स्यमुद्रां धेनुमुद्रां ततः शिवे ।
प्रदर्शयेत् छोटिकां च चतुरस्रा प्रदर्शयेत् ॥३४८०॥
धृत्वा विमर्शयेन् मूलं पृथ्वी त्वयेति वै क्रमात् ।
ततो वज्रोदकेत्यादि मनुभि. कामसंख्यकैः ॥३४८१॥
प्रणवं पूर्वमुद्धृत्य सहस्रारपदं ततः ।
हुं फट् स्वाहा तदन्ते ओं रक्ष रक्ष ततो वदेत् ॥३४८२॥
महाप्रतिसरे सर्वविघ्नान् छेदय युग्मकम् ।
हुं फडन्तं समुद्धृत्य वह्निजायां समुच्चरेत् ॥३४८३॥
दिक्पालयजनं कार्यमिन्द्रादिक्रमयोगतः ।
वीरार्गलाघोरमंत्रैस्तथा पाशुपतैरपि ॥३४८४॥
महामण्डलमंत्रैर्वा दिग्बंधं तत्र कारयेत् ।
शिवाबलिं तत्र दद्याद् ग्रहणादावपि प्रिये ॥३४८५॥
आदौ मध्ये तथा चान्ते त्रिवारं तु शिवाबलिः ।
मुंडग्रहणकाले तु सर्वथा तु शिवाबलिः ॥३४८६॥
शिवां शक्तिं च वा पूज्य दिक्पालान् बलिसंयुतान् ।
पूजयेत् परमेशानि सायुधादि यथाक्रमम् ।
एवं क्रमेण वीरेन्द्रः सर्वेषां बलिमाहरेत् ॥३४८७॥

वाङ्मायां कमलां प्रोच्य देव्या ह्यमुकि एष वै ।
यज्ञः प्रवर्तते चेमं भागवलिं गृह्णयुक् ॥३४८८॥

अत्र तिष्ठ नमः प्रोच्य अस्तु ते हुं फट् स्वाहा ।
अकारादिक्षकारान्तान् विंदुयुग् मातृकाक्षरान् ॥३४८९॥

शिरसः पादपर्यन्तं वेष्टयेद् दक्षिणक्रमात् ।
सार्धत्रिवलयै र्युक्तं वेष्टयेत् साधकोत्तमः ॥३४९०॥

नानासुगंधद्रव्येण रक्तचंदनचदनैः ।
काश्मीरगुग्गुलौ चैव पीतसूत्रेण वेष्टयेत् ।
बधयेद् द्विविधै र्द्रव्यैः क्षारयुक्तहरिद्रया ॥३४९१॥

निर्द्वन्द्वो निरहंकारः शुद्धनाडीगणावृतः ।
पाखंडबुद्धिरहितः सर्वभूतहिते रतः ॥३४९२॥

सर्वावयवसंशुद्धः सर्वशास्त्रविशारदः ।
कृताभिषेको विद्याज्ञो जपपूजादितत्परः ॥३४९३॥

मृद्वासने वसेत् सो हि त्वन्यो नरकभाग् भवेत् ।
अज्ञानमोहदंभैश्च दृष्ट्वा दृष्टिं करोति यः ।
स याति नरकं घोरं पिशाचत्वमवाप्नुयात् ॥३४९४॥
प्रपतंति महामूढा व्याधित्वं स्वल्पजीवितम् ।
विशेद् वीरस्तु शास्त्रज्ञः समयाचारतत्परः ॥३४९५॥
मंत्रज्ञस्तंत्रदर्शी च यंत्रमंत्रविचक्षणः ।
निग्रहानुग्रहे शक्तश्चतुर्वर्गविनोदकः ॥३४९६॥
स सिद्धः सिद्धिदो लोके शापानुग्रहणे क्षमः ।
अशक्तः कुरुते यस्तु मृत्युस्तस्य न संशयः ॥३४९७॥
मृद्वासनमिदं प्रोक्तमचूडकविशोधनम् ।
शृणु प्राज्ञे यथान्यायं सर्वसिद्धिप्रदायकम् ॥३४९८॥
प्रोक्तमासनमादाय मकारपंचकान्वितः ।
भौमाष्टम्यां चतुर्दश्याममायां दीपकोत्सवे ॥३४९९॥

कुलर्क्षे चापि देवेशि अचूडकासनं भवेत् ।
दिग्वंधभूतशुद्धयादि कृत्वा यत्नेन पार्वति ॥३५००॥

वज्रोदके समारम्य रक्ष रक्षांतकं शिवे ।
मंत्रान् विज्ञाय यत्नेन साधयेदिष्टसाधनम् ॥३५०१॥

अन्यत् सर्वं पूर्ववत् स्यात् कोमलेऽप्येवमेव च ।
मुंडासनं प्रवक्ष्येऽहं शृणु सावहिता भव ॥३५०२॥

भौमामायां चतुर्दश्यां मंगले शनिवासरे ।
दीपोत्सवे च फाल्गुन्यां नवरात्रदिने तथा ॥३५०३॥

पूर्वकृत्यं समाप्याथ याममात्रगते निशि ।
वीरवेषो दयायुक्तो भक्तमक्तो जितेन्द्रियः ॥३५०४॥

महावलो महाबुद्धि विजेता सर्वशास्त्रवित् ।
खड्गहस्तो मुक्तकेशः सिंदूरतिलकान्वितः ॥३५०५॥

वीरसाधनसामग्रीसंयुतः साधकोत्तमः ।
शिवाबलिं प्रदत्वादौ तदन्ते मुण्डसाधनम् ॥३५०६॥

शिवारूपा स्वयं देवी तत्र विघ्नहरा ध्रुवम् ।
अन्यथा विघ्नकर्तारो देवा दैत्याश्च मानवाः ॥३५०७॥

सर्वविघ्नविनाशार्थं सिद्धयर्थं फेरवीं यजेत् ।
श्मशाने गह्वरे नद्यां शून्यगेहेऽपि साधयेत् ॥३५०८॥

श्मशाने चेन् महेशानि विधिस्तत्र श्मशानवत् ।
अन्यत्र वीरवत् कार्यं साधनं सर्वसाधनम् ॥३५०९॥

खादिरान् कीलकानष्टौ निखनेन् मंत्रमुच्चरन् ।
महामंडलमंत्रैश्च सर्वविघ्नान् विघातयेत् ॥३५१०॥

मुण्डमानीय यत्नेन पंचगव्ये विनिःक्षिपेत् ।
दुग्धेन स्नानमाचर्यं ततः संविज्जलेन च ॥३५११॥

तदन्ते सुरया स्नानं कृत्वा यत्नेन पार्वति ।
तैलं लाप्य च तन्मुंडे सिंदूरं कज्जलं तथा ॥३५१२॥

गंधपुष्पैश्च संपूज्य खनेत् हस्तार्धमानतः ।
सर्वमुण्डे विधिरयं शूलप्रोतादिके शृणु ॥३५१३॥
शूलं संपूजयेद् देवि समारोपं ततश्चरेत् ।
शूलराज महाक्रूर सर्वभूताप्रियंकर ॥३५१४॥
सिद्धि संकल्पितां देहि वज्रशूल नमोऽस्तु ते ।
दीपं प्रज्वाल्य तत्रैव खड्गेन कर्त्तयेत् स्वयम् ॥३५१५॥
वीरं संपूज्य यत्नेन तत्कालं मुण्डमाहरेत् ।
कालीखड्गसमुद्भूत सर्वसिद्धिप्रदायक ॥३५१६॥
कलिचिंतामणिस्त्वं च खड्गमुंड नमो नमः ।
पाशयुक्ते मनुरयं प्रणवं पूर्वमुद्धरेत् ।
नागपाश महासिद्ध वेताल खेचरेश्वर ॥३५१७॥
ऊर्ध्ववक्त्र महाकाय पाशवीर नमोऽस्तु ते ।
एवं संप्रार्थ्य संग्राह्यं भीतिं तत्र न कारयेत् ॥३५१८॥
साधको भयभीतश्चेत् खड्गरावणमुच्चरेत् ।
लक्षद्वयं तत्र जपेद् वीरमार्गक्रमेण च ॥३५१९॥
एवं साधितमुंडं स्यात् सिद्ध्यष्टकफलप्रदम् ।
संसाधितेन मुंडेन मालापात्रादिकं चरेत् ॥३५२०॥
पात्राणां शोधनं देवि शृणु यत्नेन सांप्रतम् ।
इन्द्रस्तदादितः सेन्दु मंत्रेणानेन मार्जयेत् ॥३५२१॥
ध्रुवं मंडलमंत्रेण भूगृहं वह्निवृत्तयुक् ।
कुर्यात् तत्राधारशक्तिकूर्मानंतान् प्रपूजयेत् ॥३५२२॥
व्योमाग्निशक्तिसहितमस्त्रमेतद् ध्रुवादिकम् ।
अनेन मनुनाधारे स्थापयेत् तत्र मंत्रवित् ॥३५२३॥
वह्निमंडलमेतस्मिन् पूजयेत् तदनंतरम् ।
क्रोधवज्रास्त्रबीजाभ्यां आधारे क्षालितं शुभम् ॥३५२४॥
महाशंखं ततो मंत्री स्थापयेत् श्रीक्रमात् ततः ।
शिवा दीर्घत्रयोपेता काली ब्रह्मारमायुता ॥३५२५॥

दीर्घः शचीपतिर्वायुर्हृदयं मन्मथांतिमम् ।
दीर्घत्रयसमोपेतं तारिणी पूर्ववत् पुनः ॥३५२६॥
शिवं दीर्घत्रयोपेतं नीलाशब्दात्तु पूर्ववत् ।
मायां स्मरांतिमं शंभुं वामकर्णेन्दुसंयुतम् ॥३५२७॥
सर्वकामः कालरात्रि र्दीर्वालापपदात् पुनः ।
सर्वाधाराय सर्वाय सर्वोद्भवाय शब्दतः ॥३५२८॥
सर्वशुद्धिमयायाथ सर्वासुरपदात् ततः ।
रुधिरारुणाय शुभ्राय प्रोच्चार्य सुरभाजनः ॥३५२९॥
आपदेवीकपालाय हृदयांतो मनुर्मतः ।
एभिश्चतुर्भि र्मनुभि र्महाशंखं प्रपूजयेत् ।
तत्र संपूजयेन् मन्त्री मंडलं तिग्मरोचिषः ॥३५३०॥
मूलेन पूरयेत् तोयं सुधाबुद्ध्या विधानवित् ।
गंधपुष्पाक्षतान् क्षिप्त्वा त्रिखंडां दर्शयेत् ततः ॥३५३१॥
पीयूषरोचिषो देवि मंडलं तत्र पूजयेत् ।
वाचं शक्ति रमे शक्ति मनुस्वरसमन्वितम् ॥३५३२॥
मूलं तृतीयं भैरव्याः क्रोधबीजं समुज्ज्वलम् ।
अनेन मनुना मंत्री भावयेदष्टशो जलम् ॥३५३३॥
शक्त्या सुधां विनिःक्षिप्य शंखयोनी प्रदर्शयेत् ।
विशेषार्घोक्तविधिना कपालं पात्रमुत्तमम् ॥३५३४॥
अनेन पात्रवर्येण साधयेदिष्टसाधनम् ।
वांछासिद्धि खेचरीं च परकायप्रवेशनम् ॥३५३५॥
मनोरथो दिव्यदृष्टिः वेतालगुटिके तथा ।
रसं रसायनं दिव्यं पादुकां यक्षिणीगणम् ॥३५३६॥
खड्गसिद्धि कुतसिद्धि पाशं व्यजनमेव च ।
मूर्तिसिद्धि भैरवाष्टमहाकापालिनीं शिवे ॥३५३७॥
कापालार्घ्येण देवेशि सर्वं सिद्ध्यति निश्चितम् ।
वीरचर्याक्रमे देवि दंतमालां च कंकणम् ॥३५३८॥

शतस्त्रीकेशसंभूतं पानपात्रं कपालजम् ।
यंत्रं कापालिकं तद्वदासनं प्रोक्तमेव च ॥३५३९॥
इत्येता वीरसंपत्ति मंत्रसाधनकर्मणि ।
शोधनं पानपात्रस्य कथ्यते शृणु सांप्रतम् ॥३५४०॥
कपालं प्रोक्तमानीय स्फटिकाभं च साधकः ।
गत्वा श्मशाने देवेशि मकारपंचकान्वितः ॥३५४१॥
तत्रासनं समास्तीर्य स्वकल्पोक्तक्रमेण च ।
भूतशुद्धि मातृकां च प्राणायामं च मातृकाम् ॥३५४२॥
मूलमंत्रस्य ऋष्यादिषडंगांतं महेश्वरि ।
कृत्वा च पंचगव्येन संक्षाल्य पात्रमीश्वरि ।
सप्तकौषधियोगेन क्षालयेत् तदनंतरम् ॥३५४३॥
स्तन्यं शुक्रं चारणालं तक्रं रक्तं च योनिजम् ।
पंचगव्यमिति प्रोक्तं पात्रयंत्रप्रक्षालने ॥३५४४॥
काश्मीरगोरोचनपूगकादि
कुरंगनाभीजमथापि मूर्वा ।
पूतासिमेवं मलयोद्भवं च
सद्यंत्रशुद्धयै महदौषधानि ॥३५४५॥
एभिः सम्यक्तया पात्रं मालां च कंकणं तथा ।
यंत्रं संशोध्य च पुनः शोधयेत् तज्जभस्मना ॥३५४६॥
यथोक्तेन विधानेन मूलमष्टोत्तरं शतम् ।
पात्रं स्पृष्ट्वा जपेद् देवि तन्मूलमधुनोच्यते ॥३५४७॥
प्रणवं भुवनेशानीं लक्ष्मीं कामं च देव्यिति ।
पात्रेश्वरि ततः कामं लक्ष्मीं मायां ध्रुवं पुनः ॥३५४८॥
पात्रं शोधय युग्मान्ते व्योमाग्नीः षोडशा च युक् ।
वकमग्नि विसर्गान्तं काममिन्द्रं तथैव च ॥३५४९॥
सर्गो त्रिलगलीशश्च स्वाहांतः परमेश्वरि ।
इमां मन्त्रात्मिकां विद्यामष्टोत्तरशतं जपेत् ॥३५५०॥

ततः शुद्धं भवेत् पात्रं चषकं कारयेत् प्रिये ।
एवं क्रमेण देवेशि कंकणं शोधयेद् बुधः ॥३५५१॥

एतत् शुद्धकरीं विद्यां वक्ष्ये शृणु समाहिता ।
प्रणवं च तथा मायां स्त्रियं कूर्चं तथा श्रियम् ॥३५५२॥

कालीं केशिनि शब्दांते निराशब्दाच्च केशिनि ।
कंकणं शोधययुगं वर्म क्रां फट् ततस्त्रिधा ॥३५५३॥

सर्गी ठश्च प्रियावह्नेर्मंत्रः कंकणशुद्धिकृत् ।
इममष्टोत्तरशतं जप्त्वा च परमेश्वरि ॥३५५४॥

पंचगव्यौषधिजलैः संक्षाल्य धारयेत् ततः ।
हस्तयो र्वीरवेषः स्यात् साधनार्हो नरस्तदा ॥३५५५॥

इति श्रीमदागमरहस्ये सत्सग्रहे साधनोपयोगि आसनपात्रककरणादिशुद्धि-
कथन नाम चतुर्दश पटल ॥ १४ ॥ आदितश्च द्विचत्वारिंशत् ॥४२॥

## अथ पञ्चदशः पटलः ।

अथ मालाविधानं च कथ्यते शृणु पार्वति ।
माला वहुविधा प्रोक्ता महाशंखादिभेदतः ॥३५५६॥

महाशंखमयीमाला दंतमाला स्वयंभुवा ।
वर्णमाला तथा देवि सर्वकार्यार्थसाधिनी ॥३५५७॥

वर्णमाला त्रिधा प्रोक्ता तत्क्रमं शृणु पार्वति ।
पंचाशद्वर्णैभि र्माला पंचाशद्वर्णयोगतः ॥३५५८॥

तद्द्वयं तु समुद्धृत्य ह्यनुलोमविलोमतः ।
माला शतमयी प्रोक्ता सर्वकार्यार्थसिद्धिदा ॥३५५९॥

अष्टवर्ग प्रकल्प्याथ ह्यष्टोत्तरशती भवेत् ।
गुरो. पंच गणेशस्य त्रयं च परिकीर्तितम् ॥३५६०॥

शेषमिण्टाय संदद्यात् तेन सिद्धीश्वरो भवेत् ।
त्रयं गुरौ त्रयं देवि गणपे परिकीर्तितम् ॥३५६१॥
न्यूनातिरिक्ते द्वितयं शेषमिण्टाय योजयेत् ।
अण्टोत्तरशतीभेदो ह्यपरः परिकीर्तितः ॥३५६२॥
अनुलोमविलोमेन मातृकाना शतं भवेत् ।
आदौ मध्ये तथा चान्ते वाला दद्यात् प्रयत्नतः ॥३५६३॥
आदौ श्रीबीजमुच्चार्य तेन चाण्टोत्तरं शतम् ।
अमृतत्रितयं प्रोच्य प्रणवाद्यं तथेश्वरि ॥३५६४॥
अनुलोमविलोमेन त्वण्टोत्तरशती भवेत् ।
मायावाक्कामश्रीयोगात् मातृकावर्णयोगतः ॥३५६५॥
अनुलोमविलोमेन त्वण्टोत्तरशती भवेत् ।
दंताक्षमाला श्रीकाल्यां तारिण्यां नरशंखजा ।
छिन्नमस्ताविधौ शस्ता नरास्थिमालिका शुभा ॥३५६६॥
रक्तचंदनजा माला बीजाख्या त्रिपुराविधौ ।
स्वयंभूमालिका देवि भैरव्यां वालिकाविधौ ॥३५६७॥
गुंजामाला तु मातंग्यां धूमायां खरदंतजा ।
हरिद्राख्या तु ब्रह्मास्त्रे कमलाख्या तु माविधौ ॥३५६८॥
वाण्यां श्रीभुवनेश्वर्यां स्फाटिकी परिकीर्तिता ।
श्वेतगुंजा सिद्धविद्याविधौ प्रोक्ता महेश्वरि ॥३५६९॥
शंखमाला वैष्णवे च इन्द्राक्षः शक्तिमात्रके ।
भद्राक्षः शरभे प्रोक्तो गणेशे गजदंतकः ॥३५७०॥
त्रिपुटायां पुत्रजीवो गोविंदे तुलसी मता ।
सर्वमंत्रे च रुद्राक्षः शक्तिमन्त्रे दिवा न हि ॥३५७१॥
रत्नस्वर्णरौप्यमयी तथा ताम्रमयी शिवे ।
औदुम्वरं बीजमयी वटबीजमयी तथा ॥३५७२॥
पूगीफलमयी माला जातीफलमयी तथा ।
मधुमत्याकर्षणार्थं वीरविद्याविधावपि ॥३५७३॥

प्रवाल सूर्यमन्त्रे च मौक्तिकं शक्तिमन्त्रके ।
कुशग्रन्थ्या जपेद् विप्रः सुवर्णमणिभि र्नृपः ॥३५७४॥

पुत्रजीवैर्जपेद् वैश्यः पद्माक्षैः सर्व एव च ।
श्वेतपद्माक्षकै र्देवि विष्णुमन्त्रां जपेच्छिवे ॥३५७५॥

रुद्राक्षैः सर्वकार्याणि पद्माक्षैः पुष्टिरुत्तमा ।
कीर्तिः श्रीशंखमणिभि र्मौक्तिकै र्मुक्तिमान् भवेत् ॥३५७६॥

प्रवालै र्वश्यसिद्धिः स्याद् गुंजया मोहन भवेत् ।
भद्राक्षै र्भाग्यसंपत्तिरिन्द्राक्षै राज्यमुत्तमम् ॥३५७७॥

धनधान्यसुतावाप्ति र्भवेद्धि पुत्रजीवकैः ।
अरिष्टमाला विद्वेषे वदरी मारणे मता ॥३५७८॥

मरिचै र्ह्रासने माला पिचुमंदै र्विनाशने ।
अकस्मादीप्सितासिद्धि र्महाशंखाख्यमालया ।
दंताख्यमालया देवि षष्टिसिद्धीश्वरो भवेत् ॥४५७९॥

रचिता चास्थिमणिभिः सर्वशत्रुविनाशिनी ।
खरदंतैः शत्रुनाशो गजदंतै र्गुरुर्भवेत् ॥३५८०॥

कुचंदनैः समाकर्षो हारिद्रैः स्तंभनं भवेत् ।
स्वयंभूकुसुमै र्देवि सर्वविद्येश्वरो भवेत् ॥३५८१॥

चंदनैः कीर्तिलक्ष्म्यौ च तेजः स्यात् कुशमालया ।
तुलस्या मोक्षमाप्नोति लौहै र्मारणमादिशेत् ॥३५८२॥

ताम्रैः शांति र्लौहरौप्यैः सर्वसौख्यकलां लभेत् ।
सौवर्णे राजलक्ष्मीश्च सर्पास्थिमालया रिपून् ॥३५८३॥

त्रासयेन्नाशयेद् देवि नात्र कार्या विचारणा ।
वाक्सिद्धिः स्फाटिकै र्भूयात् शंखाभावेऽपि मालिका ॥३५८४॥

अंगुलीपर्वभि. सर्वसिद्धि राज्यं च विंदति ।
औदुंबरै र्भूतनाशः प्लक्षै र्दारिद्र्यनाशनम् ॥३५८५॥

वटबीजै र्यक्षिणी स्यात् कपर्दीभि र्महोदयः ।
शिवशक्तिमयीमाला रुद्राक्षस्फाटिकै र्युता ॥३५८६॥

रुद्राक्षस्वर्णसंयुक्तां माला हरिहरात्मिका ।
रुद्राक्षरौप्यसंयुक्ता माला विधिशिवात्मिका ॥३५८७॥

रुद्राक्षैः शक्तिमंत्रं तु दिवा यो जपति प्रिये ।
स दुर्गतिमवाप्नोति जपस्तस्य निरर्थकः ॥३५८८॥

शक्तिस्त्रीमंत्रजप्येषु रुद्राक्षै र्न दिवा जपेत् ।
पूर्वाम्नाये स्फाटिकजै र्दक्षिणे रुद्रनेत्रजैः ॥३५८९॥

प्रवालमौक्तिकै र्देवि पश्चिमाम्नायदेवताम् ।
उत्तराम्नायदेवाना दंतशंखाक्षमालिका ॥३५९०॥

मणिभिः पुत्रजीवोत्थै र्न जपेदुत्तरेश्वरीम् ।
कुंडलीमालिका देवि भैरव्यां परिकीर्तिता ॥३५९१॥

ऊर्ध्वाम्नाये स्वयंभूत्था पाताले रत्नसंभवा ।
तत्रापि कालिकाताराविद्यायां शंखसंभवा ।
शंखमालां विहायाऽथ यस्तारां कालिकां जपेत् ॥३५९२॥

मंत्रक्षोभोऽथवा भूयात् विद्यासिद्धिर्न वै भवेत् ।
पूर्वोक्तसर्वमालानां फलं शृणु महेश्वरि ॥३५९३॥

रुद्राक्षमालाजापेन दशवर्षेण वै फलम् ।
स्फाटिकै रुद्रवर्षेण मुक्तायां नंदवर्षतः ॥३५९४॥

प्रवाले रविवर्षेण पद्माक्षे परमेश्वरि ।
कामवर्षेण देवेशि पुत्रजीव्यां शृणु प्रिये ॥३५९५॥

भूतवर्षेण फलदं गुंजाख्ये वसुवर्षतः ।
रक्तचंदनजापात्तु सप्तवर्षात् फलं लभेत् ॥३५९६॥

रौप्ये दिग्युग्मवर्षेण स्वर्णे वर्षैस्त्रिवेदकैः ।
पंचविंशतिवर्षेण ताम्राक्षे फलमीरितम् ॥३५९७॥

अकस्मादीप्सितासिद्धि महाशंखाक्षमालया ।
महाशंखेऽप्यशक्तश्चेत् स्फाटिक्या मालया जपेत् ॥३५९८॥

दंताक्षमालया देवि दशाहेन फलं लभेत् ।
अगुलीपर्वमालाद्याः सप्ताहेन फलं लभेत् ॥३५९९॥

महाशंखाक्षमालायां सूर्याहेन फलं ध्रुवम् ।
भद्राक्षे षोडशाब्देन माहेन्द्राक्षेऽपि पूर्ववत् ॥३६००॥

माणिक्ये पंचवर्षेण रत्ने वर्षाष्टकेन च ।
अस्थिभिः पक्षमात्रेण फलं भवति पार्वति ॥३६०१॥

पीताक्षै रसवर्षेण फलं भवति पार्वति ।
स्वयंभूमालिका देवि स्वजातक्रमयोगतः ॥३६०२॥

या प्राप्ता विधिना देवि पंचाहेन फलप्रदा ।
खरदन्तै वेंदवर्षे गजदंतै द्विवेदतः ॥३६०३॥

राजदंतेऽप्यशक्तश्चेत् गजदंतेन वै जपेत् ।
कुलवृक्षस्य बीजैश्च मासाद् भवति वै फलम् ॥३६०४॥

कुशग्रंथ्या सूर्ययुग्मैः फलमत्र प्रकीर्तितम् ।
नारिकेलमयी माला प्रोक्ता कापालिनीविधौ ॥३६०५॥

प्रत्यक्षमुंडमालेयं षण्मासेन फलप्रदा ।
दंताक्षमालया चैव राजदंतेन मेरुणा ॥३६०६॥

उत्तमा मालिका प्रोक्ता कालिकाकर्षिणी परा ।
कर्णनेत्रांतरस्थो यो महाशंखेति कीर्तितः ॥३६०७॥

महाशंखमयी माला पंचाशन्मणिनिर्मिता ।
मध्यमा मालिका प्रोक्ता ताराजापेषु कीर्तिता ॥३६०८॥

अस्थिभि र्वा नृमुंडै र्वा किंच वा नृललाटजम् ।
देहदेहान्तरस्थना वा माला प्रोक्ता कनिष्ठिका ॥३६०९॥

छिन्नादेव्या विधौ शस्ता एवं हि त्रिविधा मता ।
संमुखौ यौ उभौ दंतौ राजदंतौ प्रकीर्तितौ ॥३६१०॥

मुखं देव्या महेशानि येन दंतेन राजते ।
तस्मात् प्रीतेन मनसा मेरुगर्भे नियोजितौ ॥३६११॥

नारिकेलमयी माला सर्वविद्याविधौ स्मृता ।
सर्वस्मान्मुंडमालेयं कलौ जागर्ति केवला ॥३६१२॥

चंडघंटाविधौ देवि नरास्थिमालिका स्मृता ।
एकाक्षरी छिन्नमस्ता चंडघंटा प्रकीर्तिता ॥३६१३॥

न रुद्राक्षै र्न पद्माक्षैश्चंडघंटां जपेत् शिवे ।
इतोऽत्युग्रा त्वन्यविद्या न काचिद् वै भविष्यति ॥३६१४॥

सिद्धिर्वा मृत्युरपि वा द्वयोरेकतरं भवेत् ।
ताराबीजं तथा काल्याश्शक्तश्छिन्नामनुं जपेत् ॥३६१५॥

बीजदैवतयोगेन अधिप्रत्यधियोगतः ।
अधिष्ठात्री महेशानि तथा प्रत्यधियोगतः ॥३६१६॥

नरास्थिमालिका जप्ता सर्वकार्यकरी स्मृता ।
त्रिशक्तिमंत्रं रुद्राक्षै र्न दिवा प्रजपेत् शिवे ॥३६१७॥

सूर्याग्निसोमसूत्रैश्च माला कार्या प्रयत्नतः ।
वाससा मज्जया वापि नाडीभि र्वा शुभा मता ॥३६१८॥

स्वयंभुवाक्ता या नाडी सा नाडी सर्वथोत्तमा ।
स्वयंभुवाक्तं यत् सूत्रं तत् सूत्रं सर्वथोत्तमम् ॥३६१९॥

पण्यस्त्रीनिर्मितं सूत्रं कुमारीनिर्मितं तथा ।
ततो द्विजेन्द्रपण्यस्त्रीनिर्मितं ग्रंथिवर्जितम् ॥३६२०॥

कुण्डाक्तं चैव पुष्पाक्तं खपुष्पाक्तं तथैव च ।
ततो मातंगिनीहस्तात् प्राप्तं तु सर्वथोत्तमम् ॥३६२१॥

नाड्या संग्रंथनं कार्यं रक्तेन वाससाऽथवा ।
इयं सिद्धिप्रदा माला कालिकाकृष्टिकारिणी ॥३६२२॥

तारेण ग्रथनं कार्यं प्रत्येकं मणिकां क्रमात् ।
तन्मंत्रदेवतारूपं ध्यात्वा तु मालिकांतरे ॥३६२३॥
सर्वे मंत्राः प्रजप्तव्या सर्वकार्यार्थसिद्धये ।
दंताक्षं चैव मुंडाक्षं मत्स्यस्यास्थिमणि प्रिये ॥३६२४॥
नाड्या संग्रथनं कार्यं त्रिशक्तिमालिका मता ।
येनैव ग्रथ्यते देवि तेनैव प्रजपेन्मनुम् ॥३६२५॥
नान्यमंत्रं जपेद् देवि तमेव प्रजपेत् सदा ।
मालाशुद्धिमह वक्ष्ये शृणु त्वं सावधानतः ॥३६२६॥
सुदिने शुभनक्षत्रे मालां संशोधयेत् सुधीः ।
महामालां समादाय वीरपात्रं समानयेत् ॥३६२७॥
वीरयंत्र समासाद्य वीरमालां प्रशोधयेत् ।
देवी सावरणां पूज्य सवल्यन्तं महेश्वरि ॥३६२८॥
ओमस्य श्रीमहामालामंत्रस्य परमेश्वरि ।
ऋषिः श्रीमन्महातारा उष्णिक् छंदः प्रकीर्तितम् ॥३६२९॥
क्री वीजं स्त्री तथा शक्ति हूं मत्र कीलकं मतम् ।
महामालादंतमालाशोधने विनियोजनम् ॥३६३०॥
त्रिशक्त्या तु षडंगानि ध्यानं मंत्रवदाचरेत् ।
ध्यात्वा संकल्प्य यत्नेन मंत्रेणानेन पार्वति ॥३६३१॥
प्रणवं च तथा लज्जा श्रीलज्जाकामकूर्चकैः ।
फट् स्वाहेति च मंत्रेण चषके मालिकां क्षिपेत् ॥३६३२॥
तत्रावाहनमंत्राद्यैः कालिकां कालशारदाम् ।
सायुधां सपरीवारां पूजयेत् परमेश्वरि ।
मूलमावृत्य तार्तीयं संस्मरन् धेनुमुद्रया ॥३६३३॥
अमृतीकृत्य कवचेनावगुंठ्य महेश्वरि ।
महामुद्रया समाच्छाद्य देवीरूपां विभावयेत् ॥३६३४॥
ध्यायन् तत्र क्षिपेद् विन्दुं तन्मंत्रांश्च शृणु प्रिये ।
प्रणवं कूर्चयुग्मं च स्वाहा प्रणवकूर्चकौ ॥३६३५॥

वह्निजाया च तारास्त्रे वह्निजायाविषं तथा ।
तारा च वह्निजाया च तारलज्जा च कूर्चकैः ॥३६३६॥

वह्निजाया ततस्तारं लज्जा फट् वह्निजायया ।
द्वित्रिशृङ्खलिका व्यस्तसमस्तमंत्रमालया ॥३६३७॥

शतधाऽनेन मंत्रेण बिन्दुप्रक्षेपमाचरेत् ।
कस्तूरीकेसरं चैव चंद्रागरुप्रधूपकैः ॥३६३८॥

धूप्य मालां समुत्तार्य विद्यया चाभिमंत्रयेत् ।
प्रणवं च तथा माया श्रीमहावज्रिणीति च ॥३६३९॥

ततो महाघोररूपे कर्कशेति पदं वदेत् ।
महास्थिमंडले प्रोच्य प्रविशेति पदं तथा ॥३६४०॥

सर्वसिद्धिं प्रयच्छेति प्रणवं कूर्चबीजकम् ।
मायायुग्मं वह्निजाया महाकापालिनीति च ॥३६४१॥

ततो महाघोररूपे स्वाहा प्रणवमायया ।
मायाकूर्चास्त्रस्वाहांता विद्योक्ता चाभिमंत्रणे ॥३६४२॥

दूर्वाक्षतैः समभ्यर्च्य कामेनोद्दीपनं चरेत् ।
उपचारैः समभ्यर्च्य मातृकामूलमंत्रतः ॥३६४३॥

उद्दीपनं ततः कृत्वा हूंकारेण तु वेष्टयेत् ।
बलिं दद्यादनेनैव तारं मायाद्वयं वदेत् ॥३६४४॥

वासुदेवं बिन्दुयुतं कूर्चेन पुटितं वदेत् ।
कूर्चतारे फट् च कूर्चं प्रणवद्वयमुच्चरेत् ॥३६४५॥
कूर्चबीजं वह्निजाया प्रणवं कूर्चबीजकम् ।
महायोगिनि शब्दान्ते स्यात् त्रिभुवनतारिणि ।
महाशंखास्थिमाला च मध्ये निवासं कुर्विति ॥३६४६॥

कुरुशब्दं सर्वसिद्धिं देहियुक् च सुरापदम् ।
मांसोपहारान् गृह्णेति युक् स्याद् गृह्णापयद्वयम् ॥३६४७॥

कुल्लुका फट् ततः स्वाहा मंत्रेणानेन पार्वति ।
यथोचितेन द्रव्येण बलिं दत्वा विधानतः ॥३६४८ ॥

पंचद्रव्यैः पंचदिन मालां स्थाप्य च पंचमे ।
मालारात्रिविधि कुर्यात् तेन सिद्धयति मालिका ॥३६४९॥

निभृते स्थापयेन्मालां रहस्यमालिकाविधिः ।
दंतमालाविधौ देवि विशेषं शृणु चापरम् ॥३६५०॥

प्रणवं हृत् भगवति मानरंजिनि चोच्चरेत् ।
विघ्ने विघ्ने वलोद्ये च हरविघ्ने पदं वदेत् ॥३६५१॥

मालाविघ्ने तथा मालाधारिणि हर ब्लूं पदम् ।
हसब्लूं शंखास्थिधारिणीतिपदमंते तथा वदेत् ॥३६५२॥

कर्कशास्थि तथा मालावासिनीति पदं वदेत् ।
छिन्ने तारे कालिके च तदंते जपमालिके ॥३६५३॥

कुल्लुकां फट् महादंतमालामध्ये पदं वदेत् ।
निवासं कुरुयुग्मं च राजेन्द्रमाला ततः पदम् ॥३६५४॥

वासिनि त्रीं त्रयं प्रोच्य क्रींत्रयं हूंद्वयं तथा ।
मायाद्वयं च फट् स्वाहा मालामंत्रणकृन्मनुः ॥३६५५॥

बलिदानमनुं वक्ष्ये शृणु सावहिता शिवे ।
प्रणवं कर्कशपदं मंडलांबिके पदं ततः ॥३६५६॥

मालिनि कौलिनि पदं गौरि गांधारि चोच्चरेत् ।
गिरिजे मायावतिपदं क्रियावति पद ततः ॥३६५७॥

गायत्र्यंते गानप्रिये भक्तप्रिये च शांकरि ।
कालिका पालिके कृष्णमुण्डधारिणि प्रोच्चरेत् ॥३६५८॥

असिलताधारिणीति तदंते जातवेदसे ।
श्रीकालकालि च पदं मृडानि रुद्राणीति तथा ॥३६५९॥

इमं बलिं गृह्णयुग्मं मालासिद्धिं च चोद्धरेत् ।
देहि दापययुग्मं च क्रीं फट् कमलया युतम् ॥३६६०॥

बलिं दद्यादनेनैव तदंते जाग्रती कृतिः ।
कपालकज्जलं चोरपादकज्जलयुग्मकम् ॥३६६१॥

विश्वमोहननामानं कज्जलं विद्धि पार्वति ।
तत्पादभस्म देवेशि फाल्गुनोत्सवजं परम् ॥३६६२॥

जगद्धूलीति नाम्ना तु विख्यातं शत्रुनिग्रहे ।
अनेन मनुना गृह्य उद्भ्रांतिधूलिनामिकाम् ॥३६६३॥

शत्रुमूर्ध्नि तथा गेहे देहे शय्यागारे जले ।
दापयेत् परमेशानि उद्भ्रांतिधूलिरीरिता ॥३६६४॥

उद्भ्रांतिधूल्या देवेशि भ्रमाक्रान्तं जगत्त्रयम् ।
यथा ग्रहणयुग्मं च तथा पर्वद्वयं भवेत् ॥ ३६६५ ॥

नक्षत्रवारराश्यादि शुद्धाशुद्धि न चाचरेत् ।
कामबीजं तथा ल्कूं च श्लीं श्लीं फट् च त्रयं वदेत् ॥३६६६॥

सिद्धे जगद्धूलिसिद्धिं देहि स्वाहा मनुर्मतः ।
मंत्रेणानेन संगृह्य उद्भ्रांतिधूलिमुत्तमाम् ॥३६६७॥

मालासिद्ध्या सर्वसिद्धिर्भवत्येव न संशयः ।
अथोच्यते महायंत्रसंस्कारः सर्वसिद्धिदः ॥३६६८॥

शुभेऽह्नि स्नानमाचर्य शुभे लग्ने शुभे क्षणे ।
कृतनित्यक्रियो मंत्री प्राङ्मुखो वाप्युदङ्मुखः ॥३६६९॥

भूतशुद्ध्यादिकं कृत्वा कल्पोक्तन्यासमाचरेत् ।
सौवर्णं राजतं ताम्रं श्रेष्ठं मध्यं तथाधमम् ॥३६७०॥

स्फाटिकं वा मरकतं सर्वश्रेष्ठं प्रकीर्तितम् ।
एकतोलोत्तरं चाष्टतोलान्तं सुन्दरं दृढम् ॥३६७१॥

कुर्यान्मनोहरं चैव सुरेखं मेरुपृष्ठकम् ।
प्रतिष्ठां च ततः कुर्यात् यथाशास्त्रप्रमाणतः ।
पुण्यक्षेत्रे पुण्यकाले शैलादित्रिहितस्थले ॥३६७२॥

मंत्री कल्पानुसारेण पूर्वेद्युरधिवासयेत् ।
सायं संकल्पविधिवत् घटस्थापनपूर्वकम् ॥३६७३॥
गणेशादीन् समभ्यर्च्य दिक्पालान् परिपूजयेत् ।
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ॥३६७४॥
यंत्रसंस्कारकर्मादौ द्रव्यमेतन्मयेरितम् ।
यथाशक्त्युपचाराद्यैः संपूज्य मूलदेवताम् ॥३६७५॥
सुगंधतैलगंधाद्यै द्रव्यैस्तमधिवासयेत् ।
चंद्रेत्यादि च मंत्रेण जयघोषपुरःसरम् ॥३६७६॥
अधिवासं विधायेत्थं संयतो विजितेन्द्रियः ।
प्रातर्नित्यं तु निर्वर्त्य क्लृप्ते यागस्थले विशेत् ॥३६७७॥
मंडलं सर्वतोभद्रं वेद्या उपरि संलिखेत् ।
प्राङ्मुखो वाग्यतो भूत्वा संकल्प्याभीष्टसिद्धये ॥३६७८॥
पंचशुद्धि समाचर्य कूर्चमक्षतसंयुतम् ।
संस्थाप्य मंडले तत्र यजेदाधारशक्तितः ॥३६७९॥
पीठमंत्रान् समास्तीर्य स्थापयेत् कलशं बुधः ।
दीक्षाक्रमोक्तविधिनाभिषेककलशं तथा ॥३६८०॥
पंचगव्यं ततः कुर्यात् शिवमंत्रविशोधितम् ।
तेन सुस्वापयेन्मंत्री यंत्रे च प्रणवं जपन् ॥३६८१॥
पंचामृतेन हविषा दध्ना च पयसा क्रमात् ।
तत उद्वर्तनं कृत्वा जलेन स्नापयेदपि ॥३६८२॥
पंचगव्यं समानीय तत्र यंत्रं समाहितः ।
जप्तं क्षिपेत् सुवर्णादिवेदमूलपुरःसरम् ॥३६८३॥
तत उद्धृत्य स्वर्णादिपात्रे संस्थाप्य मंत्रवित् ।
पंचामृतेन तीर्थेन शीतलेन जलेन च ॥३६८४॥
सहस्रशीर्षमंत्रेण मूलमंत्रपुरःसरम् ।
सुस्नाप्य पवमानेन कर्पूरागरुनीरतः ।
सर्वौषधिजलैं गंधजलै यत्नेन मज्जनम् ॥३६८५॥

ततः शुद्धदुकूलेन जलमुत्सार्य साधकः ।
परिधाय दुकूले द्वे स्वर्णनिर्मितडोरया ॥३६८६॥
मंडले तं समानीय नृत्यगीतै र्जयस्वनैः ।
कुंकुमाद्यै विलिप्याथ पूज्य सर्वोपचारकैः ॥३६८७॥
पीठपूजां ततः कुर्यात् स्वस्वकल्पोक्तमानतः ।
कुशैः कुलीनै र्वा देवि शतमष्टोत्तरं जपेत् ॥३६८८॥
प्रणवं यंत्रराजाय विद्महे पदमुद्धरेत् ।
महायंत्राय धीरूपं लिखेत् ततो महोति च ॥३६८९॥
तन्नो यंत्रः प्रचोरूपं दयादेषा प्रकीर्तिता ।
इमां यंत्रस्य गायत्रीं जप्त्वा देवत्वमाप्नुयात् ॥३६९०॥
अथेष्टदेवतां ध्यात्वा मुद्रयावाहयेत् ततः ।
जीवन्यासं ततः कृत्वा पूजयेदिष्टदेवताम् ॥३६९१॥
नृत्यगीतैश्च वादित्रैः पंचघोषपुरःसरम् ।
ततो जपेदिष्टमंत्रमष्टोत्तरसहस्रकम् ॥३६९२॥
कुंडे वा स्थंडिले मंत्री हविषा संस्कृतेऽनले ।
यथाविधि विधानेन स्रुचा होमं समाचरेत् ॥३६९३॥
ग्रासप्रमाणं चरुकं मूलेनैव च मंत्रवित् ।
घृतप्लवं ततो दत्वा जुहुयादग्निसंमुखे ॥३६९४॥
पंचविंशतितत्त्वैश्च तत्त्वज्ञानपरायणः ।
चरुणा दिक्पतिं चैव दद्यात् पूर्वादितो बलिम् ॥३६९५॥
तत आवृतिदेवेभ्यो घृतेनाहुतिमाचरेत् ।
तदन्ते देवि मंत्रेण हुनेदष्टोत्तरं शतम् ॥३६९६॥
मातृकायुक्तमंत्रं तु जपन् जयजयस्वनैः ।
दद्यात् पूर्णाहुतिं देव्यै यथाविधि विधानतः ॥६६९७॥
इष्टसिद्धयै बलिं दत्वा प्रणमेच्चक्रमुत्तमम् ।
तोषयेत् स्वर्णवस्त्राद्यै र्दक्षिणाभि र्गुरुं तथा ।
मकारपंचभिर्देवि वीरपूजां समाचरेत् ॥३६९८॥

शक्ति कुमारिकां बालां पूजयेत् पंचपंचकम् ।
कुर्यादष्टाष्टकं वापि कुलद्रव्यैः समस्तकैः ।।३६९९।।
भूलोकनाथो भवति यंत्रपूजनयोगतः ।
रहस्यातिरहस्यं च मुण्डयंत्रविशोधनम् ।।३७००।।
गोपनीयं गोपनीयं गोपनीयं स्वयोनिवत् ।
यंत्रे नष्टे च स्फुटिते सूपायः कथ्यते शृणु ।।३७०१।।
दग्धं वा स्फुटितं नष्टं यद्वा चौरेण संहृतम् ।
विदीर्णं लुप्तरेखं वा तत्रोपायं शृणु प्रिये ।।३७०२।।
उपोष्य रजनीमेकां हविष्याशी जितेन्द्रियः ।
लक्षमात्रं जपेन्मंत्रं संप्रदायानुसारतः ।।३७०३।।
दशाष्टपचयोगेन सद्भक्त्या गुरुतोषणम् ।
ब्राह्मणान् भोजयेत् पश्चात् कुमारीं च सुवासिनीम् ।।३७०४।।
शक्तिपूजां ततः कुर्यात् तथैवाष्टाष्टक बुधः ।
पंचपंचककं वापि कालीतारानुसारतः ।।३७०५।।
स्फुटितं लुप्तचिह्नं वा दग्धं यः पूजयेत् शिवे ।
सर्वोपद्रवयुक्तस्य तस्य मृत्युस्त्रिमासतः ।।३७०६।।
गिरिगर्भे तीर्थराजे समुद्रे सरितांतरे ।
क्षिपेद् यत्नेन देवेशि त्वन्यथा मृत्युभाग् भवेत् ।।३७०७।।
विद्यामात्रे त्विदं कार्यं विशेषं शृणु पार्वति ।
लिंगे बाणे नर्मदोत्थे लुप्तचिह्नं न दुष्यति ।।३७०८।।
शालग्रामशिलामात्रे भंगमृत्युकरं भवेत् ।
मूर्तौ पादकराघाते नेत्रादिमस्तके शिवे ।।३७०९।।
हृदयाघातमापन्ने सर्वं नश्यति पार्वति ।
तां मूर्तिं विसृजेद् देवि पुन र्मूर्तिं नवां नयेत् ।।३७१०।।
महाविद्याविधौ देवि विशेषं शृणु सादरम् ।
यत्र देवो गतो देवि तद्देशं तत् स्थलं त्यजेत् ।
प्रायश्चित्तं ततः कृत्वा सुखमाप्नोति साधकः ।।३७११।।

कुमारीं च समानीय चार्वंगीं चारुलोचनाम् ।
प्रसूनपीठे संस्थाप्य न्यासजालं प्रविन्यसेत् ।।३७१२।।
पात्रासादनमासाद्य तां बालां पूजयेत् ततः ।
नवोत्तरं समारभ्य कामवर्षांतगं शिवे ।।३७१३।।
तावद् बालेति गदिता तारा कालीसमा हि सा ।
देव्याः स्वरूपं देवेशि तद्वत् तस्याः स्वरूपकम् ।।३७१४।।
विभाव्य पूजयेद् देवि सांगां सावरणां तथा ।
मूलाधारात् मस्तकान्तं समालोक्य विभाव्य च ।।३७१५।।
ध्यानोक्तदेवतां ध्यात्वा सांगां सपरिवारकाम् ।
न च तां भोगयेद् देवि तस्याः क्षोभं न कारयेत् ।।३७१६।।
सर्वाश्चैव महाविद्यास्तत्क्षणे शक्तिदेहगाः ।
सा चेत् क्षुब्धा यदा भूयात् देवताक्षोभमाप्नुयात् ।।३७१७।।
अविकारेण मनसा पूजयेन्निजदेववत् ।
स्वदेवीवच्च संपूज्य सबलयन्तं महेश्वरि ।।३७१८।।
अंगे षडंगं संपूज्य मस्तके गुरुपूजनम् ।
सर्वावृत्तिं च सर्वांगे मूलदेवीं त्रिपत्रके ।।३७१९।।
संपूज्य परमेशानि रत्नाभरणविस्तरैः ।
ग्रासैर्वस्त्रैर्भोजनाद्यैर्लेह्यपेयादिभिः शिवे ।।३७२०।।
संपूजयेन्महेशानि देवताभावतत्परः ।
तया यदुक्तं देवेशि तदेव वरदानकम् ।।३७२१।।
तस्या देहे वसेद् देवी नात्र कार्या विचारणा ।
एवं कुमारीं संपूज्य तत् तद् दीपान् समाचरेत् ।।३६२२।।
त्रिशक्तिवच्च विद्यादौ दीपराजं समाचरेत् ।
दीपाग्रे दीपिनीं जप्त्वा दोषहीनो नरो भवेत् ।।३७२३।।
सिंदूरेण कृतं यंत्रं मूलेनावेष्टितं तथा ।
तत्कोणे कुल्लुकां लिख्य तत्र दीपं समाचरेत् ।
अष्टगंधेन केनापि गंधेन घुसृणेन च ।।३७२४।।

दीपवर्येण देवेशि तेन सिद्धीश्वरो भवेत् ।
अयं च नित्यदीपो हि त्रिशक्तिविषये मतः ॥३७२५॥

प्रायश्चित्तप्रसंगेन कीर्तितः परमेश्वरि ।
दीपे स्वदेवीं संपूज्य सांगां सावरणां शिवे ॥३७२६॥

पश्चिमाभिमुखं दीपं पात्रं त्रिपलमात्रकम् ।
सौवर्णं राजतं ताम्रं मार्तिक्यं धान्यसंभवम् ॥३७२७॥

दीपं कृत्वा प्रयत्नेन एकविंशतितन्तुभिः ।
त्रिपंचनवरुद्रैश्च वितस्ति र्वर्तिका भवेत् ॥३७२८॥

गोघृतेन पलाष्टेन ह्याजपान्तं समाचरेत् ।
चतुरंगुलमुच्छ्रायं सार्धांगुलसमुन्नतम् ॥३७२९॥

एवं क्रमेण देवेशि लक्षमात्रं जपेन्मनुम् ।
जपाद् दशांशं होमादि वीरपूजान्तकं तथा ॥३७३०॥

बलिदानं ततः कुर्यात् सात्त्विकादिविभेदतः ।
आपदुद्धारणं जप्त्वा दोषहीनो नरो भवेत् ॥३७३१॥

एवं क्रमेण देवेशि संपूज्य निजदेवताम् ।
यंत्रदोषविनिर्मुक्तः पुन यँत्रं च संग्रहेत् ॥३७३२॥

उक्तसंस्कारमासाद्य स्वगुरूक्तेन वर्त्मना ।
एकतोलं द्वितोलं वा त्रितोलं पंचतोलकम् ॥३७३३॥

रसतोलं वेदतोलं सप्ताष्टतोलकं तथा ।
दशतोलं सूर्यतोलं कलाभुवनतोलकम् ॥३७३४॥

रदतोलं चतुःषष्टितोलकं शततोलकम् ।
ऊर्ध्वरेखं भूमिरेखं मेरुकैलाससन्निभम् ॥३७३५॥

सबीजं कारयेद् यंत्रं बालाहस्तात्तु सग्रहेत् ।
तदभावे गुरो र्हस्ताद् गृहीत्वा पूजयेत् सुखम् ॥३७३६॥

महाविद्याविधौ प्रोक्त शैववैष्णवयोः शृणु ।
उपोष्य रजनीमेकामघोरं लक्षमात्रकम् ॥३७३७॥

जप्त्वा दशांशं जुहुयाद् दोषहीनस्ततो भवेत् ।
ब्राह्मणान् भोजयेत् पश्चात् दक्षिणाभिश्च तर्पयेत् ॥३७३८॥

सुदर्शनं वैष्णवे तु सौरे हंसं जपेत् शिवे ।
गाणपे श्रीहरिद्राख्यं जप्त्वा दोषान् विनाशयेत् ॥३७३९॥

अन्यथा कुरुते यस्तु तस्य पातो भविष्यति ।
अयुतं जपमिच्छन्ति दिव्यौघाद्याश्च पार्वति ।
गोपनीयो विधिरयं सर्वथा सुखमिच्छता ॥३७४०॥

इति श्रीमदागमरहस्ये सत्सग्रहे मालायंत्रप्रतिष्ठादिकथन नाम
पंचदश पटल ॥ १५ ॥ आदितस्त्रिचत्वारिशत् ॥४३॥

## अथ षोडशः पटलः ।

महामालां दंतमालां महायंत्रं च कंकणम् ।
शतस्त्रीकेशसंभूतं व्याघ्रासनमतः परम् ॥३७४१॥

गृहीत्वा वीरवेषश्च रहस्यसाधनं चरेत् ।
त्रिविधं साधनं तच्च कथयामि क्रमादिह ॥३७४२॥

श्मशानं च चिता चैव तथैव शवसाधनम् ।
विद्यामात्रे भवेदेतदेतासां च विशेषतः ॥३७४३॥

श्रीविद्यायां कालिकायां तारिण्यां रोचिनी मनौ ।
वटुके वगलायां च साधनेयं प्रकीर्तिता ॥३७४४॥

तत्र देवि प्रवक्ष्यामि श्मशानस्योग्रसाधनम् ।
येन साधनमात्रेण साधको भैरवो भवेत् ॥३७४५॥

त्रयस्त्रिशतिकोटीनां देवतानां च शक्तयः ।
नामभि विश्रुता देवि तव भक्त्या परं श्रुताः ॥३७४६॥

तासां वक्ष्येऽधुना देवि श्मशानसाधनं यथा ।
साधका येन जायंते सर्वसिद्धियुताः शिवे ॥३७४७॥

विना श्मशानविधिना पूजायोगजपादयः ।
न सिद्ध्यंति वरारोहे कलौ भैरवशापतः ॥३७४८॥

त्रिस्त्रिंशत्कोटयो देव्यः सर्वाः प्रेतालये स्थिताः ।
तत्र गत्वार्चयेद् यस्तु स भवेद् भैरवोपमः ॥३७४९॥

तत्र घोरारवं देवि महाकालश्शृगालकैः ।
सारमेयैश्च पक्षीन्द्रैः सोरगैः सपिशाचकैः ॥३७५०॥

वेतालभूतप्रेतैश्च श्मशानार्चा करोति हि ।
तत्र भूता महाघोरास्तच्चारा विघ्नकारकाः ॥३७५१॥

दिग्विदिक्षु भ्रमंत्येते देव्यष्टौ भूतभैरवाः ।
तेऽसंमुखगताः क्रूरा भूताः कुर्वन्ति विप्रियम् ॥३७५२॥

भैरवा विघ्नकर्तारः शिवं कुर्वन्त्यसंमुखे ।
तेषां विधिं प्रवक्ष्यामि गुह्यं सारोत्तमोत्तमम् ॥३७५३॥

रवौ चंद्रे कुजे सौम्ये गुरौ शुक्रे शनौ तथा ।
पुनः सूर्ये भ्रमन्ते च दिग्विदिक्ष्वष्टभैरवाः ॥३७५४॥

पूर्वोत्तरेशानसमीरणाग्नि–
कीनाशरक्षोवरुणादि दिक्षु ।
महोग्रचित्रांगदचंडभास्वान्
लोलाक्षभूतेशकरालभीमाः ॥३७५५॥

एवं भ्रमंते सततं श्मशाने
दिग्भैरवा भूतयुता महेशि ।
एतान् समभ्यर्च्य वसेत् श्मशाने
स्यादन्यथा धीभ्रमणं विपत्तिः ॥३७५६॥

अथाहं पूजनस्यास्य वक्ष्ये पद्धतिमादरात् ।
रात्रिशेषे समुत्थाय साधको विहिताह्निकः ॥३७५७॥

श्मशानार्चनसंभारमेकीकुर्याद् विचक्षणः ।
संपाद्य सामिषान्नं तु स्वगेहे बलिमादरात् ॥३७५८॥

मधुमाषमांसगुडमहिषच्छागकुजरैः ।
तत् तद् बलिप्रयोगार्थं पिष्टं पुष्पाण्यनेकधा ॥३७५९॥
गोदुग्धसंप्लुतं सर्वं कृत्वा यामोत्तरं शिवे ।
शस्त्रपाणि र्निर्भयश्च तथा वीरजनैर्वृतः ॥३७६०॥
गत्वा श्मशाने देवेशि सप्तपादं न लंघयेत् ।
सप्तपादमती वेला नोल्लंघ्या साधकैः क्वचित् ॥३७६१॥
तत्र संस्थाप्य संभारं प्रक्षाल्य चरणौ करौ ।
त्रिराचम्य समासीनः स्वासने प्राणसंयमम् ॥३७६२॥
त्रिः कृत्वा मूलमंत्रस्य ऋष्यादीन् विन्यसेत् प्रिये ।
करांगयोः षडंगानि कृत्वा मूलं जपेत् तदा ॥३७६३॥
अष्टोत्तरशतं देव्यै समर्प्य च पुनः पठेत् ।
ध्यायन् देवीं वर्म्मनामसाहस्रं स्तोत्रमुत्तमम् ॥३७६४॥
देव्यै समर्प्य तत् कृत्यं सप्तपादमतीं तथा ।
वेलां श्मशानीमुलङ्घ्य कृत्वा चितिं प्रदक्षिणाम् ॥३७६५॥
चतावरुणदिग्भागे चोपविश्य महेश्वरि ।
प्राङ्मुखोदङ्मुखो वापि नमेन्मंत्रमिदं पठन् ॥३७६६॥
ज्वालाकरालवदने कल्पान्तदहनप्रिये ।
प्राणिप्राणालयोद्भूते नमस्ते चितिवासिनि ॥३७६७॥
चिते मेऽनुग्रह कुर्विति वा पाठ कुत्रापि ।
इति नत्वा यथावारं प्रशस्तान् भूतभैरवान् ।
संपूज्य संमुखस्थांश्च पृष्ठे कृत्वा क्रियां चरेत् ॥३७६८॥

देव्युवाच—

भगवन् भैरवान् भूतान् शापानुग्रहणक्षमान् ।
कथं संधारयेन्मंत्री तत्र संमुखपृष्ठयोः ॥३७६९॥

शिव उवाच—

एतद् देवि परं गुह्यं भूतभैरवसाधनम् ।
वक्ष्यामि तव भक्त्याहं न चाख्येयं दुरात्मने ॥३७७०॥

भूतो रवौ पूर्वगतो महोग्र-
श्चित्रागदोऽप्युत्तरगो हिमांशौ ।
चंडस्तथैशानगतो महीजे
भास्वानुदेद् भैरव एव वायौ ॥३७७१॥

लोलाक्षको वह्निगतः सुरेज्ये
भूतेश्वरो दक्षिणगोऽसुरेज्ये ।
करालको निर्ऋतिगो हि मंदे
रवौ पुनः पश्चिमगोऽपि भीमः ॥३७७२॥

एवं भ्रमंते सततं महेशि
दिग्भैरवा भूतगणाः श्मशाने ।
सुधांशुवृद्धौ शशिहीनपक्षे
ते वैपरीत्येन शिवे भ्रमंते ॥३७७३॥

पौर्णमास्यां शिवे दृष्ट्वा ग्रहवारं ततोऽष्टधा ।
रविवारं च संगुण्य प्रथमं वा द्वितीयकम् ॥३७७४॥

प्रथमं रविवारे तु महोग्रं पूर्वगं यजेत् ।
द्वितीये पश्चिमे भीमं पूजयेत् शुक्लपक्षके ॥३७७५॥

कृष्णपक्षेऽर्चयेद् भूतान् विपरीतक्रमेण तु ।
अधुनैषां प्रवक्ष्यामि पूजासारं महेश्वरि ।
अवाच्यं परशिष्याय कुचैलाय दुरात्मने ॥३७७६॥

श्मशानपूजामंत्रस्य महाकालऋषिः स्मृतः ।
उष्णिक् छंद इति ख्यातं देवी श्मशानकालिका ॥३७७७॥

पराबीजं तटं शक्तिः कालीकीलकमीरितम् ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥३७७८॥

षड्दीर्घकालीबीजेन षडंगानि समाचरेत् ।
ध्यात्वा देवीमुक्तरूपां संपूज्य मानसैस्तथा ॥३७७९॥

आज्ञामादाय देवेश्याः बाह्यपूजां समारभेत् ।
संशोध्यासनमंत्रेण स्वासनं चैव वाग्यतः ॥३७८०॥

दिग्बंधं भूतशुद्धिं च तथैव प्राणसंस्थितम् ।
मातृकादीन् प्रविन्यस्य स्वकल्पोक्तांश्च विन्यसेत् ॥३७८१॥

सामान्यार्घ्यादिपात्राणि संस्थाप्य प्रोक्तवर्त्मना ।
चक्रे देवीं समावाह्य यथालब्धोपचारकैः ॥३७८२॥

संपूज्य वारक्रमतः पूर्वादिक्रमतोऽर्चयेत् ।
महोग्रादीन् स्वस्वदिक्षु स्वस्वशक्तियुतास्तथा ॥३७८३॥

पूर्वे मदालसायुक्तो महोग्रः संस्थितो रवौ ।
चित्रांगदश्च चित्रिण्या पूज्यः सोमे तथोत्तरे ॥३७८४॥

चंडश्चंड्या भूमिपुत्रवारे पूज्यस्तथैकशे ।
भास्वान् प्रभावतीयुक्तो पूज्यो वायौ बुधे तथा ॥३७८५॥

लोलाक्षोऽर्च्यश्च लोलाक्ष्या वह्नौ नानोपचारकैः ।
भूतेशश्चैव भूतेश्या शुक्रे दक्षिणसंस्थितः ।
करालश्च करालिन्या मंदे पूज्यश्च नैर्ऋते ॥३७८६॥

भीमश्च भीमरूपिण्या प्रतीच्यां च रवौ पुनः ।
एवं वारक्रमेणैव गंधाक्षतप्रसूनकैः ॥३७८७॥

बलिभिश्चैव संपूज्य संप्रार्थ्य च पुनः पुनः ।
तीक्ष्णदंष्ट्रेति मंत्रेण ततः पूजां समारभेत् ॥३७८८॥

स्वकल्पोक्तविधानेन पूजयित्वा महेश्वरीम् ।
सांगां सावरणां चैव बलिं दद्यात् पुनस्तथा ॥३७८९॥

देवेभ्यश्च यथाम्नायं संतर्प्य बलिदेवताः ।
तरुणोल्लाससंयुक्तो मंत्रं संकल्पपूर्वकम् ॥३७९०॥

प्रजपेत् तत्र विधिवत् ध्यायन् देवीमनन्यधीः ।
समर्प्य तज्जपं देव्यै ततश्च कवचादिकम् ॥३७९१॥

पठित्वान्ते दशांशेन चिताग्नौ जुहुयात् ततः ।
कल्पोक्तेन च द्रव्येण तद्दशांशेन तर्पणम् ॥३७९२॥

मार्जनं तद्दशांशेन तद्दशांशेन भोजनम् ।
वीराणां चैव शक्तीनां चक्रपूजानुसारतः ॥३७९३॥

तेभ्यश्च दक्षिणां दत्वा संस्तुत्य विविधैः स्तवैः ।
एवं समाप्य विधिवद् विसृजेत् परदेवताम् ॥३७९४॥

परानंदमयो वीरो लभते वांछितं फलम् ।
अथोच्यते महादेवि चितासाधनमुत्तमम् ॥३७९५॥

असंस्कृता चिता ग्राह्या वीरसाधनकर्मणि ।
चांडालादिषु संप्राप्ता केवलं शीघ्रसिद्धिदा ॥३७९६॥

वीरतंत्रे देवीवाक्यम्—

महावीरक्रमं देव सूचितं न प्रकाशितम् ।
कथयस्व महादेव सर्वसिद्धिप्रदं महत् ॥३७९७॥

शव —

सर्वसिद्धिप्रदं साक्षात् सर्वदेवनमस्कृतम् ।
सर्वपापहरं देवि सर्वरोगविनाशनम् ॥३७९८॥

यस्मिन् परिश्रमेणापि नृणां सिद्धिः समीरिता ।
जानद्भिस्तत्र कर्तव्या साधकै र्वीरसाधना ॥३७९९॥

भयमुक्तैश्च शुचिभिः सर्वसिद्धिमभीप्सुभिः ।
नानया दुर्लभं किंचित् साधकस्य समीहितम् ॥३८००॥

ब्रह्मविष्णुशिवादीनां दिक्पालानां च भामिनि ।
भैरवाणां च सर्वेषां गन्धर्वाणां च योगिनाम् ॥३८०१॥

शश्वत् सिद्धिप्रदं देवि सर्वेषामालयं महत् ।
नान्यत् सिद्धिप्रदं देवि वीरसाधनवर्जितम् ॥३८०२॥

महाबलो महावीरो महासाहसिकः शुचिः ।
महास्वच्छो दयावांश्च सर्वभूतहिते रतः ॥३८०३॥

तेषां कृते मया देवि कथितं वीरसाधनम् ।
घटीबंधेन वस्त्रं वै मूलेन परिधाय च ॥३८०४॥

तद्बाह्येन पुनर्वस्त्रं मूलेनांगविलेपनम् ।
कृतोष्णीषश्च मूलेन सिंदूरेणोर्ध्वपुंड्रकम् ॥३८०५॥

इष्टदेवं गुरुं नत्वा यात्राप्रहरमध्यतः ।
कार्या च साधकैः सार्धं हृदि मंत्रं परामृशन् ॥३८०६॥

अक्षुब्धो भुक्तभोज्यस्तु यदि स्याद् वीरसाधकः ।
दिव्यः पीत्वा पशुस्तत्राभुक्त्वा साधनमाचरेत् ॥३८०७॥

अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
भौमवारे तमिस्रायां साधयेत् सिद्धिमुत्तमाम् ॥३८०८॥

उपचारं समादाय पीत्वामृतरसं तथा ।
सामिषान्नं गुडं छागं सुरां पिष्टकमेव च ।
नानाफलं च नैवेद्यं स्वस्वकल्पोक्तसाधितम् ।३८०९॥

योगिनीहृदये—

बल्यर्थं सामिषान्नं च गुडं छागं तथा मधु ।
पिष्टकं परमान्नं च पयो मूलं फलं तथा ॥३८१०॥

चितास्थाने समानीय सुहृद्भिः शस्त्रपाणिभिः ।
समानगुणसम्पन्नैः साधको गतभीः स्वयम् ।
न निरीक्षेच्चतुर्दिक्षु देवताध्यानतत्परः ॥३८११॥

भीतश्चेत् साधकस्तत्र चतुर्दिक्षु च साधकः ।
नो चेत् केवल एवासौ भैरवः परिकीर्तितः ॥३८१२॥

अक्षालितां चिताभूमिं कृत्वा साधकसत्तमः ।
प्रक्षालितां यदि प्रायः कारयेदस्थिसंचयम् ॥३८१३॥

सामान्यार्घं विधायाथ स्वस्तिवाचनपूर्वकम् ।
संकल्पयेत् ततो मंत्री देवांतं च स्वमुच्चरन् ॥३८१४॥

अस्त्रांतमूलमंत्रेण प्रोक्षणं यागभूमिषु ।
गुरुपादरजो ध्यात्वा गणेश वटुकं तथा ॥३८१५॥

योगिनीं मातृकां चैव वामपादपुरःसरम् ।
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः ॥३८१६॥

पिशाचाः सिद्धयक्षाश्च गंधर्वाप्सरसां गणाः ।
योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रियः ॥३८१७॥

सिद्धिदास्ते भवत्वत्र तथा च मम रक्षकाः ।
प्रणम्य मनुनानेन पुष्पांजलित्रयं क्षिपेत् ॥३८१८॥

श्मशानाधिपति पश्चाद् भैरवं कालभैरवम् ।
महाकाल यजेद् यत्नात् पूर्वादि दिक्चतुष्टये ॥३८१९॥

पाद्यादिभिश्च मंत्रज्ञो बलिं पश्चान्निवेदयेत् ।
शब्दबीजं च तत्पश्चात् श्मशानाधिपतत्परम् ॥३८२०॥

इममन्ते सामिषान्नं बलिं गृह्ण पदं ततः ।
गृह्ण गृह्णापय युगं विघ्ननिवारणं ततः ॥३८२१॥

कुरु सिद्धिं मे समुक्त्वा प्रयच्छ स्वाहयान्वितम् ।
ताराद्यमनुना देवि प्रथमो बलिरोरितः ॥३८२२॥

मायान्ते भैरवात् पश्चाद् भयानकपदं ततः ।
पूर्ववद् बलिमाहृत्य दक्षिणे बलिमाहरेत् ॥३८२३॥

हूमन्ते च महाकालात् पश्चात् पूर्ववदुद्धरेत् ।
पश्चिमे कालदेवाय प्रणवाद्येन कल्पयेत् ।
शब्दान्ते कालशब्दान्ते भैरवान्ते पदं ततः ॥३८२४॥

श्मशानाधिप इत्येवं पूर्ववच्चोत्तरे हरेत् ।
चितामध्ये ततो दद्याद् बलित्रयमनुत्तमम् ॥३८२५॥

कालरात्रि महाकालि कालिके घोरनिस्वने ।
गृहाणेमं बलिं मातर्देहि मे सिद्धिमुत्तमाम् ।
हूँ कालिकायै स्वाहेति मंत्रेणानेन देशिकः ॥३८२६॥

कालिकायै बलिं दत्वा भूतनाथाय दापयेत् ।
शब्दान्ते भूतनाथांते श्मशानाधिप इत्यपि ॥३८२७॥

हूं सर्वगणनाथाय श्मशानाधिप इत्यपि ।
प्रणवाद्येन मंत्रेण दापयेद् वलिमुत्तमम् ।
ततश्चितापश्चिमतः एकीकृत्यास्थिसंचयम् ॥३८२८॥

ॐ ह्रीं आधारशक्तये नम इत्यमुना पुनः ।
पंचगव्येन संप्रोक्ष्य भूर्जे वा वटपत्रके ॥३८२९॥

ह्सौरिति लिखेत् मंत्रं स्थापयेत् तत्र तत्पुनः ।
कंवलाद्यासनं तत्र विन्यस्याधारशक्तये ॥३८३०॥

नम इत्यमुना तत्र ह्रीमाद्यां च प्रपूजयेत् ।
वीरार्दनेन देवेशि उपविश्यासने ततः ॥३८३१॥

अस्यायमर्थ.—भूर्जपत्रादौ तत्तत्कल्पोक्तपीठमत्रं लिखित्वा, तत्र व्याघ्रचर्मादि-पीठमास्तीर्य तत्र वीरासनक्रमेणोपविश्य वीरार्दनमंत्रेण चतुर्दिक्षु रक्षा कुर्यात् । वीरार्दनमंत्रस्तु—

कूर्चबीजद्वयं देवि मायायुग्मं ततः परम् ।
कालिके घोरदंष्ट्रे च प्रचण्डे चण्डनायिके ॥३८३२॥

दानवान् दारयेत्युक्त्वा हतेति द्वितयं ततः ।
परवीरं महाविघ्नं छेदय द्वितयं ततः ॥३८३३॥

वर्मास्त्रान्ते द्विठान्तोऽयं वीरार्दनमनु मंतः ।
अनेन मंत्रितं लोष्ठं दशदिक्षु विनिक्षिपेत् ॥३८३४॥

तन्मध्ये भैरवो भूत्वा न विघ्नैः परिभूयते ।
यदि प्रमादाद् देवेशि साधको भयविह्वलः ॥३८३५॥

ततस्तैस्तैः सुहृद्वर्गै रक्षितो नाभिभूयते ।
अर्केन्दुसितवाट्यालतूलैर्निर्मितवर्त्तिकम् ॥३८३६॥

गर्त्ते प्रदीपं संस्थाप्य अस्त्रं तत्र प्रपूजयेत् ।
हते तस्मिन् महादीपे विघ्नैश्च परिभूयते ॥ ३८३७॥

अतः संरक्षयेद् देवि कुलदीपं प्रयत्नतः ।
संकल्पं च ततः कुर्याद् यथाविधि विधानतः ॥ ३८३८॥

प्रणवं तत् सदद्येह मासपक्षतिथीरपि ।
गोत्राद्यमुकशर्माहमस्यां रात्रौ ततोऽमुक ॥३८३९॥

मंत्रस्य सिद्धिकामोऽहं चिताधिकरणं जपम् ।
करिष्ये त्वेवमथ च संकल्प्य सुसमाहितः ॥३८४०॥

तत्तत्कल्पविधानेन भूतशुद्ध्यादिकं चरेत् ।
षोढां वा चेतरान्वापि विन्यस्य पूजयेत् ततः ॥३८४१॥

यामले च—

ततः पंचोपचारेण पुरतो देवतां यजेत् ।
निमील्य चक्षुषी पश्चाद् देवं ध्यात्वा मनुं जपेत् ॥३८४२॥

एकाक्षरो यदि भवेद् दिक्सहस्रं ततो जपेत् ।
द्व्यक्षरे चाष्टसाहस्रं त्र्यक्षरे चायुतार्धकम् ॥३८४३॥

ततः परं तु मन्त्रज्ञो गजान्तकसहस्रकम् ।
गजातकसहस्रकमष्टोत्तरसहस्रकम् ।
निशार्द्धात्तु समारभ्य उदयान्तं समाचरेत् ॥३८४४॥

यद्यसह्यभयं नेत्रे कर्णे वस्त्रेण बंधयेत् ।
ततोऽर्धरात्रपर्यन्तं यदि किंचिन्न लक्ष्यते ।
जयदुर्गाख्यमनुना तेनैवार्घं च सर्षपान् ॥३८४५॥
क्षिपेदिति शेष.।

जयदुर्गामन्त्रस्तु—

प्रणवं च ततो दुर्गे युगलं रक्षिणीति च ।
स्वाहान्तो दशवर्णोऽयं जयदुर्गामहामनुः ॥३८४६॥

ॐ तिलोऽसि सोमदैवत्यो गोसवस्तृप्तिकारकः ।
पितृणां स्वर्गदाता त्वं मर्त्यानां मम रक्षकः ॥३८४७॥

भूतप्रेतपिशाचानां विघ्नेषु शांतिकारकः ।
इति क्षिप्त्वा तिलांस्तत्र चतुर्भागैः शिवादितः ॥३८४८॥

शिवादित ईशानादित एकैक भागं चतुर्दिक्ष्वत्यर्थ. ।

ततः सप्तपदं गत्वा पुनस्तत्रैव संविशेत् ।
देवीं संपूज्य गतभीः प्रजपेच्च मनुं ततः ॥३८४९॥

तावच्चैव जपेद् देवि यावत् सिद्धिः प्रजायते ।
भयं तु स्वप्नवद् हेयं परेऽह्नि शेषमाचरेत् ॥३८५०॥

वरं वरय इत्युक्ते साधकस्थिरमानसः ।
सत्यं च कारयित्वा तु वरयेद् वरमुत्तमम् ॥३८५१॥

जपादौ तु बलिं दत्वा पश्चादपि बलिं हरेत् ।
जपान्ते जपमध्ये वा देहि देहोति भाषिते ॥३८५२॥

तदापि च बलिं दद्यान्महिषं वापि छागलम् ।
यदा बलिं प्रार्थयते नरं कुंजरमेव वा ॥?८५३॥

दिनान्तरे प्रदास्यामि स्वीकृत्य स्वगृह व्रजेत् ।
अपरेऽह्नि ततो दद्यात् पिष्टेन नरकुंजरान् ॥३८५४॥

पिष्टेन यवोद्भवेन धान्योद्भवेन वेत्यर्थ. ।

यच्च तंत्रान्तरे—

यवक्षोदमयं वापि धान्योद्भवमयं च वा ।
चन्द्रहासेन विधिवत् तन्मंत्रेण च घातयेत् ॥३८५५॥

येषां च यजमानोऽहं ते गृह्णन्तु बलिं त्विमम् ।
गृहं गच्छेत् स्वसुहृदा सार्धं संहृष्टमानसः ॥३८५६॥

परेऽह्नि नित्यमाचार्यः पंचगव्यं पिबेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पंचविंशतिसंख्यकान् ॥३८५७॥

सप्तपंचविहीनान् वा क्रमेणैव दशावधि ।
भुक्त्वा च बांधवैः सार्धं निवसेदुत्तमस्थले ॥३८५८॥

समाप्य साधनं देवि दक्षिणां विभवावधि ।
गुरवे गुरुपुत्राय तत्पत्न्यै वा निवेदयेत् ।
सम्यक् सिद्धैकमंत्रस्य नासाध्यं विद्यते क्वचित् ॥३८५९॥

इति चितासाधनम् ।

अथ शवसाधनम्—

तत्र स्थाननियममाह भावचूडामणौ—

शून्यागारे नदीतीरे पर्वते निर्जने वने ।
बिल्वमूले श्मशाने वा तत्समीपे रणस्थले ॥८३६०॥

अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
भौमवारे तमिस्रायां साधयेत् सिद्धिमुत्तमाम् ॥३८६१॥

मांसभक्तं च बल्यर्थं धूपदीपादिकं तथा ।
तिलाः कुशाः सर्षपाश्च स्थापनीयाः प्रयत्नतः ॥३८६२॥

तथा च वीरतंत्रे—

पूर्वोक्तमुपहारादि समादाय तु साधकः ।
साधयेत् स्वहितां सिद्धिं साधनस्थानमाश्रितः ॥३८६३॥

घटीबंधादिसंयुक्तो सिंदूरांकितभालकः ।
आवेक्षकैः परिवृतः सार्धप्रहरतः पुनः ॥३८६४॥

सामान्यार्घं विधायाथ पूर्वाशाभिमुखः सुधीः ।
फडंतं मूलमुच्चार्य पंचगव्येन प्रोक्षयेत् ॥३८६५॥

भूमिं गुरुं गणेशं च योगिनीं वटुकं तथा ।
पूर्वाद्याशासु संपूज्य नमस्कृत्य पुनस्तथा ॥३८६६॥

लिखेद् वीरार्दनं भूमौ पूर्ववत् सुसमाहितः ।
वीरार्दनांकिते चात्र मायामोहौ न विद्यते ॥३८६७॥

ये चात्रेत्यादिमंत्रेण भूमौ पुष्पाञ्जलित्रयम् ।
श्मशानाधिपतीनां तु पूर्ववद् बलिमाहरेत् ॥३८६८॥

अघोराख्येन मंत्रेण बलिसाधनमाचरेत् ।
सुदर्शनेन वा रक्षा उभाभ्यां वा प्रकल्पयेत् ॥३८६९॥

माया स्फुरद्वयं भूयः प्रस्फुरद् द्वितयं पुनः ।
घोरघोरतरेऽत्यन्ते तनुरूपपदं पुनः ।
चटयुग्मं तदन्ते स्यात् प्रचटद्वितयं ततः ॥३८७०॥

कहयुग्मं वमद्वन्द्वं ततो बंधयुगं पुनः ।
घातय द्वितयं वर्म फडन्तः समुदाहृतः ॥३८७१॥

पंचाशदेकवर्णोऽयमघोरास्त्रमहामनुः ।
हालाहलं समुद्धृत्य सहस्रारस्वरूपकम् ॥३८७२॥

वर्मास्त्रांतं महामंत्रं कीर्तितं सुदर्शनस्य वै ।
मंत्रांते रक्ष रक्षेति हृदि हस्तं निधाय च ॥३८७३॥

कृत्वात्मरक्षां प्रपठन् त्रिवारं साधकोत्तमः ।
भूतशुद्ध्यादि षोढान्तं न्यासजालं विधाय च॥३८७४॥

जयदुर्गाख्यमंत्रेण सर्षपान् दिक्षु निक्षिपेत् ।
तिलोऽसीति च मंत्रेण तिलानपि विनिक्षिपेत् ॥३८७५॥

यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोमृतम् ।
रज्जुविद्धं सर्पदष्टं चाण्डालं चाभिभूतकम् ॥३८७६॥

तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम् ।
पलायनविशून्यं च संमुखे रणवर्त्तिनम् ॥३८७७॥

शवमेवंविधं प्रोक्तं तदन्यच्च विवर्जयेत् ।
स्वेच्छामृतं द्विवर्षं च वृद्धं स्त्रियं द्विजं तथा ॥३८७८॥

अन्नाभावमृतं कुष्ठं सप्तरात्रोर्ध्वगं तथा ।
एवं चाष्टविधं त्यक्त्वा पूर्वोक्तान्यतमं शवम् ।
गृहीत्वा मूलमंत्रेण पूजास्थाने समानयेत् ॥३८७९॥

कालीतन्त्रेऽपि—

अव्यक्तलिंगं कुष्ठं वा वृद्धं भिन्नं शवं त्यजेत् ।
दुर्भिक्षेण मृतं वापि तथा पर्युषितं शवम् ॥३८८०॥

स्त्रीजनं चेदृश रूपं सर्वथा परिवर्जयेत् ।
ब्राह्मणं गोमयं त्यक्त्वा साधयेद् वीरसाधनम् ॥३८८१॥

महाशवाः प्रशस्ताः स्युः प्रधाने वीरसाधने ।
क्षुद्राः प्रयोगकर्तृणां प्रशस्ताः सर्वसिद्धये ।
चाण्डालाद्यभिभूतं वा शीघ्रं सिद्धिफलप्रदम् ॥३८८२॥

वीरतन्त्रे, भावचूडामणौ च—

प्रणवाद्यस्त्रमंत्रेण शवस्य प्रोक्षणं चरेत् ।
प्रणवं कूर्चबीजं च मृतकाय नमस्तु फट् ॥३८८३॥

पुष्पाञ्जलित्रयं दत्वा प्रणमेत् स्पर्शपूर्वकम् ।
रे वीर परमानन्द शवानन्द कुलेश्वर ।
आनन्दभैरवाकार देवीपर्यंकशंकर ॥३८८४॥

वीरोऽहं त्वां प्रपद्यामि उत्तिष्ठ चण्डिकार्चने ।
प्रणम्यानेन मन्त्रेण क्षालयेत् तदनतरम् ॥३८८५॥

तारं शब्दं च मृतकाय नमोऽन्तं समुच्चरन् ।
शवस्नानस्य मंत्रोऽयं तत् स्नानं गंधवज्जलैः ॥३८८६॥

संप्रोक्ष्य धूपैः संधूप्य गंधादि प्रविलिप्य च ।
रक्ताक्तो यदि देवेशि भक्षयेत् कुलसाधकम् ॥३८८७॥

गत्वा शवस्य सान्निध्यं धारयेत् कटिदेशतः ।
यद्युपद्रावयेदस्य दद्यात् निष्ठीवनं मुखे ॥३८८८॥

पुनः प्रक्षालितं कृत्वा जपस्थानं समानयेत् ।
कुशशय्यां परिस्तीर्य तत्र संस्थापयेल् शवम् ॥३८८९॥

एलालवंगकर्पूरजातीखदिरसार्द्रकैः ।
तांबूलं तन्मुखे दत्वा शवं कुर्यादधोमुखम् ॥३८९०॥

तत् पृष्ठं चन्दनेनापि प्रलिप्य प्रयतः शुचिः ।
बाहुमूलादिकट्यंतं चतुरस्रं विभावयेत् ॥३८९१॥

मध्ये पद्मं चतुर्द्वारं दलाष्टकंसमन्वितम् ।
पीठमंत्रं लिखेत् तत्र तत्तत् कल्पविधानतः ॥३८९२॥

ततश्चैणेयमजिनं कंबलांतरितं न्यसेत् ।
द्वादशांगुलमानेन यज्ञकाष्ठानि दिक्षु च ॥३८९३॥

संस्थाप्य पूजयेत् तत्र इन्द्रादि दशदेवताः ।
विषमिन्द्रपदं प्रोच्य सुराधिपतये ततः ।
इमं बलिं गृह्ण युग्मं गृह्णापय युगं ततः ॥ ३८९४॥

विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छ ठद्वयम् ।
अनेन मनुना पूर्वं बलिं दद्याच्च सामिषम् ॥३८९५॥

स्वस्वनामादिकं दत्वा पूर्ववद् बलिमाहरेत् ।
सर्वेषां लोकपालानां ततः साधकसत्तमः ॥३८९६॥

शवाधिष्ठातृभूतेभ्यो बलिं च सुरया सह ।
चतुःषष्टियोगिनीभ्यो डाकिनीभ्यो बलिं दिशेत् ॥३८९७॥

पूजाद्रव्यं सन्निधौ च दूरे चोत्तरसाधकम् ।
संस्थाप्यासनमभ्यर्च्य स्वमन्त्रान्ते त्रपां ततः ॥३८९८॥

फडित्यनेन मंत्रेण तत्राश्वारोहणं विशेत् ।
कुशान् पादतले दत्वा शवकेशान् प्रसार्य च ॥३८९९॥

दृढं निबध्य जुटिकां कृतसंकल्पसाधकः ।
शवोपरि समारुह्य प्राणायामं विधाय च ॥३९००॥

वीरार्दनेन मंत्रेण दिक्षु लोष्टान् समाक्षिपेत् ।
ततो देवं च संपूज्य उपचारैः सुविस्तरैः ॥३९०१॥

शवास्ये विधिवद् देवि देवताप्यायनं चरेत् ।
उत्थाय संमुखे स्थित्वा पठेद् भक्तिपरायणः ॥३९०२॥

वशो मे भव देवेश ममामुकपदं ततः ।
सिद्धिं देहि महाभाग भूताश्रमपदांवर ॥३९०३॥

मूलं समुच्चरन् मत्री शवपादद्वयं ततः ।
पट्टसूत्रेण बध्नीयात् तदोत्स्थातुं न शक्यते ॥३९०४॥

भीम भीरु भयाभाव भव्यलोचन भावुक ।
त्राहि मां देवदेवेश शवानामधिपाधिप ॥३६०५॥
इति पादतले तस्य त्रिकोणं चक्रमुल्लिखेत् ।
तदोत्थातुं न शक्नोति शवोऽपि निश्चलो भवेत् ॥३६०६॥
अथ स्वमूलमंत्रं च संस्मरन् साधकोत्तमः ।
उपविश्य पुनस्तस्य बाहू निःसार्य पार्श्वयोः ।
हस्तयोः कुसुमांस्तीर्य पादौ तत्र निधापयेत् ॥३६०७॥
ओष्ठौ तु संपुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ।
सदा देवीं हृदि ध्यात्वा मौनी तु जपमाचरेत् ॥३६०८॥
श्मशानप्रोक्तसंख्याभि र्जपं कुर्यात् कुलेश्वरः ।
अथवाऽऽरंभकालात्तु यावच्चोदयते रविः ॥३६०६॥
यद्यर्धरात्रिपर्यन्तं यदि किंचिन्न लक्षते ।
तदा पूर्ववदर्घ्यादि सप्तपादगतानि च ॥३६१०॥

पूर्ववत् चितासाधनोक्तवत् । अर्घ्यं तिलसर्षपविकिरणं सप्तपादगमनं च । जयदुर्गामंत्रेण तिलोसिमंत्रेणेति ।

कृत्वोपविश्य तत्रैव जपं कुर्यादनन्यधीः ।
चलासनाद् भयं नास्ति भये जाते वदेत् ततः ॥३६११॥
यत् प्रार्थयसि देवेशि दातव्यं कुंजरादिकम् ।
दिनान्तरे प्रदास्यामि स्वनाम कथयस्व मे ॥३६१२॥
इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत् ।
पुनश्चेन् मधुरं वक्ति वक्तव्यं मधुरं ततः ॥३६१३॥
तदा सत्यं कारयित्वा वरं संप्रार्थयेत् ततः ।
यदि सत्यं न कुर्याच्च वरं वा न प्रयच्छति ।
तदा पुनर्जपेद् धीमानेकाग्रं मानसं जपेत् ॥३६१४॥

अस्यार्थः—यदि जपकाले आकाशगत्या कुंजरादिकं प्रार्थयेत् तदा दिनान्तरे दास्यामीति मम स्थाने स्वनाम कथयेत्युक्त्वा पुनर्जपेत् । यदि स्वनाम मधुरं कथयति तदा अमुक कार्यं सत्य कुरु, कृते सत्ये वरं प्रार्थयेत् । यदि सत्यं न करोति वरं वा न प्रयच्छति तदा पुनर्जपेदिति ।

नररूपं विना तत्र देवोऽपि नोपसर्पति ।
यत्नतस्तेन बोद्धव्यं नरो वा देवयोनयः ॥३९१५॥
माता मातुः स्वसा वापि मातुलानी तथैव च ।
आगत्य विघ्नं कुरुते मायया साघविग्रहम् ॥३९१६॥
उत्तिष्ठ वत्स ते कार्यं सर्वं जातं न संशयः ।
प्रभातसमयो जातस्त्वत् पिता क्रोशते गृहे ॥३९१७॥
प्रायो मत्सरिणो लोका राजानो दंडधारिणः ।
कदाचित् केनचित् दृष्टस्तदा किं ते भविष्यति ॥३९१८॥
इत्यादि विविधै र्वाक्यै र्न जपं परिसंत्यजेत् ।
मृताः पितृगणास्तत्र दूरदेशनिवासिनः ॥३९१९॥
बांधवास्तत्र आयान्ति देवरूपधरास्तथा ।
स्त्रीपुत्रसेवकादींश्च गृहीत्वा नीयते परैः ॥३९२०॥
वदन्ति पुत्रकाः सर्वे भ्रातरो निजसेवकाः ।
निजकांतांगसंस्पर्शं वस्त्राद्याभरणादिकम् ॥३९२१॥
गृहीत्वा नीयते पत्नी पालकैस्तद् भयं त्यजेत् ।
दिवसे यत्तु वा शंका सैव तत्र प्रजायते ॥३९२२॥
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते ।
स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान् ॥३९२३॥
वरं गृह्णेति शब्दं वै त्रिवारान्ते वरं लभेत् ।
साधुनासाधुना वापि योषिच्चेत् वरदायिनी ॥३९२४॥
तदा वीरपतेस्तस्य किं न सिध्यति भूतले ।
निष्पापपुरुषश्चैव कुले चैव तु संस्कृतः ॥३९२५॥
असंस्कृतवरा देवि पापयुक्ता न संशयः ।
संमुखेऽसंमुखे वापि संस्कृतं वक्ति चापरम् ॥३९२६॥
सैव देवी न संदेहो स देवो भैरवः स्वयम् ।
न चेद् देवी भवेच्चैव मायापुटितविग्रहात् ॥३९२७॥

वरयेत् न वरं तत्र न वरं प्रवदेत् क्वचित् ।
स चेत् संस्कृतमाख्यानं वक्ति वक्तव्यमीदृशम् ॥३९२८॥

न चेत् स्वयं लौकिकोक्त्या वरं ग्राह्यं निराकुलम् ।
अथवा उत्कटं किंचित् लभ्येताप्यात्मनो हितम् ।
शब्दो वा जायते सम्यगमृतं वापि लभ्यते ॥३९२९॥

विचार्य तद्गृहीतव्यमेवं दिक् परिकीर्तितः ।
देवाकृतयो बहुधा नराद्याः कृतयः क्वचित् ॥३९३०॥

अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्वचित् ।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ॥३९३१॥

एतत् शास्त्रप्रसंगेन कृत्वा कुटिलविग्रहान् ।
पुत्रो भूत्वा वारयेत् तं नारी भूत्वा विमोहयेत् ॥३९३२॥

तस्मात् तत्त्वपरो वीरो विचारे यत्नमाचरेत् ।
सत्ये कृते वरं लब्ध्वा संत्यजेच्च जपादिकम् ॥३९३३॥

फलं जातमिति ज्ञात्वा जुटिकां मोचयेत् ततः ।
शवं प्रक्षाल्य संस्नाप्य मोचयेत् पादबंधनम् ॥३९३४॥

पादचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत् ।
शवं जलेऽथवा गर्ते प्रक्षिप्य स्नानमाचरेत् ।
ततस्तु स्वगृहे गत्वा बलिं दत्वा दिनांतरे ॥३९३५॥

बलिमंत्रश्च—

अग्रिमरात्रौ तु येषां देवाना यजमानोऽहं ते गृह्णन्तु मया दत्तं बलिमिमम् ।

अथ यै र्याचितश्चाश्वनरकुंजरशूकरान् ।
दत्वा पिष्टमयानेव कर्तव्यं समुपोषणम् ॥३९३६॥

तत्रान्तरे—

यवक्षोदमयं वापि शालिक्षोदमयं तु वा ।
चन्द्रहासेन विधिवत् तत्तन्मंत्रेण घातयेत् ॥३९३७॥

परेऽह्नि नित्यमाचार्यः पंचगव्यं पिबेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पंचविंशतिसंख्यकान् ॥३९३८॥

सप्तपंचविहीनान् वा क्रमेणैव दशावधि ।
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमे स्थले ॥३६३६॥

यदि न स्यात् घिप्रभोज्यं तदा निर्धनतां व्रजेत् ।
यदा चेन् निर्धनत्वं स्यात् तदा देवी प्रकुप्यति ॥३६४०॥

त्रिरात्रमथ षड्रात्रं नवरात्रं तु गोपयेत् ।
स्त्रीशय्यां यदि गच्छेत्तु तदा व्याधिं विनिर्दिशेत् ॥३६४१॥

गीतं श्रुत्वाथ वधिरो निश्चक्षुर्नृत्यदर्शनात् ।
यदि वक्ति दिने वाक्यं तदास्य मूकता भवेत् ॥३६४२॥

पंचदशदिनांता हि देहे देवस्य संस्थितिः ।
न स्वीकुर्यात् गंधपुष्पं बहिर्याति यदा तदा ॥३६४३॥

तदा वस्त्रं परित्यज्य गृह्णीयाद् वसनांतरम् ।
गोब्राह्मणानां देवानां निंदां कुर्यान् न जातुचित् ।
दुर्जनं प्रतित क्लीबं न स्पृशेच्च कदाचन ॥३६४४॥

देवगोब्राह्मणादींश्च प्रत्यहं तु स्पृशेत् शुचिः ।
प्रातर्नित्यक्रियान्ते तु बिल्वपत्रोदकं पिबेत् ॥३६४५॥

ततः स्नायात् तु तीर्थादौ प्राप्ते षोडशवासरे ।
स्वाहांतं मूलमुच्चार्य तर्पयामि नमः पदम् ॥३६४६॥

एवं शतत्रयादूर्ध्वं देवान् सतर्पयेज्जलैः ।
मुनितर्पणशून्यस्य न स्याद् देवस्य तर्पणम् ॥३६४७॥

तृप्तिरित्यर्थः ।

इत्यनेन विधानेन सिद्धिं प्राप्नोति निश्चितम् ।
इह भुक्त्वा वरान् भोगानंते याति हरेः पदम् ॥३६४८॥

असांगं सांगमपि वा निष्फलं सफलं च वा ।
कृत्वा साधनमेवैतत् शक्तेः प्रियतरो भवेत् ॥३६४९॥

शवाभावे श्मशाने वा कर्तव्या वीरसाधना ।
यो भावो यस्य वै प्रोक्तस्तै र्भावै र्यदि नार्चयेत् ॥३६५०॥

ईदृशक्रमयोगेन भ्रष्टो भवति साधकः ।
नोपदिशेत् तत्र भावं न पूजां तत्र संदिशेत् ॥३९५१॥

श्मशानान्तं गृहीतस्तु तावत् शुद्धिः प्रजायते ।
ततश्च दक्षिणां दत्वा कुर्याच्छिद्रावधारणम् ॥३९५२॥

इति शवसाधनम् ।

अन्यच्च शक्तिसगमे—

अत्रैव मृतके देवि पंचवर्षमिते शिवे ।
इयं च साधना कार्या महावीरमतोदिता ॥३९५३॥

तत्रैवं च विशेषो हि यथावदभिधीयते ।
चतुष्पथे नदीतीरे श्मशाने वापि पार्वति ॥३९५४॥

ततो बलिप्रयोगार्थं पिष्टं पुष्पाण्यनेकधा ।
मधुमाषमांसगुडमहिषच्छागकुंजरैः ॥३९५५॥

सामिषान्नं च संगृह्य गोदुग्धं गृह्य वै तथा ।
सार्धयामोत्तरं रात्रौ गच्छेद् वीरसमावृतः ॥३९५६॥

अधोमुखं तु तं कृत्वा प्रक्षाल्य विधिना सुधीः ।
हूं ह्रां ह्रीमिति तदावाहयेदुच्चरन् मनुम् ॥३९५७॥

मायाबीजेन यजनं हंबीजेनोपवेशनम् ।
तस्योपरि महेशानि पूर्वोक्तक्रमयोगतः ॥३९५८॥

देवीध्यानादिकं कृत्वा ततो बल्यादिकं चरेत् ।
यथोक्तेन च द्रव्येण गोदुग्धेनोत्सृजेद् बलिम् ॥३९५९॥

श्मशानजंभदेवाय भैरवाय ततः परम् ।
कालभैरवनाम्ने च कालिकायै पुनस्तथा ॥३९६०॥

पूर्वादि दिक्षु संपूज्य पाद्यगंधप्रसूनकैः ।
अनेन मनुना दद्याद् बलिं सर्वत्र साधकः ॥३९६१॥

प्रणवं कूर्चमुच्चार्य श्मशानेतिपदं ततः ।
जंभदेव इमं प्रोक्त्वा सामिषान्नं बलिं ततः ॥३९६२॥

गृह्ण गृह्णापय युगं सर्वविघ्ननिवारणम् ।
कृत्वा सिद्धिं प्रयच्छेति द्वन्द्वं स्वाहा ततो वलिम् ॥३९६३॥
श्मशानजंभदेवाय दत्वा च दक्षिणे ददेत् ।
तारं मायां भैरवान्ते भयानकपदात् पुनः ॥३९६४॥
श्मशानाधिपशब्दान्ते इममादि च पूर्ववत् ।
ततश्च पश्चिमे भागे प्रणवं कूर्चमुच्चरन् ॥३९६५॥
कालभैरवमुच्चार्य श्मशानाधिप इत्यपि ।
इममित्यादि देवेशि पूर्ववत्तु समुच्चरेत् ॥३९६६॥
तथोत्तरे च प्रणवं मायामुच्चार्य साधकः ।
श्मशानवासिन्युच्चार्य महाभीमे पद वदेत् ॥३९६७॥
कालि घोरस्वनेऽन्ते च गृहाणेमं बलिं पुनः ।
अनुत्तमां तथा सिद्धिं देहि स्वाहान्तगो मनुः ॥३९६८॥
इत्थं वलिचतुष्कं तु निर्भयः साधकाग्रणीः ।
ततो यथोक्तविधिना दिक्पालेभ्यो बलिं हरेत् ॥३९६९॥
स्वस्वविद्यांगदेवेभ्यो वलिं दत्वा प्रयत्नत. ।
वीरार्दनाघोरयोश्च चक्रपाशुपतयोस्तथा ॥३९७०॥
जयदुर्गेति देवेशि पंचमन्त्रांश्च पूर्ववत् ।
वीरसिद्धिक्रमे देवि ज्ञेया गुरुमुखादिमे ॥३९७१॥
यथोक्तेन विधानेन प्राणायामं षडंगकम् ।
कृत्वा ध्यात्वा स्वेष्टदेवं मंत्रमुच्चारयन् शनैः ॥३९७२॥
अव्यग्रचित्तः प्रजपेत् निर्भयः साधकोत्तमः ।
एकाक्षरे दिक्सहस्रं द्व्यक्षरेऽष्टसहस्रकम् ॥३९७३॥
प्रजपेद् देवदेवेशि त्र्यक्षरेष्वयुतार्धकम् ।
अष्टोत्तरसहस्रं च महामंत्रे प्रकीर्तितम् ॥३९७४॥
देवता यदि प्रत्यक्षा तदैव जपमुत्सृजेत् ।
देवं संपूज्य विधिवत् तदा देहीति संवदेत् ॥३९७५॥

देववाणीति सा देवी तदा छागबलिं हरेत् ।
तदभावे महेशानि गुडपायसयो र्बलिः ॥३९७६॥

वरं गृहीत्वा देवेशि ह्यन्यत् पूर्ववदाचरेत् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥३९७७॥

कुजे वा शनिवारे वा नरमुण्डं समाहृतम् ।
पंचगव्येन मिलितं चंदनाद्यं विशेषतः ॥३९७८॥

निक्षिप्य भूमौ हस्तार्धमानतः काननांतरे ।
तत्र तद्दिवसे रात्रौ सहस्रं यदि साधकः ॥३९७९॥

एकाकी प्रजपेन्मंत्रं स भवेत् कल्पपादपः ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
शवमानीय तद्वारे तेनैव परिखन्यते ॥३९८०॥

तद्दिनात् तद्दिनं यावत् तावदष्टोत्तरं शतम् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥३९८१॥

तद्वारे शनिमगलवारे तेनैव प्रकारेण हस्तार्धमानत इति प्रत्यहमष्टोत्तरगत जपेदित्यनुषग.।

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥३९८२॥

सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्तो निरातंकः सर्वसिद्धीश्वरो भवेत् ॥३९८३॥

अत्र सर्वत्र होमादिब्राह्मणभोजनातं सर्वमपि सहैव कार्यम् ।

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादि नवम्यन्तं विशेषतः ॥३९८४॥

भक्तितः पूजयित्वा तु रात्रौ तावत् सहस्रकम् ।
जपेदेकस्तु विजने केवलं तिमिरालये ॥३९८५॥

अष्टम्यादि नवम्यन्तमुपवासपरो भवेत् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥३९८६॥

तावत् षट्सहस्रं जपेदष्टमीनवम्योरुपवास कुर्यादित्यर्थं ।

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
आकृष्णायाः कुलागारे लिखित्वा मंत्रमेव च ॥३९८७॥
संपूज्य तत्र संस्कारं कृत्वा तस्यै निवेद्य च ।
किंचिज्जप्त्वा मनुं नीत्वा देवताभावतत्परः ॥३९८८॥
तां विसृज्य नमस्कृत्य स्वयं सुप्यात्तु संगतः ।
प्रातः स्त्रीभ्यो बलिं दत्वा मंत्रसिद्धिर्न संशयः ॥३९८९॥

सस्कारं पंचमयागोक्तम् । अत्र पूजनमात्रं न सभोगोऽपीत्यवसेयम् ।

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टमीसंधिवेलायामष्टोत्तरलतागृहम् ॥३९९०॥
प्रविश्य मंत्री विधिना समभ्यर्च्य प्रयत्नतः ।
पूर्वोक्तकल्पमासाद्य पूजादिकमथाचरेत् ॥३९९१॥
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ।
तासां तु पत्रमूले च उप्त्वा संगृह्य मस्तके ।
महासिद्धि र्भवेत् सद्यो लतादर्शनपूजनात् ॥३९९२॥

अष्टमीसधिवेलाया अष्टमीनवम्यो सधिवेलायाम् । अष्टोत्तरलतागृहं वथासभवमष्टमपर्यन्ताना शक्तीना गृह मदनमंदिरम् । पूर्वोक्तं दूतीयागाख्य पत्रमूले वरागे । उप्त्वा बीज विन्यस्य तदेव बीजं मस्तके विन्यस्य तिलक कृत्वेत्यर्थः । इद तु वीरपरम् ॥

इति श्रीमदागमरस्ये सत्सग्रहे वीरसाधनकथन नाम
षोडश पटल. ॥१६॥ आदितश्चतुश्चत्वारिंशत् ।

## अथ सप्तदशः पटलः ।

अथ नवरात्रार्चा । तच्च शक्तिसगमे देवीवाक्यम्—

देवेश श्रोतुमिच्छामि नवरात्रविनिर्णयम् ।
नवरात्रे समायाते किं कर्तव्यं च तद् वद ॥
नवरात्रेति किं नाम कथं जातं किमात्मकम् ॥३९९३॥

शिव.—

नवशक्तिषु संजुष्टं नवरात्रं तदुच्यते ।
एकैव देवदेवेशी नवधा परिकीर्तिता ॥३९९४॥

प्रथमा शैलपुत्रीति द्वितीया ब्रह्मचारिणी ।
तृतीया चंद्रघण्टेति कूष्माण्डीति चतुर्थिका ॥३९९५॥
स्कन्दमाता पंचमी स्यात् षष्ठी कात्यायनी स्मृता ।
सप्तमी कालरात्रीति महागौरी तथाष्टमी ॥३९९६॥
नवमी देवदूतीति नवदुर्गाः प्रकीर्तिताः ।
शयन बोधनाख्यं च नवरात्रं द्विधा स्मृतम् ।
शयनं चैत्रमासीयमाश्विनस्थं तु बोधनम् ॥३९९७॥
उभौ चोपोष्य विधिवत् सर्वसिद्धिं लभेन्नरः ।
निराहारी फलाहारी ह्येकभक्तो दृढव्रतः ॥३९९८॥
नक्तंभोजी हविष्याशी भूत्वा देवीं समर्चयेत् ।
नवरात्रव्रताशक्तो नवनाथो भवेद् ध्रुवम् ॥३९९९॥
गौडकेरलकाश्मीरभेदात् तत् त्रिविधं स्मृतम् ।
अमायुक्ता न कर्तव्या प्रतिपत् कालिकार्चने ॥४०००॥

कालिकेत्युपलक्षणं देवीमात्रपरम् ।

अष्टम्यन्तं समाचर्य तदष्टम्यां तु होमयेत् ।
अर्धरात्रे समायाता मूलविद्धापि पार्वति ॥४००१॥
साष्टमी सर्वकार्याणां कर्त्री भवति निश्चितम् ।
होमपूजादिक तत्र कुर्याद् यत्नेन पार्वति ॥४००२॥
द्वितीयदिवसे चेत् सा तदैवोपोषणं चरेत् ।
प्रतिपत् स्वल्पमल्पा वा यदि न स्यात् परेऽहनि ॥४००३॥
अमायुक्ता तदा कार्या त्यक्त्वा षोडशनाडिकाः ।
घटिकाः षोडश त्याज्या आद्या प्रतिपदस्तु याः ॥४००४॥
कलशस्थापनं कुर्यात् कल्याणं जायते ध्रुवम् ।
यदा चित्रा भवेत् तत्र वैधृतिश्चापि वा भवेत् ॥४००५॥
तदा मुहूर्तेऽभिजिति स्थापनं कलशस्य हि ।
नवम्यां पारणं कुर्याद् दशम्यां तु विसर्जनम् ॥४००६॥

काश्मीराख्यक्रमं देवि शृणु यत्नेन पार्वति ।
नवरात्रं निराहारो निर्विकल्पो जितेन्द्रियः ॥४००७॥
अष्टमीनवमीसंधौ बलि र्देयो महेश्वरि ।
केरलाख्यक्रमे देवि निर्णयं नवरात्रजम् ॥४००८॥
तिथिक्षये तथा वृद्धौ यथोक्तेन च वर्त्मना ।
अष्टमीनवमीप्राप्तौ पूर्ववेधो न दुष्यति ॥४००९॥
अष्टम्यामर्धरात्रौ तु यत् किंचित् कुरुते नरः।
तत् तदक्षय्यमायाति नवदुर्गाप्रसादतः ॥४०१०॥
एकोत्तरप्रवृद्ध्या वा स्तोत्रपाठादिकं चरेत् ।
प्रथमेऽह्नि कृतं यावत् तावत् कुर्याच्च वा सुधीः ॥४०११॥
उदयास्तमयं जप्त्वा मंत्रसिद्धिमवाप्नुयात् ।
नवरात्रव्रते स्त्रीणां ऋतुयोगो यदा भवेत् ॥४०१२॥
सैव देवी न संदेहस्तां पूज्य विजयी कलौ ।
ताम्बूलागरुकस्तूरीदिव्यांवरविभूषणैः ॥४०१३॥
शक्तीनां नवरात्रादौ ताम्बूलभक्षणं सदा ।
सूर्योदयं समारभ्य यावत् सूर्योदयान्तरम् ॥४०१४॥
तावज्जप्त्वा निरातंकः सर्वसिद्धीश्वरो भवेत् ।
एकासनगतो भूत्वा नवरात्रं तु शाम्भवीम् ॥४०१५॥
मुद्रामालम्बयेद् देवि नवनाथाभिधो भवेत् ।
गुहायां मठिकायां वा पर्वते निर्जनेऽपि वा ॥४०१६॥
अधोमुखो वा देवेशि नवरात्रं निरम्बुभुक् ।
स्वमाच्छाद्य मृदा देवि तत्र संस्थापयेद् घटम् ॥४०१७॥
यवांकुरान् समारोप्य शाम्भवी मुद्रिकां चरेत् ।
दृढासनो वा शयनो यथोद्दिष्टं समाचरेत् ॥४०१८॥
कापालिकावधूतानां व्रतमेतन्मयोदितम् ।
आज्ञा भवति देवेशि तदैव पारणं चरेत् ॥४०१९॥

आज्ञा यदि न जायेत तदा ग्रामाधिपस्य च ।
देशाधिपस्य विप्रस्य पूजकस्य स्त्रियस्तथा ॥४०२०॥
आज्ञां गृहीत्वा च वरं प्राप्यान्ते पारणं चरेत् ।
भक्तप्रिया च श्रीदुर्गा स्वयमाज्ञां प्रयच्छति ॥४०२१॥
वीरशाक्तविधानेन चण्डदर्पव्रतं चरेत् ।
जिह्वां संत्रोत्स्य यत्नेन द्विवेदत्र्यंगुलां तथा ॥४०२२॥
पुनरायाति सा जिह्वा तेन सिद्धोश्वरो भवेत् ।
नवरात्रं समासाद्य महाष्टम्यां निशामुखे ।
देवीं संपूज्य यत्नेन संकल्पं कामनान्वितम् ॥४०२३॥
शिरःपुष्पं कर्तयित्वा पूर्णमध्यकनिष्ठतः ।
यंत्रे देवे निवेद्याथ शिवतुल्यो भवेद् ध्रुवम् ॥४०२४॥
पुनः शिरः समायाति महावीरवरस्य तु ।
अथवान्यप्रकारेण प्रयोगः कथ्यते शृणु ॥४०२५॥
नवरात्रं निराहारः श्रद्धाभक्तिसमन्वितः ।
अर्धरात्रे महाष्टम्यामंगुष्ठान् मस्तकावधि ॥४०२६॥
मांसं संकर्त्य कुंडे तु यथोक्ते होममाचरेत् ।
प्रत्यक्षा जायते देवि ह्येतद् हवनमात्रतः ॥४०२७॥
देवी देहं भवेत् तस्य नात्र कार्या विचारणा ।
अथवान्यप्रकारेण प्रयोगः कथ्यते शृणु ॥४०२८॥
नवरात्रं निराहारो गुरुभक्तो महाव्रती ।
कुंडं पुरुषमात्रं तु कृत्वा तत्र स्वयं विशेत् ॥४०२९॥
पंचपल्लवकाष्ठानां वह्निं तत्र समाचरेत् ।
अंगुष्ठाद् मस्तकान्तं तु स्वदेहं होमयेद् व्रती ॥४०३०॥
अग्निशय्यां च वा कृत्वा देवीं पश्यति निश्चितम् ।
नवरात्रं निराहारो गुरुभक्तो दृढव्रतः ।
वामांगुष्ठोपरि स्थित्वा वेदरात्रं महेश्वरि ॥४०३१॥

दक्षांगुष्ठोपरि तथा वेदरात्रं महेश्वरि ।
नवम्यां पारणं कुर्यात् बिल्वपिण्डं प्रदापयेत् ॥४०३२॥
जगत्त्रयं वशीकुर्याद् नात्र कार्या विचारणा ।
नवरात्रं निराहारो निर्विकल्पो दृढव्रतः ॥४०३३॥
कामबीजं साध्यनाम वशीकुर्विति चोद्धरेत् ।
स्वाहामुच्चार्य देवेशि प्रदीप्ते जाठरानले ॥४०३४॥
पत्रं पुष्पं फलं वापि भोजनं विविधं तथा ।
होमयेद् यत्नतो देवि यमुद्दिश्य वशं नयेत् ॥४०३५॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
गोमूत्राशी साधकेन्द्रो नवरात्रं महेश्वरि ॥४०३६॥
यं कंचिद् वै जपेन्मंत्रं नवम्यां होममाचरेत् ।
दशम्यां पारणं कुर्याद् गोमुखेन महेश्वरि ॥४०३७॥
देवतादर्शनं भूयाद् रात्रौ स्वप्ने न संशयः ।
व्रतांते ब्राह्मणांश्चैव कुमारीश्चापि भोजयेत् ॥४०३८॥
ग्रहणस्य पुरश्चर्या शृणु चन्द्रस्य वा रवेः ।
स्पर्शमुक्त्योः स्फुटत्वं च यस्मिन् काले प्रजायते ॥४०३९॥
स कालोऽक्षय्यरूपेण पुरश्चरणकर्मणि ।
दृष्टस्पर्शे पुरश्चर्या दृष्टमुक्तौ समापनम् ॥४०४०॥
चंद्रसूर्यग्रहे देवि ग्रासावधि विमुक्तितः ।
यावत् सख्यं मनु जप्त्वा तावद् होमादिकं चरेत् ॥४०४१॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यचन्द्रोपरागे तु नाभिमात्रे जले स्थितः ॥४०४२॥
ग्रासाद् विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः ।
तद्दशांशं होमयेच्च तर्पयेद् भोजयेत् तथा ॥४०४३॥
अनेन क्रमयोगेन सर्वसिद्धीश्वरो भवेत् ।
पंचांगी तु पुरश्चर्या जपहोमौ समौ स्मृतौ ॥४०४४॥

मलापकर्षणं स्नानं कृत्वा पूर्व विशालधीः ।
मुच्यमाने भवेद् दानं ग्रस्ते स्नानं प्रकीर्तितम् ॥४०४५॥

स्नानं मंत्रोदितं कृत्वा तर्पणं त्वधिकारतः ।
संध्यां तात्कालिकी कृत्वा विमोक्षान्तं जप चरेत् ॥४०४६॥

ऋतुस्नातां स्त्रियं ज्ञात्वा सूर्यचन्द्रग्रहान्तरे ।
पतिः पार्वणमासाद्य पिण्डं तस्यै प्रदापयेत् ॥४०४७॥

वंध्यापुत्रप्रदो योगः सर्वसिद्धिप्रदायकः ।
सूर्यग्रहे महेशानि काम्यहोमं चरेत् तु यः ॥४०४८॥

तर्पणं कुरुते यस्तु तस्य श्रीः सर्वतोमुखी ।
मार्जनं तु प्रकर्तव्यं सर्वदुःखप्रशान्तये ।
सूर्यग्रहे समायाते परिधि र्यदि वा भवेत् ॥४०४९॥

पारिभद्राभिधो योगः सर्वसाम्राज्यदायकः ।
अन्त्यदृष्टे दिशां दाहे मध्यग्रामे महेश्वरि ॥४०५०॥

मेघछन्ने मुक्तिहीने स्नानदानादिकं चरेत् ।
जपमात्रं विधातव्यं मध्यग्रासे तु पूर्ववत् ।
तारापीडग्रहे प्राप्ते तथा सूर्यग्रहेऽपि च ॥४०५१॥

जपादिकं विधातव्यं शक्तिपूजां ततश्चरेत् ।
सर्वसिद्धीश्वरो भूयान् नात्र कार्या विचारणा ॥४०५२॥

अस्मिन्नेव गुरुं पूज्य तोष्य सिद्धिमवाप्नुयात् ।
चंद्रसूर्योपरागे तु मेरुसाधनमाचरेत् ॥४०५३॥

दुष्टमंत्रोऽपि देवेशि शुद्धान्तःकरणो यती ।
स्नात्वा यथोक्तविधिना संपूज्य जगदंबिकाम् ॥४०५४॥

शिरःपुष्पं कर्तयित्वा देवतायै समर्पयेत् ।
देवतां पश्यति शिवे वरदानपरां ध्रुवम् ॥४०५५॥

सूर्योपरागे संप्राप्ते स्नात्वा प्रोक्तेन वर्त्मना ।
शक्तिमानीय तद्गात्रे न्यासजालं प्रविन्यसेत् ॥४०५६॥

मद्यै र्मांसैस्तथा मत्स्यै र्भगलिंगामृतैरपि ।
देवतां तत्र संपूज्य सांगां सावरणां शिवे ॥४०५७॥

तत्र जिह्वां प्रदत्वा तु जपात् त्रैकालविद् भवेत् ।
अतीतानागतज्ञानं वर्तमानं च पश्यति ॥४०५८॥

सूर्यग्रहे महेशानि वेश्यामानीय सादरम् ।
शक्तिं लिंगोपरि स्थाप्य जपेत् यत्नेन पार्वति ॥४०५९॥

त्रैलोक्यविजयी भूयान् नात्र कार्या विचारणा ।
सूर्योपरागे देवेशि स्नात्वा पूजां समाचरेत् ।
सांगां सावरणां पूज्य सबल्यन्तं महेश्वरि ॥४०६०॥

कुमारीपूजनं कृत्वा सर्वसिद्धीश्वरो भवेत् ।
सूर्योपरागे संप्राप्ते स्नात्वा पूज्य महेश्वरीम् ॥४०६१॥

तुलाब्रह्मांडदानादि यथाशक्त्या समाचरेत् ।
देवतायै तन्निवेद्य सर्वसिद्धीश्वरो भवेत् ॥४०६२॥

चंद्रग्रहे तु संप्राप्ते शवमानीय साधकः ।
शवासने जपेद् देवि ग्रासावधि विमुक्तितः ॥४०६३॥

सर्वसिद्धीश्वरो भूत्वा तदन्ते शिवतां व्रजेत् ।
सूर्योपरागे संप्राप्ते शुचिः पूर्वमुपोषितः ॥४०६४॥

ग्रासाद् विमुक्तिपर्यन्तं देहमांसानि होमयेत् ।
सर्वसिद्धीश्वरो भूत्वा देवतां पश्यति प्रिये ॥४०६५॥

सूर्यग्रहः शिवः प्रोक्तश्चंद्राख्यः शक्तिरुच्यते ।
सूर्यग्रहे शक्तिदीक्षां पशुदीक्षां न कारयेत् ॥४०६६॥

चंद्रग्रहे विष्णुदीक्षां पंचरात्रं न कारयेत् ।
चंद्रसूर्यग्रहे दीक्षा सर्वदीक्षा शुभा मता ॥४०६७॥

चंद्रग्रहे शक्तिदीक्षा सर्वसिद्धिप्रदायिनी ।
न वारतिथिऋक्षादि न मासनियमस्तथा ॥४०६८॥

दमनोत्सवश्रावण्यो ग्रंहणं यदि जायते ।
तत्र मंत्रः पुरश्चर्याविहीनोऽपि प्रसिद्ध्यति ॥४०६९॥

चंद्रसूर्यग्रहादेव नान्यः कालश्च सिद्धिदः ।
प्रमादाद् गलिते योगे वसुविप्रांश्च भोजयेत् ॥४०७०॥

यद् यदंगं विहीयेत तत् सांगे द्विजभोजनम् ।
अथवा द्विगुणं जापमंगपूर्तौ प्रकीर्तितम् ॥४०७१॥

द्वित्रिवेदबाणभेदं विप्रादीनां क्रमाज्जपः ।
इति संक्षेपतः प्रोक्तं स्तोत्रानुष्ठानमुच्यते ॥४०७२॥

सहस्रनामस्तोत्रेषु कवचेष्वपि पार्वति ।
अयुतं तु पुरश्चर्या स्तोत्रमात्रे प्रकीर्तिता ।
सोत्तमा रदसाहस्रो मध्यमा मानवी कला ॥४०७३॥

संख्या तासां समा ज्ञेयाऽयुतसंख्या मिता तथा ।
सहस्रान् न भवेन् न्यूना स्तोत्रादीनां पुरस्क्रिया ॥४०७४॥

एवं पुरस्क्रियां कृत्वा दशांशं हवनादिकम् ।
तर्पणं मार्जनं देवि तथा ब्राह्मणभोजनम् ॥४०७५॥

विप्रभोजनमेवात्र सर्वथा कारयेत् प्रिये ।
द्विजसंतोषणेनैव सर्वं सिद्ध्यति पार्वति ॥४०७६॥

स्तोत्रादीनामथो रूपं शृणु वक्ष्यामि तत्त्वतः ।
शिवदेव्योऽस्तु संवादो ब्रह्मरंध्रं प्रकीर्तितम् ॥४०७७॥

अन्ये श्लोकाः केशतुल्या ऋषिः शिर इतीरितम् ।
छंदो मुखं भवेद् देवि देवता हृदयं स्मृतम् ॥४०७८॥

बीजं गुह्यमिति प्रोक्तं शक्तिस्तु पद्युगे मता ।
सर्वांगकल्पनं देवि ह्यर्थवादः प्रकीर्तितः ॥४०७९॥

स्तोत्रमध्ये स्थितं यद् यत् तत्सर्वं स्तोत्ररूपकम् ।
एवं च देवदेवेशि स्तोत्ररूपं प्रकीर्तितम् ॥४०८०॥

तथैव कवचं देवि नामसाहस्रकं तथा ।
आद्योपांतं पठेद् देवि स्तोत्रांगं नैव हापयेत् ॥४०८१॥

अंगहीने भवेन् नाशः सर्वदा परमेश्वरि ।
फलस्तुत्यादिकं देवि गतिरित्यभिधीयते ॥४०८२॥

आद्योपांतं विना देवि फलमर्धं प्रकीर्तितम् ।
हवनं कवचादीनां शृणु गौडे च सांप्रतम् ॥४०८३॥

आद्योपांतं पठित्वा तु पश्चात्तु हवनं स्मृतम् ।
सहस्रे देवदेवेशि नामांते हवनं मतम् ॥४०८४॥

उपोद्धातोपसंहारे श्लोकांते हवनं मतम् ।
कवचादावपि शिवे मंत्रांते हवनं भवेत् ॥४०८५॥

उपक्रमोपसंहारे पूर्ववच्च प्रकीर्तितम् ।
आदौ पूर्णं तु संपठ्य तथैवांते महेश्वरि ।
मध्ये नामानि पठ्यानि पुरश्चर्या प्रकीर्तिता ॥४०८६॥

काश्मीराख्यं क्रमं देवि शृणु यत्नेन सांप्रतम् ।
स्त्रोत्रमावर्त्य संपूर्णं तदंते गणनां चरेत् ॥४०८७॥

संपूर्णक्रमयोगस्तु काश्मीराख्यः प्रकीर्तितः ।
संपूर्णहोमयोगस्तु कथितश्च प्रियंवदे ॥४०८८॥

मार्जनाभिषेचनं कर्म कुर्यादत्र महेश्वरि ।
अत्रैव केरलाख्ये तु किंचिद् भेदोऽस्ति पार्वति ॥४०८९॥

अनेनैव क्रमेणात्र कवचे होम ईरितः ।
सारूप्यं कवचाख्यं तु सायुज्यं स्तोत्रमीरितम् ॥४०९०॥

सान्निध्यं नामसाहस्रं त्रितयं परिकीर्तितम् ।
सालोक्या वा स्तुति देवि तस्मात् पूर्णं पठेत् सुधीः ॥४०९१॥

अयमेव महादेवि केरले परिकीर्तितः ।
पाठमात्रे त्विदं प्रोक्तं होमादौ परिकीर्तितम् ॥४०९२॥

कामरूपागमे होमः श्लोकांते कवचे चरेत् ।
अक्षोभ्यनिर्मितं यच्च कामरूपागमं स्मृतम् ॥४०९३॥

होमं च तर्पणं तद्वद् मार्जनं च तदंतकम् ।

तदतक श्लोकातकम् ।

तत् तत् स्तोत्रोक्तविधिना पुरश्चर्यादिकं चरेत् ।
कवचं वर्मरूपं स्यात् स्तोत्रं सहचरो भवेत् ॥४०९४॥

सहस्रनामस्तोत्रं तु सेनास्थानं प्रकीर्तितम् ।
पूजा दुर्गस्वरूपं स्यात् बलिदानं तु मारणम् ॥४०९५॥

मंत्रो राजा पुरश्चर्या राज्यसंपत्तिरीरिता ।
संपत्त्या तु विना राजा न शोभति महेश्वरि ॥४०९६॥

संपत्तिमूलमेतद्धि सर्वमेव प्रकीर्तितम् ।
होममस्त्रमिति प्रोक्तं पर्जन्यास्त्रं तु तर्पणम् ॥४०९७॥

जलदुर्गस्वरूपं वै त्वभिषेकं प्रकीर्तितम् ।
ब्राह्मणानां भोजनं तु दुष्टसैन्यप्रधर्षणम् ।
देवतागुरुविद्यैक्यं त्वात्मैक्यपरिभावनम् ॥४०९८॥

सर्वसिद्धीश्वरत्वं स्यात् त्रैलोक्यस्वामिता यथा ।
यथा च राज्ञि राज्यादौ शत्रुसैन्यभयं भवेत् ॥४०९९॥

सिद्ध्यागमं महादेवि तथैव परिकीर्तितम् ।
दुर्गाद्यस्त्रादिकं देवि यथोपकरणं दृढम् ॥४१००॥

तथैव विद्धि मंत्रस्य पुरश्चर्यादिकं भवेत् ।
मंत्रो राजा गुरु मंत्री गणेशा द्वारपालकाः ॥४१०१॥

साधना शवमुण्डस्य सिंहासनमितीरितम् ।
साधकेन तथा कार्यं येन सर्वं तु सिद्ध्यति ॥४१०२॥

नित्यं नैमित्तिकं चैव हयद्विरदकौ मतौ ।
होमधूमः पताका स्याद् होमस्तु सिद्धभूमिका ॥४१०३॥

षोढान्यासादिकं सेना देवता राज्यनायिका ।
यंत्रं तु वज्रदुर्गं स्यात् जीवयंत्रं त्वभेदकम् ।
सिद्धे राज्याधिपे देवि किं न सिद्ध्यति भूतले ॥४१०४॥

इति श्रीमदागमरहस्ये सत्संग्रहे नवरात्रग्रहणस्तोत्राद्यनुष्ठानकथनं नाम सप्तदश पटल. ॥१७॥ आदित. पचचत्वारिंशत् ।

## अथ अष्टादशः पटलः ।

अथ देवोपचाराणां नामानि शृणु पार्वति ।
अन्नस्य देवता लक्ष्मी वैष्णवे तु प्रजापतिः ॥४१०५॥
वानस्पत्यं तथा पुष्पे वैष्णवो गंध ईरितः ।
गंधर्वश्च तथा धूपे घृतं सूर्याग्निदैवतम् ॥४१०६॥
घृतदीपेऽथ श्रीविष्णुस्तैलदीपे वनस्पतिः ।
कृसरस्य रमा देवी परमान्नस्य कालिका ॥४१०७॥
जलस्य वरुणो देवो बीजानां वरुणेश्वरी ।
मधु वै वारुणी ज्ञेया दधिक्षीरं महेश्वरः ॥४१०८॥
मालायाश्च तथा दुर्गा सर्वं देवीमयं च वा ।
दशधूपान् शृणु प्राज्ञे सावधानेन चेतसा ।
लोहवाणः षोडशांगः श्रीविद्यायां प्रकीर्तितः ॥४१०९॥
काली विद्याविधौ देवि अगरुश्च दशांगकम् ।
अष्टादशांगं श्रीखण्डं ताराविद्याविधौ स्मृतम् ॥४११०॥
छिन्नाविद्या विधौ देवि पंचांगं गुग्गुलुस्तथा ।
कृष्णागरुः पीतसारो ब्रह्मास्त्रमनुगोचरम् ॥४१११॥
रालो ह्यगुरुसत्त्वं च मातंग्यां परिकीर्तितम् ।
कस्तूरी चैव कर्पूरमष्टगन्धं तथैव च ॥४११२॥
भैरव्यां कीर्तितं देवि नखं चैव शिलारसः ।
भुवनेश्यां मया प्रोक्तं श्रीखंडं कमलामनौ ॥४११३॥

लाक्षागुडो हि धूमायां सिद्धविद्याविधौ शिवे ।
सर्वधूपस्तु संप्रोक्तः षोडशांगमिहोच्यते ॥४११४॥

श्रीखंडश्चागुरुश्चैव गुग्गुलो लोहवाणकः ।
रालश्च देवदारुश्च लाक्षा चैव गुडस्तथा ॥४११५॥

गोघृतं शर्करा चैव मांसीनखमतः परम् ।
मलयोद्भवसारं च शिलारसमतः परम् ॥४११६॥

कर्पूरं गंधसारं च षोडशांगमिदं स्मृतम् ।
वीरणं वालकं चैव प्रोक्तमष्टादशांगकम् ॥४११७॥

अथ प्रसगात् नित्यकर्मलोपे नियमा.—

नित्यलोपो न कर्तव्यो नित्यं तु सर्वकालिकम् ।
रात्रि र्भवति देवेशि पितृतर्पणकं न हि ॥४११८॥

संध्यालोपनिवृत्ते च गायत्रीं मूलमेव वा ।
जपेदष्टोत्तरं देवि सहस्रं यत्नतः शिवे ॥४११९॥

तथा माध्याह्निकं कृत्वा रात्रिकृत्यं ततश्चरेत् ।
जपादिस्तोत्रपाठान्तं सर्वमेतत् समाचरेत् ॥४१२०॥

तदते पूजनं कर्म ततो नैमित्तिकं चरेत् ।
अत्र केचित् समिच्छन्ति नित्यं पंचोपचारिका ।
ततो नैमित्तिके काम्ये कार्यं विस्तृतिवैभवम् ॥४१२१॥
अथोच्यते महेशानि यंत्रस्थापननिर्णयम् ।
स्फाटिकं स्वर्णजं रौप्यं यद् यंत्रं कारयेत् प्रिये ॥४१२२॥
यंत्रं तु गृहमित्युक्तं यंत्रं पीठं प्रकीर्तितम् ।
यंत्रे तु पूजिता देवी सहसैव प्रसीदति ॥४१२३॥
शालग्रामे बाणलिंगे जीवचक्रे महेश्वरि ।
स्थिरयंत्रे प्रतिकृतौ नावाहनविसर्जने ॥४१२४॥
प्रतिष्ठाप्य महायंत्रं न तद् यंत्रं विसर्जयेत् ।
यंत्रप्रतिष्ठामासाद्य विद्यां तत्र विभावयेत् ॥४१२५॥

तदा विसर्जनं नास्ति न चावाहनमेव च ।
कुलवारे कुलतिथौ मासर्क्षपक्षयोगतः ॥४१२६॥

ज्ञात्वा संपूजयेद् देवि सर्वसिद्धीश्वरो भवेत् ।
तिथिनिर्णयमत्राहं वक्ष्ये पूजार्थमीश्वरि ॥४१२७॥

होमे जपे च पूजादौ घटीरात्र्युत्तरा तिथिः ।
सूर्योदये तु संप्राप्ते या तिथिश्चोपलभ्यते ॥४१२८॥

सा तिथिः सर्वकार्याणां कर्त्री प्रोक्ता महेश्वरि ।
महानिशाव्यापिनी या सा तिथिः शुभदायिका ॥४१२९॥

जन्माष्टमी निशाव्याप्ता सनक्षत्रा जयन्तिका ।
चंद्रोदयसमापन्ना चतुर्थी परिकीर्तिता ॥४१३०॥

अमा सोमयुता सा तु सा परैव महेश्वरि ।
अमायुक्ता न कर्तव्या प्रतिपत् चण्डिकार्चने ॥४१३१॥

शुक्ला परैव प्रतिपत् तथा यमतिथिः परा ।
भद्रोत्तरा तिथि र्ज्ञेया तृतीया क्षयसंज्ञका ॥४१३२॥

गौरीपूजाविधौ शस्ता सर्वदुःखविनाशिनी ।
पूर्वाष्टमी कृष्णपक्षे शुक्लपक्षे परा तिथिः ॥४१३३॥

चतुर्दश्यपि च परा त्वर्धरात्रियुताथवा ।
अष्टमीनवमीयोगो यत्र सा नवमी तिथिः ।
तयोः संधौ भगवती पूजिता वरदायिनी ॥४१३४॥

निशामुखे शिवः पूज्यो निशामध्ये महेश्वरि ।
निशांते विबुधाः सर्वे पूजनीयास्तथापरे ॥४१३५॥

शिवं शक्तिं भैरवं च रात्रावेव प्रपूजयेत् ।
चैत्रे या नवमी शुक्ला मध्यान्हव्यापिनी तिथिः ॥४१३६॥

अमा च पौर्णिमा देवि परा ज्ञेया च पूजने ।
चतुर्दशीं समारभ्य नवम्यन्तं महेश्वरि ॥४१३७॥

रात्रिविद्धा तिथिर्ज्ञेया शुभदा परमेश्वरि ।
एवं ज्ञेया तिथि र्देवि शिवापूजनकर्मणि ॥४१३८॥

मंत्रं साधयमानस्तु जपादौ च तथान्तके ।
कुल्लुकां प्रजपेद् देवि मंत्रविघ्नविनाशिनीम् ॥४१३९॥

सिद्धिरोधहरीं चैव सर्वसिद्धिकरी तथा ।
क्रमेण दशविद्यायाः कुल्लुकां प्रवदाम्यहम् ॥४१४०॥

काली तारा छिन्नमस्ता सुन्दरी वगलामुखी ।
मातंगी श्यामला लक्ष्मी सिद्धविद्या च भैरवी ।
धूमावती क्रमेणैव महाविद्या दशैव च ॥४१४१॥

अथो कुल्लुका दशविद्यानाम् । तत्रादौ श्रीकाल्या —

कालीकूर्चं वधूर्माया फडंता कुल्लुका मता ।
अघोराख्यो ऋषिः प्रोक्तो विराट्छंदः प्रकीर्तितम् ॥४१४२॥

देवता कुल्लुका काली बीजं मायाभिधं स्मृतम् ।
कामं शक्तिः तथा कूर्चं कीलक परिकीर्तितम् ॥४१४३॥

षट् दीर्घाद्येन कामेन षडंगन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं कालिकावत् समाचरेत् ॥४१४४॥

अथ तारायाः —

माया रमा तथा कूर्चं तारिणी कुल्लुका मता ।
तारिणी कुल्लुकायाश्च विरूपाक्षो ऋषिः स्मृतः ॥४१४५॥

उष्णिक् छंदः समाख्यातं देवता नीलतारिणी ।
कूर्चबीजं तथा माया शक्तिर्वधू च कीलकम् ।
मायया तु षडंगानि प्रोक्तमन्यच्च मूलवत् ॥४१४६॥

अथ छिन्नायाः—

छिन्नायाश्च महेशानि कुल्लुकाष्टाक्षरी भवेत् ।
वज्रवैरोचनीं प्रोच्य संबुध्यंतां स वर्म च ॥४१४७॥

अतिकान्तो ऋषिः प्रोक्तो गायत्रं छंद ईरितम् ।
हं बीजं हूं तथा शक्तिः कीलकं रोचनी मता ॥४१४८॥

शिवषड्दीर्घयुक्तेन षडंगन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं छिन्नावत् समुपाचरेत् ॥४१४९॥

संपत्प्रदायाः प्रथमं बीजं श्रीभैरवीमनौ ।
विकराल ऋषिः प्रोक्तः पङ्तिश्छन्दः प्रकीर्तितम् ॥४१५०॥

देवता भैरवी नाम्नी कुल्लुका परिकीर्तिता ।
ह्रं वीजं सै महाशक्ति रमत्र कीलकं स्मृतम् ॥४१५१॥

षड्दीर्घाद्येन बीजेन षडंगन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं बालावत् समुपाचरेत् ॥४१५२॥

सुंदर्याः कुल्लुका देवि संप्रोक्ता द्वादशाक्षरी ।
वाग्भवं कामराजं च लज्जां च त्रिपुरे पदम् ॥४५५३॥

तथा भगवति प्रोच्य तदंते ठद्वयं वदेत् ।
सुंदरीकुल्लुकायास्तु ऋषिरानन्द भैरवः ॥४१५४॥

गायत्री छंद आदिष्टं वाग्भवं बीजमीरितम् ।
लज्जाशक्तिर्महेशानि कामबीजं च कीलकम् ॥४१५५॥

देवता त्रिपुरेशी च षडंगं द्वितयेन च ।
ध्यानपूजादिक सर्वं सुंदरीवत् समाचरेत् ॥४१५६॥

मातंगी कमला लक्ष्मी धूमोच्छिष्टाक्रमं शृणु ।
तारं कूर्चं नारसिंहं पंचानां कुल्लुका मता ॥४१५७॥

ऋषिर्भैरवनामा च यावच्छंदांसि पार्वति ।
देवता सैव बीजादि स्वस्वदेवक्रमेण च ।
ध्यानपूजादिकं सर्वं स्वस्वदेववदाचरेत् ॥४१५८॥

इयन्ते कथिता देवि संक्षेपात् कुल्लुका मया ।
अज्ञात्वा कुल्लुकामेनां जपते योऽधमः कुधीः ॥४१५९॥

पंचत्वमाशु लभते सिद्धिहानिः प्रजायते ।
मंत्राः पराङ्मुखाः यान्ति तस्माज्जापो हि निष्फलः ॥४१६०॥

तस्मात् सर्वप्रयत्नेन योजयेन् मूर्ध्नि कुल्लुकाम् ।
इति संक्षेपतः प्रोक्तं शृणु मंत्रांगवासनाम् ॥४१६१॥

श्रोत्रादीनां ज्ञानहीनो मंत्रजापं करोति यः ।
दारिद्र्यं च विपत्तिं च नरकं प्राप्नुयाच्च सः ॥४१६२॥

शृणु देवि प्रवक्ष्यामि कालीमंत्रमनुक्रमात् ।
बिन्दुः श्रोत्रं नाद आस्य ककारं हृदयं विदुः ॥४१६३॥

वह्निनेत्रं कीलकं तु दीर्घाकारं प्रियंवदे ।
तकारं तारिणी मंत्रे हृदयं विद्धि पार्वति ।
हकारं विद्धि सर्वत्र सर्वपक्षे सुरेश्वरि ॥४१६४॥

अत्र कालीविषये विशेषश्चोत्तरतन्त्रे—

क्रींकारं मस्तकं देवि क्रींकारं च ललाटकम् ।
नेत्रत्रयं च ह्रींकारं हूंकार नासिका मता ॥४१६५॥

हूंकारं मुखपद्मं स्यात् ह्रीकारं कर्णयुग्मकम् ।
ह्रींकारेण भवेद् ग्रीवा दकारं चिबुकं भवेत् ॥४१६६॥

क्षिकारेण भवेद् दंतो णेकारेणोष्ठयुग्मकम् ।
काकारेण स्तनद्वन्द्वं लिकारात् पृष्ठदेशकम् ॥४१६७॥

केकारेण भवेद् बाहुः क्रींकारेणोदरो भवेत् ।
क्रींकारात् नाभिदेशं स्यात् क्रींकाराच्च नितंबकः ॥४१६८॥

हूंकारं योनिरूपं स्यात् हूंकारेणोरुयुग्मकम् ।
ह्रींकारं जानुयुग्मं स्यात् ह्रींकारं गुह्यदेशकम् ।
स्वाशब्देन पदद्वन्द्वं हाशब्देन स्वरं तथा ॥४१६९॥

ताराविद्याया यामले—

वाग्देव्याः समुदायः स्यादाकृतिः प्रणवो मुखम् ।
मायावधू स्थितौ बिंदू लोचने समुदाहृतौ ॥४१७०॥

हसकारौ श्रुती स्यातां हकेशौ हृत्करौ स्मृतौ ।
फट्कारो चोदरो ज्ञेयो अकारेण स्तनद्वयम् ॥४१७१॥

रेफयुग्मं पदद्वन्द्वं तकारं भाललोचनम् ।
भुजवेदस्वरूपं च नादयुग्ममुदाहृतम् ॥४१७२॥

कूर्च प्राणा एकजटा शरीरं सर्वमिष्यते ।
कूर्चं मुखं तद्विज्ञेयमन्यमंत्रेषु पार्वति ॥४१७३॥

महोग्राया प्रणवो मुखम् ' प्रणवरहिताया एकजटाया कूर्च मुखमित्यर्थ ।

अथ श्रीविद्याया विशेष. कामधेनुतन्त्रे—

अथान्यत् संप्रवक्ष्यामि कामिनीतत्त्वमुत्तमम् ।
शृणु तत्त्वं महेशानि ककारस्यातिदुर्लभम् ॥४१७४॥

रहस्यं परमाश्चर्य त्रिकोणानां च संशृणु ।
वामरेखा भवेद् ब्रह्मा विष्णु र्दक्षिणरेखिका ॥४१७५॥

अधोरेखा भवेद् रुद्रो मात्रा साक्षात् सरस्वती ।
अंकुशा कुंडली या तु कोटिविद्युल्लताकृतिः ॥४१७६॥

कुंडली त्वंकुशाकारा मध्यशून्यं सदाशिवः ।
जपा पावकसंकाशा वामरेखा वरानने ॥४१७७॥

शरच्चन्द्रप्रतीकाशा दक्षरेखा च संस्मृता ।
अधो रेखा भवेद् रुद्रो महामारकतद्युतिः ॥४१७८॥

शंखकुंदसमाभासा मात्रा साक्षात् सरस्वती ।
कोटिचंद्रप्रतीकाशं मध्यशून्यं सदाशिवः ॥४१७९॥

ईश्वरो यस्तु देवेशि कलाचतुष्टयात्मकः ।
इच्छाशक्ति र्भवेद् ब्रह्मा विष्णुस्तु ज्ञानशक्तिमान् ॥४१८०॥

क्रियाशक्ति र्भवेद् रुद्रः सर्वप्रकृतिमूर्तिमान् ।
आत्मविद्याशिवैस्तत्त्वैः सदाशिवः प्रतिष्ठितः ॥४१८१॥

शून्ये तु संस्थिता काली कैवल्यपददायिनी ।
नंदिनी संस्थिता तस्याः दक्षभागे स्वरूपिणी ॥४१८२॥

वामभागे स्थिता लक्ष्मीश्चतुर्वर्गप्रदायिनी ।
तेषां मार्गे स्थिता देवी सुंदरीपरदेवता ॥४१८३॥

त्रयाणां गर्भसंभूता त्रिपुरा अत एव हि ।
परमात्मस्वरूपत्वात् तासां गर्भे प्रतिष्ठिता ॥४१८४॥

अन्याश्च प्राभवन् सर्वाः कालिकाद्याश्च पार्वति ।
तत्र स्थितोऽसृजत् ब्रह्मा विष्णुः पालनतत्परः ॥४१८५॥

रुद्रः संहारकर्ता च ईश्वरश्च सदाशिवः ।
ईश्वरो यस्तु देवेशि त्रिकोणे तस्य संस्थितिः ॥४१८६॥

त्रिकोणमेतत् कथितं योनिमंडलमुत्तमम् ।
ककाराज्जायते सर्वं त्रैलोक्यं परमेश्वरि ॥४१८७॥

ककारादेवमुत्पन्नं कामं कैवल्यमेव च ।
सर्वेषां देवतानां च ककारं मूलमीरितम् ॥४१८८॥

आसनं त्रिपुरा देव्याः ककारं पंचदैवतम् ।
ककारात् कामदा कामरूपिणी स्फुरदव्यया ॥४१८९॥

माता सा सर्वदेवानां कैवल्यपददायिनी ।
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ॥४१९०॥

जपापावकसिंदूरसदृशीं कामिनीं पराम् ।
चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिनीम् ॥४१९१॥

कदंबकोरकाकारस्तनद्वयविभूषिताम् ।
शंखकंकणकेयूरै रंगदैरुपशोभिताम् ॥४१९२॥

रत्नहारैः पद्महारैः शोभितां परमेश्वरीम् ।
एवं हि कामिनीरूपं त्रैपुरं महदद्भुतम् ॥४१९३॥

एतत्तु कालिकाबीजं प्रफुल्लं शृणु सुन्दरि ।
पृथ्वीबीजं ततो भूत्वा वामाक्षिसंयुतं यदि ॥४१९४॥

बिन्द्वर्धसंयुतं भूत्वा प्रफुल्लं भवति प्रिये ।
लकारः पृथिवी साक्षात् सर्वरत्नस्वरूपिणी ॥४१९५॥

पीतांगी पीतवसना पीतविद्युल्लताकृतिः ।
सुखप्रसन्नवदना रत्नकुंडलमंडिता ॥४१९६॥

एवं हि संस्मरेद् बीज तदूर्ध्वे कामिनीं पराम् ।
लकारसंयुता भूत्वा प्रफुल्लं भवति प्रिये ॥४१९७॥

प्रतप्तकांचनाभासां दशवाहुसमन्विताम् ।
त्रिभंगललिताकारां जटाजूटसमन्विताम् ॥४१९८॥

त्रिलोचनां चंद्ररेखां महिषासुरमर्दिनीम् ।
सिंहासनगतां देवीं भावयेत् साधकोत्तमः ॥४१९९॥

वहुरूपमयीं देवीं ककारं कामिनीं पराम् ।
शुक्लवर्णा पीतवर्णा रक्तवर्णा महेश्वरीम् ॥४२००॥

हरिद्वर्णां कृष्णवर्णा चारुचंपकहासिनीम् ।
उत्पत्तिकारणं भूमे देवानां चैव पार्वति ॥४२०१॥

बीजमेतत् महद्गुह्यं विष्णुजन्मस्थलं सदा ।
एवं हि संस्मरेद् भक्त्या शक्ति बीजसमाश्रयाम् ॥४२०२॥

बीजात्तु जायते ब्रह्म ज्ञानात्मा परमेश्वरि ।
शब्दब्रह्ममयो भूत्वा प्रसूते हरिमव्ययम् ॥४२०३॥

स्वयं शक्ति र्हरि र्भूत्वा जायते नात्र संशयः ।
ककाररूपिणी भूत्वा शक्तिराविरभूत् स्वयम् ॥४२०४॥

जन्मकर्माणि सर्वाणि ब्रह्मणो नास्ति भामिनि ।
एतदेव हि शर्वाणि प्रकृतेरस्ति सर्वदा ॥४२०५॥

जपे ध्याने च पूजायां प्रकृतिः सुप्रतिष्ठिता ।
ककारस्योर्ध्वकोणेषु प्राणो वायुः प्रतिष्ठितः ॥४२०६॥

अपानो वामकोणेषु संस्थितश्च सदा प्रिये ।
समानो दक्षिणे कोणे शुद्धस्फटिकसन्निभः ।
उदानः त्वंकुशाकारे मात्रायां व्यान एव च ॥४२०७॥

एतत् ते कथितं देवि ककारतत्त्वमुत्तमम् ।
नवतत्त्वं ककारस्य ज्ञात्वा यः कुरुते जपम् ॥४२०८॥

तज्जप चंचलापांगि जप एव न संशयः ।
एतत् तत्त्वमविज्ञाय प्रजपेद् यदि कोटिधा ॥४२०९॥

न तज्जप्तं वरारोहे सदा त्वावर्तनं भवेत् ।
देवतत्त्व प्राणतत्त्वं बिंदुतत्त्वं च सुंदरि ॥४२१०॥

ज्ञानतत्त्वं शक्तितत्त्व योनितत्त्वं तथैव च ।
अंकतत्त्वं रूपतत्त्वं गर्भतत्त्वं वरानने ॥४२११॥

नवतत्त्वमिदं प्रोक्तं कामधेनुमतं प्रिये ।
कीलितं न हि देवेशि विद्या वा मंत्रमेव वा ॥४२१२॥

न शप्तं परमेशानि न विद्धं वरवर्णिति ।
सर्वेषां जंगमादीनां स्थावराणां महेश्वरि ॥४२१३॥

देवता मातृका प्रोक्ता सृष्टिस्थित्यंतकारिणी ।
भावनादक्षरश्रेण्या ब्रह्मसाक्षान् न संशयः ॥४२१४॥

अक्षरे दूषणं नास्ति सप्तादिकमलानने ।
दूषणं यत् कृतं देवि हृदये भावय प्रिये ॥४२१५॥

देवानां वर्णरूपाणां रक्षार्थं गोपनाय च ।
न च शप्तं तथा विद्धि कीलितं न हि पार्वति ॥४२१६॥

संदेहं त्यज चार्वंगि शप्तादिषु वरानने ।
सर्वकालं सदा यत्नाद् जपं कुरु निरंतरम् ॥४२१७॥

ध्यायन् हृदि परं देवं पादुकाध्यानतत्परः ।
स्वाभीष्टामचिरात् सिद्धिं लप्स्यसे मदनुग्रहात् ॥४२१८॥

पादुकाध्यानसंपन्नो पादुकाजपतत्परः ।
सर्वाघं च विनिर्धूय यथेष्टां लभते गतिम् ॥४२१९॥

अत्र पादुकाध्यान श्रीगुरुध्यान, तच्च श्रीकुले—

श्वेतं श्वेतांबरं श्वेतगंधालकारभूषितम् ।
रक्तशक्त्या युतं वामे वराभयकरं भजे ॥४२२०॥

कालीकुले तु—

नीलांबरं नीलविलेपयुक्तं शंखादिभूषासहितं त्रिनेत्रम् ।
वामांकपीठस्थितनीलशक्तिं वदामि वीरं करुणानिधानम् ॥४२२१॥

अनुत्तरे तु—

वंदे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥४२२२॥

अन्यच्च—

गुरुं ध्यात्वा च संपूज्य पादुकां प्रजपेत् ततः ।

अत्र पादुका यथाधिकारतो ज्ञातव्या । सा च लघुस्थूलमहापदपूर्वात्
त्रिधा । लघुस्तु—

बाला च भुवनेशानी रमा चैव सुरेश्वरि ।
भावत्रयमिदं प्रोक्तं गुरुमंत्रे प्रतिष्ठितम् ॥४२२३॥

तत. स्वगुरुनामान्ते आनन्दनाथमालिखेत् ।

रक्तशक्तिपदांते च अंबापदमथालिखेत् ।
श्रीपादुकां समुच्चार्य पूजयामीति संजपेत् ॥४२२४॥

अथ स्थूलपादुका—

प्रणवं वाग्भवं मायां लक्ष्मीबीजं समुद्धरेत् ।
ह स् ख फ्रें तथानंदभैरवं कूटमुद्धरेत् ॥४२२५॥
स ह ख फ्रें तथानंदभैरवीं हरितं ततः ।
विपरीतं पुनस्तच्च तदंते गुरुनाम च ॥४२२६॥

आनंदनाथशब्दांतमम्बांतं शक्तिनाम च ।
पादुकांते पूजयामि नमोऽन्तं परिकीर्तितम् ॥४२२७॥

अथ महापादुका श्रीदक्षिणामूर्तिसंहितायाम्—

ह्स्रौमादावथालिख्य ह स क्ष म ल वानिलान् ।
वन्हियुक्तान् त्रिधालिख्य त्रिधा संभूषयेत् स्वरैः ।
मुखवेष्टनवामांगश्रुतिनेत्रसु मंडितैः ॥४२२८॥

बीजत्रयमिदं भद्रे बिंदुनादकलात्मकम् ।
श्रीपरांते पावकेति सर्वाराध्यपदं लिखेत् ॥४२२९॥

सर्वमूर्ध्नपुरांते च नाथसर्वगुरुस्वयम् ।
गुरुश्रीगुरुनाथांते ह स क्ष म लवयां तथा ॥४२३०॥

रेफदीर्घश्रुतियुतान् बिंदुनादकलात्मकान् ।
पिंडीकृत्य लिखेदाद्यं चतुर्थं च ततो लिखेत् ॥४२३१॥

तृतीयं पूर्ववल्लेख्यं द्वितीयमपि पार्वति ।
ततः श्रीशंभुगुर्वतं पुनराद्यं समालिखेत् ॥४२३२॥

आदिकूटचतुष्कांते चाथ तार्त्तीयमालिखेत् ।
वसुसंख्यैश्च देवेशि चत्वारिंशद्भिरक्षरैः ॥४२३३॥

मण्डितोऽयं मनुर्देवि स्मरेत् निजगुरुं प्रिये ।

अथ श्रीमदनुत्तरविषये श्रीगुरुपरमपरमेष्ठिपरात्परभेदात् चतुर्धा भेदा । तेषां यथाक्रमेणोद्धारा । यथा यामले—

सरस्वत्यादिकं षट्कं प्राणो जीवस्तथापरा ।
वायुरीशेन संयुक्तः स्पर्शोऽधीशस्तथैव च ॥४२३४॥

मत्स्यं क्षारं शैवरूपं वारुणः कांतिर्लता युता ।
तामसी रसवल्लीयुक् स्वगुरवे नमः पदम् ॥४२३५॥

अमुकानन्दनाथश्च अमुकांबा तथैव च ।
श्रीपादुकां पूजयामीत्यष्टाविंशाक्षरो मनुः ॥४२३६॥

सरस्वत्यादिकं षट्कं जीवः प्राणः शिवः पदम् ।
वायुरीशो द्युतिस्तीक्ष्णः स्पर्शसृष्टिःस्वरादिमम् ॥४२३७॥

गंधो रसः त्रिमूर्त्त्याढ्यः तन्द्री मृत्युश्च यांतिकः ।
तेजो जोत्स्ना कामिनी च लांतिकः पद्मना मगः ॥४२३८॥

श्रीपरांते मगुरवे प्रोच्चरेद् हृदयं ततः ।
पूर्ववत् नाम चोच्चार्य एकत्रिंशाक्षरो मनुः ॥४२३९॥

सरस्वत्यादिकं षट्कं जीवः प्राणः परा शिवः ।
वायुरीशः स्वरादिश्च श्रोत्रं तंद्री स्वरादिमः ॥४२४०॥

लादिमो मातृकाद्यश्च तंद्री तीक्ष्णा च यांतिकः ।
महाकालः प्रतिष्ठायुक् दीर्घा चक्षुश्च लोहितः ॥४२४१॥

रागः स्पर्शं रसः शांति र्लपटः शांति धांतिकः ।
ज्योत्स्ना वृषः पालिनी च शांति श्रीगुरवे नमः ॥४२४२॥

पूर्ववत् नाम चोच्चार्य परमेष्ठीगुरुस्तथा ।
चतुस्तार कुमारीं च तेजोवायुश्च वांतिकः ॥४२४३॥

विद्यायुग् रसवायुश्च प्रीतिः जीवद्वयं नमः ।
ठद्वयं सृष्टिसूक्ष्मायुक् रसोरूपश्च शब्दयुक् ॥४२४४॥

स्पर्शोऽर्घो तीक्ष्णवाक् स्पर्श उपस्थ श्रोत्रकामिनी ।
रसयुक् तीक्ष्णाग्निदीर्घा श्रोत्रं तीक्ष्णाग्नि श्रीततः ॥४२४५॥

स्मृत्यर्घोशः क्रोधिनी च इंधिका श्रीपदं ततः ।
पूर्ववत् नाम प्रोच्चार्य परात्परगुरुस्तथा ।
एवं श्रीपादुकाः स्मृत्वा मुद्रया प्रणमेद् गुरुम् ॥४२४६॥

मुद्रया सघट्टमुद्रया । पंचमुद्राभिश्च सवट्टया स्मृत्वान्ते पचमुद्राभिः प्रणमेदित्यर्थ. । पूर्वोक्ता सा त्रिधा गौडकेरलकाश्मीरभेदात् ।
यच्च शक्तिसगमे—

संघट्टनाख्या मुद्रा वै त्रिविधा परिकीर्तिता ।
तथेह गौडे संघट्टा मुद्रा संकीर्त्यते ह्यथ ॥४२४७॥

करद्वयं तु संयोज्य ह्यधोवक्त्रं सुलक्षणम् ।
नखैर्नखान् सुसंयोज्य तथांगुष्ठावधो गतौ ॥४२४८॥

मस्तके योजयेद् देवि मुद्रा संघट्टनाभिधा ।
केरले स्यादियं किंचित् भेदतश्च निशामय ॥४२४९॥

पूर्वमुद्रां तु संयोज्य कनिष्ठे विरलीकृते ।
संघट्टनाख्या मुद्रा तु द्वितीया परिकीर्तिता ॥४२५०॥

काश्मीरे संप्रदाये तु तस्या भेदं शृणु प्रिये ।
अत्रापि भेदद्वितयं कनिष्ठे भिन्नयोजिते ।
तृतीया जायते मुद्रा चतुर्थी सर्वथोत्तमा ॥४२५१॥
अंगुष्ठानामिका मध्या योन्याकारेण योजयेत् ।
कृत्वा करद्वयस्यैवं ह्यधोवक्त्रं सुशोभनम् ॥४२५२॥
तर्जन्या तर्जनी योज्या कनिष्ठायां कनिष्ठिका ।
तर्जनी द्वे कनिष्ठे द्वे चाभितोर्ध्वं नियोजिते ।
संघट्टनाख्या मुद्रेयं जायते सर्वसिद्धिदा ॥४२५३॥

एषा श्रीगुरुपादुकास्मरणावसरे मूर्ध्नि विधेया । स्मरणांते पचमुद्राभिस्तं प्रणमेत् । ता यथा यामले—

सुमुखं च सुवृत्तं च चतुरस्रं च मुद्गरम् ।
योनिश्च पंचमी प्रोक्ता आभिश्च प्रणमेद् गुरुम् ॥४२५४॥

तल्लक्षणानि यथा—

विकसितकर उत्तानांजलि सुमुखम् । इदमेव मुष्टीकृत सुवृत्तम् । ऊर्ध्वाध स्थितयो वामकरतलयोरंगुलीनां मिथो मणिबधे चतुरस्रा । अधरोत्तरस्य वामदक्षमुष्टियुगम्य स्वाभिमुख्येन योजने मुद्गर । तिर्यग् मिलिताग्रयो. मध्यमयो. पश्चादूर्ध्वाध स्थिते वामदक्षानामिकेति कर. प्रसारिते तर्जनीभ्या निष्पीड्य वामकनिष्ठां दक्षिणया धृत्वागुष्ठाग्रयो मध्यमा पुरो मध्यपर्वद्वयसंबंधे योनिरिति ।

अथ शावरमंत्राणां जागृति शृणु पार्वति
कांस्यभाजनमानीय शुद्धं भस्मादिभिः कृतम् ॥४२५५॥
प्रजपेद् रविरात्रौ तु यामे यामे शताष्टकम् ।
खादिर्या ताडयेद् यष्ट्या कांस्यपात्रं वदेदिति ॥४२५६॥
जागृतो भव मंत्रस्य भाषयाथ तुरीयके ।
वामे दद्याद् वलिं काल्या मंत्रेण भैरवस्य तु ॥४२५७॥
कुक्कुटं चान्यदेवेषु स्फोटयेन् नारिकेलकम् ।

मंत्रस्य भाषयेति । यद्देशीयभाषात्मक शावरमत्र. तद्देशीयभाषयैव मत्रस्य शोधनं कार्यम् । जागृतो भवेति वदेत्यर्थ. ।

इति श्रीमदागमरहस्येसत्संग्रहेऽष्टादशः
पटल ॥१८॥ आदित षट्चत्वारिंशत् ।

# अथ एकोनविंशः पटलः ।

अथ भावा कुलचूडामणौ। देव्युवाच—

वीरभावो महादेव कथ्यते शृणु भैरव ।
निर्द्वन्द्वमानसो भूत्वा हृदा कामकला तनुः ॥४२५८॥

निशासु पूजा कर्तव्या हेतुयुक्तः सदैव हि ।
निजं कुलं समाधाय स्वयं भैरवरूपधृक् ॥४२५९॥

कुलं च भैरवीरूपं तद्गात्रे न्यासविस्तरम् ।
विन्यस्य सकलं न्यासं नवयोन्यात्मकं तथा ॥४२६०॥

नवयोन्यात्मकमिति श्रीविद्यापरम् ।

प्रसूनतूलिकामध्ये पुष्पप्रकरसंयुते ।
नानागंधसमाकीर्णे कुलद्रव्येण यंत्रकम् ॥४२६१॥

लिखित्वा पूजयेत् शक्तौ घटस्थापनपूर्वकम् ।
ध्यात्वेष्टदेवतां तत्र जपेदष्टोत्तरं शतम् ॥४२६२॥

धेनुयोनी प्रदर्श्याथ अमृतं तद् विचिंतयेत् ।
दृष्ट्वामृतमुपात्तं वै नृत्यंति योगिनीगणाः ॥४२६३॥

नृत्यंति भैरवाः सर्वे नृत्यंति मातरोऽपि च ।
इंद्रादयः सुराः सर्वे नृत्यंति मधुलोलुपाः ॥४२६४॥

अर्घभांडं त्रिधा कृत्वा गुरवे चैकभागकम् ।
एकं कुलाय वै दत्वा एकेन देवतर्पणम् ॥४२६५॥

ततः श्रीगुरुरूपाय साक्षात् परशिवाय च ।
कराभ्यां पात्रमुद्धृत्य सद्वितोयं समर्पयेत् ॥४२६६॥

साक्षाद् यदि गुरु र्न स्यात् तदा तोये विसर्जयेत् ।
निर्मन्त्रं न पिबेन् मद्यं प्रायश्चित्तं विधीयते ॥४२६७॥

तस्मान् मंत्रविधानेन कर्तव्यं कुलनायिके ।
इदं पवित्रममृतं पिबामि भवभेषजम् ॥४२६८॥

पशुपाशसमुच्छेदकारणं भैरवोदितम् ।
चित्ते स्वातंत्र्यसारत्वात् तस्यानंदमयत्वतः ॥४२६९॥

तन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे ।
स्वस्वातंत्र्यविकासाय स्वरसः स्वेन पीयते ।
तस्मादिमां सुरां देवीं पूर्णाहंतां पिबाम्यहम् ॥४२७०॥

मंत्रेणानेन देवेश मूलमंत्रेण मंत्रवित् ।
अनाकुलमनाः कुर्यादलिपानं शनैः शनैः ॥४२७१॥

स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ।
कुण्डल्याकृतिचिद्वह्नौ हुनेद् द्रव्यं समंत्रकम् ॥४२७२॥

अहंतापात्रभरितमिदंतापरमामृतम् ।
पराहंतामये वह्नौ होमः स्वीकारलक्षणम् ॥४२७३॥

गुरुदैवतमंत्राणामैक्यं संचितयन् धिया ।
यावदुल्लासपर्यन्तमुपदंशैः पिबेन् मधु ॥४२७४॥

भोजनांते विषं पानं पानांते भोजनं विषम् ।
अमृतं तद्विजानीयाद् यदन्नं सुरया सह ॥४२७५॥

चर्वणेन विना पानं केवलं विषभक्षणम् ।
सहितं चर्वणेनाथ ह्यमृतं कथितं प्रिये ॥४२७६॥

दृष्टिमानसवाक्काये यावन्न बलविभ्रमः ।
तावत् पानं प्रकर्तव्यं पशुपानमतः परम् ॥४२७७॥

यावन्नेन्द्रियवैकल्यं यावन्नो मुखवैकृतिः ।
तावदेव पिबेत् द्रव्यमन्यथा पतनं भवेत् ॥४२७८॥

अत्रैव पूर्णाभिषेकिनां पान यथा कुलार्णवे—

कराभ्यां पात्रमुद्धृत्य स्मरन् मूलं च पादुकाम् ।
आगलान्तं पिबेद् द्रव्यं स मुक्तो नात्र संशयः ॥४२७९॥

विश्वतैजसप्राज्ञानां शोधनं यन्मलैस्त्रिभिः ।
तदेव हेतुर्मुक्तेश्च शुद्धो यस्मात् सदाशिवः ॥४२८०॥

मलत्रय तु आणव कार्ममायीयमिति । मलत्रयरहितत्वात् शुद्धत्वम् । शुद्ध. शिव एव। तत्राणवो नाम सदाशिवस्य स्वस्यानवमर्शः। कार्मो नाम पुण्य-पापवानहमिति प्रतीतिः। मायीयो नाम अहकारादावात्मबुद्धिरिति ।

पीत्वा कुलरसं नानावस्त्रालंकारभूषितः ।
आनंदरूपवान् भूत्वा पूजयेत् परमेश्वरीम् ॥४२८१॥
तत् तत् कल्पविधानेन तत्र यत्नेन पूजयेत् ।
विसर्जनं विधायांते स्वकुले योजयेत् ततः ॥४२८२॥
तद्विबरसपानेन ह्यमृतं भुज्यते मया ।
जलपूतं हविर्द्रव्यं गृहीत्वा तर्पयेत् ततः ॥४२८३॥
विधाय तर्पणं देव प्रदक्षिणमनुव्रजेत् ।
स्तुत्वा प्रणम्य कल्पोक्तस्तवेन तोषयेत् ततः ॥४२८४॥
इति वीरकुलं देव देववंद्यं मनोहरम् ।
यद्देशे वर्तते वीरस्तत् कुलं वापि भैरवम् ॥४२८५॥
न च मारीभयं तत्र न च राजभयादिकम् ।
सुमंगलं सदा तत्र धनपुत्रविवर्धनम् ॥४२८६॥
लक्ष्मीस्तत्र महादेव सुस्थिरा भवति ध्रुवम् ।
माला नृदंतसंभूता पात्रं मानुष्यमुण्डकम् ॥४२८७॥
आसनं सिंहचर्मादि कंकणं स्त्रीकचोद्भवम् ।
द्रव्यमासमात्माढ्य भक्ष्यं मांसादिकं प्रिये ॥४२८८॥
चर्वणं वालमत्स्यादिमुद्रा वीणारवः कथा ।
मैथुनं वरकांतादिसर्ववर्णसमानता ॥४२८९॥
वीरभावे सदा कार्यमेवं साधकसत्तमैः ।
सुप्त संबोधयेन् मंत्रमवश्यं वृक्षमूलके ॥४२९०॥
यदा तदा कुजे वारे श्मशानगमनं चरेत् ।
पूजाफलं भवेत् तत्र सप्तवासरजं तदा ॥४२९१॥
चतुर्दश्यां गते तत्र पक्षपूजाफलं लभेत् ।
न गच्छेद् यदि तत् स्थाने पशुरेव न संशयः ॥४२९२॥

नास्त्यस्मादधिकं देव इति चिंतापरायणः ।
मादकद्रव्यभोक्ता तु भवेत् कुलपरायणः ॥४२९३॥

साधके क्षोभमापन्ने मम क्षोभः प्रजायते ।
तस्माद् यत्नाद् वीरवरो भवेद् भोगयुत' सुखी ।
भोगेन मोक्षमाप्नोति भोगेन कुलसाधनम् ॥४२९४॥

विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरः ।
न पूजां मम संपर्क न ध्यानमनुचिंतनम् ॥४२९५॥

तस्माद् भुक्त्वा च पीत्वा च पूजयेत् परमेश्वर ।
नात्र मद्युतिदोषोऽस्ति नापरं स्याद्धि दूषणम् ॥४२९६॥

यद् यद् वदति निद्राति यत् करोति यदर्चति ।
तत् सर्वं कुलरूपं तु ध्यात्वा च विहरेत् सुधीः ॥४२९७॥

एकाकी निर्जने देशे श्मशाने पर्वते वने ।
शून्यगेहे नदीतीरे निःसंगो विहरेत् मुदा ॥४२९८॥

वीराणां जपकालस्तु सर्वकाले प्रशस्यते ।
सर्वदेशे सर्वपीठे कर्तव्यं च न संशयः ॥४२९९॥

यदि विप्रो भवेत् त्रस्तः कुलधर्मपरायणः ।
तदानेन विधानेन कर्तव्यं कुलतोषणम् ॥४३००॥

विप्रो वीर एव।

अपराजिता पुष्पगर्भे कुलस्थानं मनोहरम् ।
सर्वदेवमुखं तत्र महाकामकलात्मकम् ॥४३०१॥

हयारिकुसुमे देव स्वयमस्मि सदाशिवः ।
तन्मध्ये लघुमाधाय पुष्पमध्ये तु चंदनम् ॥४३०२॥

रक्तं च कुसुमं दत्वा ध्यात्वात्मानं शिवात्मकम् ।
योजयेत् शिवशक्त्योस्तु तदैक्यं भावयन् धिया ॥४३०३॥

क्षणं विचिंत्य तत्रैव संपूज्य परमेश्वरीम् ।
जप्त्वा तदेव कुण्डाख्यं द्रव्यं परमदुर्लभम् ॥४३०४॥

यत्रापराजितापुष्पं जपापुष्पं च भैरव ।
करवीरं रक्तशुक्लं द्रोणपुष्पं च तिष्ठति ॥४३०५॥

तत्र देवी वसेन् नित्यं तद् यंत्रे मां प्रपूजयेत् ।
मम दत्ते जवापुष्पे पट्टवस्त्रफलं लभेत् ॥४३०६॥

ब्रह्महत्यादिकं पापं क्षणान् नश्यति निश्चितम् ।
अपरायाश्च माहात्म्यं वक्तु शक्यं न चेश्वर ।
वीरसाधनकार्यं च कर्तव्यं वीरपूरुषैः ॥४३०७॥

दिव्यैरपि च कर्तव्यं पशुभि र्न च पामरैः ।
यद्यदन्यत् पुरा प्रोक्तं संकेतं मंत्रसाधने ॥४३०८॥

तत् सर्वमेव सततं कुर्याद् वीरो महाबलः ।
दिव्ये वीरे न भेदोऽस्ति यो देहः स तु कथ्यते ॥४३०९॥

शांतो विनीतो मधुरः कलालावण्यसंयुतः ।
दिव्यस्तु देववत् प्रायो वीरश्चोद्धतमानसः ॥४३१०॥

विभूतिभूषणैर्वापि चंदनेनापि लेपितः ।
आकारगोपनो वापि व्यक्तो वा कुलभैरव ॥४३११॥

रक्तचंदनदिग्धो वा वैष्णवो वाप्यवैष्णवः ।
अपमाने च पूजायां हृष्टः पुष्टः सदा भवेत् ॥४३१२॥

देवनिंदापरो वापि तत्पूजा तत्परोऽथवा ।
पूजापरस्तद्रहितः कुलाकुलमते स्थितः ॥४३१३॥

निजभावसमायुक्तो देववद् विहरेत् क्षितौ ।
स्वकुलांते पुरश्चर्या कार्या रात्रौ न चान्यथा ॥४३१४॥

पतिहीना यथा नारी सर्वकर्मविवर्जिता ।
कुलं विना तथा देव सर्वदा मम साधने ॥४३१५॥

नाधिकारीति कौलेश तस्मात् भावपरो भवेत् ।
अविनीतं कुलं यस्य स कथं मम पूजकः ॥४३१६॥

तस्माद् यत्नात् तथा कार्यं यथा स्याद् विनयान्वितम् ।
भावाभावात् कुले शास्त्रे नाधिकारः कथंचन ॥४३१७॥

तेन भावविशुद्धस्तु साधकः कौलिको भवेत् ।
पशुभाव प्रवक्ष्यामि शृणु वत्स समाहितः ॥४३१८॥

यथाविधि पशोर्विद्यां गृहीत्वा भावतत्परः ।
प्रथमं गुरुसेवार्थं यत्नतः शुद्धिमाचरेत् ॥४३१९॥

न मत्स्यभोजनं कुर्यात् न स्त्रियं मनसा स्मरेत् ।
न परद्रव्यलोभी स्यात् न भोगे मानसं चरेत् ॥४३२०॥

सिंधुतीरे पर्वते वा कानने वा सुरालये ।
बिल्वमूले विविक्ते च पुण्यक्षेत्रे च शोभने ॥४३२१॥

यजेत् देवं जपेन् मंत्रं देवताध्यानतत्परः ।
देवता शुभ्रवर्णा च ध्यातव्यानन्यचेतसा ॥४३२२॥

त्रिसंध्यं देवपूजा तु त्रिसंध्यं जपमाचरेत् ।
रात्रौ मंत्रं च मालां च स्पृशेन् नैव कदाचन ॥४३२३॥

न मंत्रमुच्चरेद् भुक्त्वा मौनी स्यात् सर्वकर्मसु ।
पर्वकाले स्त्रियं नैव गच्छेत् साधकसत्तमः ॥४३२४॥

मैथुनं तत् कथालापं तद् गोष्ठीं च विवर्जयेत् ।
ऋतुकालं विना क्वापि गच्छेत् न स्त्रियमादरात् ॥४३२५॥

पुष्पं गंध जलं चैव स्वयमानीय पूजयेत् ।
पुराणश्रवणे श्रद्धा वेदवेदार्थतत्परः ॥४३२६॥

न रात्रौ भोजनं कुर्यान् न तांबूलं महेश्वर ।
गुरुणा यद् यदिष्टं स्यात् तत्सर्वं यत्नतश्चरेत् ॥४३२७॥

न शूद्रदर्शनं कुर्यात् कौटिल्यं यत्नतस्त्यजेत् ।
स्वजातकुसुमं चैव हेतुद्रव्यं च भैरव ॥४३२८॥

स्पृष्ट्वा तथा समाघ्राय पंचगव्येन शुद्ध्यति ।
रक्तवस्त्रं न गृह्णीयाद् देवीभक्तिपरायणः ॥४३२९॥

विष्णुतन्त्रस्थकल्पानि तदनुष्ठानमेव च ।
कार्यं वीरकथालापं न कुर्याद् वीरवंदित ॥४३३०॥

नित्यश्राद्धं गयाश्राद्धं संध्यावंदनमेव च ।
तीर्थस्नानं तथा पीठगमनं धर्मतत्परः ॥४३३१॥

कुर्याद् भक्त्या प्रयत्नेन चिंतयन् दैवतं निजम् ।
प्रभाते स्नानसंध्यादि मध्याह्ने जपमीश्वर ॥४३३२॥

श्रौर्णमासनमात्मार्थं भक्ष्यं पायसशर्करा ।
भोगः स्वकीयकांताया ऋतावेव न चान्यथा ॥४३३३॥

पशुस्तु द्विविधो देव पूर्वेण सह भैरव ।
अस्याधिकारः पूजायां न गुरुत्वे कदाचन ॥४३३४॥

पूर्वस्य नाधिकारोऽस्ति पूजायां देशसभ्रमे ।
पूर्वस्तु सर्वकालार्हैं र्बहिः कार्यः स्वदेशतः ॥४३३५॥

पूर्वदर्शनमात्रेण कुलदर्शनमाचरेत् ।
ब्रह्महत्यादिकं पापं वरं तच्च वरं नहि ॥४३३६॥

पूर्वदर्शनमेवात्र सत्यं सत्यं वदाम्यहम् ।
वरं कुलपरित्यागं वरं स्वकुलहिंसनम् ॥४३३७॥

न वरं स्यात् पशोः संगं स्वधर्मक्षयकारणात् ।
कुलशास्त्रे द्वयं पापं गरिष्ठं सर्वनाशनम् ॥४३३८॥

एकं स्वकुलनिंदा स्यात् द्वितीयं पशुसंगजम् ।
स भावः पशुभावः स्यात् जन्मत्रयविभावनात् ॥४३३९॥

वीरभावो भवेद् देव ततो दैवं प्रजायते ।
वीराच्च जायते दैवो दैवाद् वीरः प्रजायते ॥४३४०॥

सर्वथा तत्र भावौ द्वौ न प्रकाश्यौ कुलेश्वरैः ।
दिव्ये वीरे न संदेहः साम्यमित्यभिधीयते ॥४३४१॥

भावो हि मानसो धर्मः शाब्दः स हि कथं भवेत् ।
तस्मात् भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम् ॥४३४२॥

यथेक्षुदंडमाधुर्यं मनसा जायते प्रभो ।
तथा भावविभावस्तु मनसा परिभाव्यते ॥४३४३॥ इति ।

अथ द्रव्यपञ्चकेऽभेदभावकथन ज्ञानार्णवे—

निर्विकल्पस्य यद् द्रव्यं कथितं वीरवंदिते ।
न हि तत् सविकल्पस्य शंकातंकितचेतसः ॥४३४४॥

सर्वशंकाविनिर्मुक्तः सर्वज्ञः साधकोत्तमः ।
पंचतत्त्वं निषेव्याथ खेचरो जायते प्रिये ॥४३४५॥

अर्घ्यपात्रे वह्निसूर्यसोमामृतमये शिवे ।
सोमामृतं तु जानीयात् नानाद्रवमयी सुरा ॥४३४६॥

सविकल्पस्य देवेशि वर्णानुक्रमभेदतः ।
कथ्यते द्रव्यभेदस्तु क्रमेण वरवर्णिनि ॥४३४७॥

क्षीराज्यमधुमैरेया द्रव्यभेदा भवन्ति हि ।
सर्वज्ञत्वे वरारोहे यज्ञे दोषो न विद्यते ॥४३४८॥

अश्वमेधादियज्ञेषु वाजिहत्या कथं भवेत् ।
द्रव्यभेदा वरारोहे बहवः संति भेदतः ॥४३४९॥

जलं क्षीरं घृतं भद्रे मधुमैरेयमैक्षवम् ।
पौष्पं तरुभवं धान्यसंभवं चेक्षुसंभवम् ॥४३५०॥

सहकारफलं देवि विविधं बहुभेदतः ।
मादकं सर्वदा पापकारकं संशयावृते ॥४३५१॥

तद्विहीने तदेव स्यात् महापातकनाशनम् ।
ब्रह्महत्या सुरापानस्वर्णस्तेयादिपातकान् ॥४३५२॥

नाशयेत् पूजनाद् देवि निर्विकल्पश्च मंत्रवित् ।
विचारं च यदा कुर्यात् सर्वत्र वीरवंदिते ॥४३५३॥

घटे जलं समानीतं जले जलचरं भवेत् ।
स्थापितं स्याद् बहुदिनं जलं जीवसमन्वितम् ॥४३५४॥

क्षीरं वै यस्य जीवस्य तस्य मांसं न संशयः ।
कृशा पुत्रवती नारी वंध्या पुष्टा ततः प्रिये ॥४३५५॥

माकंदफलजं रम्यं द्रव्यं सेव्य द्विजातिभिः ।
प्रमोदकत्वाद् देवेशि शैशवे सेव्यते नरैः ॥४३५६॥

अनामिषं नास्ति किंचित् सर्वं क्षीरादिकं प्रिये ।
वेदशास्त्रपुराणेषु इति ज्ञानसमुच्चयः ॥४३५७॥

सर्वभूतेषु विज्ञानं ज्ञातव्यं देशिकोत्तमैः ।
काष्ठनिर्मथनाद् देवि प्रकटो वह्निरुच्यते ॥४३५८॥

तत् काष्ठं दह्यते तेन तथा ब्रह्ममयं जगत् ।
पापपुण्यविनिर्मुक्त ज्ञायते तद् वरानने ॥४३५९॥

किंचिदुल्लासपर्यन्तं ग्राह्यमेतत् सुरेश्वरि ।
यज्ञांगं सेवते लौल्यात् पातकी ब्रह्महा भवेत् ।
मादकं वस्तु सकलं वर्जयेत् पापकर्तृकम् ॥४३६०॥

धर्माधर्मपरिज्ञानात् सर्वशोऽपि पवित्रति ।
विण्मूत्रस्त्रीरजो वापि नखाशी सकलं प्रिये ॥४३६१॥

विचारयेन् मंत्रवेत्ता पवित्राण्येव सुव्रते ।
अन्नं ब्रह्म विजानीयात् तेन तस्य समुद्भवः ॥४३६२॥

नानाजीवाश्रयं तत्र पुरीषं केन दुष्यति ।
नानाविधा हि देवेशि देवता सलिले स्थिता ॥४३६३॥

तेनोदकेन यज्जातं मूत्रं कस्माद्धि दुष्यति ।
गोमूत्रप्राशनं देवि गोमयस्यापि भक्षणम् ॥४३६४॥

प्रायश्चित्तं तु कथितं ब्रह्महत्यादिके प्रिये ।
मले मूत्रे तु ये दोषाः भ्रांतिरेव न संशयः ॥४३६५॥

स्त्रीरज. परमेशानि देहस्तेनैव जायते ।
कथं तद् दूषणं तेन प्राप्यते परमं पदम् ॥४३६६॥

पौरुषं चैव यद् बीजं बिन्दुस्तच्चाभिधीयते ।
बिंदुस्तु परमेशानि योगोऽयं देहकारकः ॥४३६७॥

यद् योगे देहसंभूतिः तत् कथं दूष्यते बुधैः ।
अतः पवित्रं देहस्य कारणं केन विद्यते ॥४३६८॥

ज्ञानमार्गेण सकलं निर्विकल्पं भवेत् प्रिये ।
विकल्पे च कृते देवि पातकी जायते नरः ॥४३६९॥

मातृगर्भाद् विनिर्याति शिशुरेव न संशयः ।
इन्द्रियाण्यचलान्यस्य देहस्थान्यपि वत्सले ॥४३७०॥

निर्विकारतया तत्र नान्यथा भवति प्रिये ।
भगलिंगसमायोगो जन्मकाले भवेत् सदा ॥४३७१॥

काम्यते सा यदा देवि किं न स्यात् गुरुतल्पगः ।
अतएव सदा तस्य वासना कुत्सिता भवेत् ॥४३७२॥

तत्र दूषणसंयुक्तमन्यत् सर्वं शुभं भवेत् ।
पवित्रं सकलं वस्तु वासना कलुषा स्मृता ।
अतो विधिमुपाश्रित्य निर्विकल्पं मनश्चरेत् ॥४३७३॥

अथ पचमकाराणां नामान्यागमान्तरे—

कौलपंचपदार्थानां नामान्यागमजानि वै ।
निरूप्यन्ते यदेतेषां कौलिकं नाम चोच्चरेत् ॥४३७४॥

आंतरव्यवहारेषु ज्ञेयमेतदितोऽखिलैः ।
प्रथमं कारणं द्रव्यं हेतुस्तत्त्वमलीति च ॥४३७५॥

द्वितीयं साधनं शुद्धिरमंत्रं तर्पणं तथा ।
तृतीयं वारिजं शल्यं निर्निमेषं च कर्तनम् ॥४३७६॥

चतुर्थमुपभोज्यं च मुद्रा खाद्यं च वैष्णवम् ।
पंचमं संसृतिः सामरस्यमानंद एव च ॥४३७७॥

एतद् भेदस्वरूपं च कथयामि यथोक्तवत् ।
गौडी माध्वी च पैष्टी च त्रिविधं प्रथमं स्मृतम् ॥४३७८॥

क्षौद्रेक्षवादि संभूतं गौडी सात्विकमुच्यते ।
मधूककुसुमद्राक्षातालवृक्षादिसंभवम् ॥४३७९॥

माध्वीत्युक्तं राजसं तत् पिष्टतंडुलजादिकम् ।
पैष्टीत्युक्तं तामसं तद् ब्राह्मणे नृपवैश्ययोः ॥४३८०॥

शूद्रे च क्रमतः श्रेष्ठं पुनरेतन् निरूप्यते ।
द्राक्षाखर्जूरमधुभि र्गुडान्नमधुपुष्पकैः ॥४३८१॥

जातं वृक्षसमुद्भूतं सप्तधैवं प्रकीर्तितम् ।
पूर्वं पूर्वमुत्तमं स्याद् दुष्टामोदविवर्जितम् ॥४३८२॥

विकारतैक्ष्ण्योष्णहीनं शीघ्रबोधकरं तथा ।
सुगंधं रञ्जितं स्वच्छं पाकजं वाप्यपाकजम् ॥४३८३॥

स्वतः संसिद्धमपि वा प्रथमं पूजनोदितम् ।
निर्मितं याचितं क्रीतमुत्तमाधममध्यमम् ॥४३८४॥

छागमेषौ ग्रामभवौ वराहशशशल्लकाः ।
खड्गी तथा रुरुमृगः गोधा अष्टौ वनेचराः ॥४३८५॥

कुक्कुटौ ग्रामवनजौ चक्रसारसबर्हिणः ।
जलकुक्कुटचटकराजहंसाश्च तित्तिरिः ॥४३८६॥

हंस एते दशविधाः खगा एवं द्वितीयकम् ।
कूर्ममत्स्याविति द्वेधा तृतीयं परिकीर्तितम् ॥४३८७॥

अरोगिणः कालहताः कोमला पुष्टदेहकाः ।
मधुराम्लादिसहितं सुपक्वं घृतपाचितम् ॥४३८८॥

सुगंधतैलपक्वं वा सुस्वादु च मनोहरम् ।
माषजा चणकोत्था वा गोधूमतंडुलोद्भवाः ॥४३८९॥

मधुरा लवणाढ्या वा पक्वास्तैले घृतेऽपि वा ।
सुस्वाद्या दर्शनीयाश्च मुद्रा ग्राह्या प्रपूजने ॥४३९०॥

प्रथमादित्रयं चाष्टगंधेन तु पृथक्तमम् ।
पिष्ट्वा संशोष्य गुटिकामनुघृष्योदकेन तत् ॥४३९१॥

योजयेत् प्रथमस्यानुकल्पं मुख्यमिदं स्मृतम् ।
अथवा नारिकेलान्तर्जल कांस्येषु संन्यसेत् ॥४३९२॥

क्षीरं वा ताम्रपात्रस्थं गुडतक्रमथापि वा ।
तोयमैक्षवसंयुक्तं मधुना वा समन्वितम् ॥४३९३॥

गंधोदकं वानुकल्प आद्यस्यैवं प्रकीर्तितः ।
पलांडु र्वापि लसुनमार्द्रकं वा द्वितीयके ॥४३९४॥

तृतीये विजयायुक्तवटकं चणकोद्भवम् ।
तदाकृतिकृतं तद्वत् मूलकं गर्जरं तथा ॥४३९५॥

चतुर्थे नानुकल्पं स्यात् न हि मुख्यं तु पंचमम् ।
कुसुमं लिंगयोन्योर्वा काश्मीरचंदनेऽथवा ॥४३९६॥

श्रीपात्रे योजयेदेतत् मूलेन मूलमेव वा ।
अष्टकृत्वो जपेदेतद् बालादौ प्रोक्त एव हि ॥४३९७॥

मुख्यालाभेऽसंभवे वानुकल्पो नान्यथा क्वचित् ।
मुख्यं निषिध्यानुकल्पग्रहणात् पतितो भवेत् ॥४३९८॥

एतत् सर्वं पर्युषितं परित्याज्यं हि पूजने ।
लौकिकैरागमोक्तैश्च संस्कारैः संस्कृतं तु यत् ।
पूजासमाप्त्युत्तरं तद् यामात् पर्युषितं भवेत् ॥४३९९॥

मार्जाराद्यैरुपहतं नखकेशाश्रुदूषितम् ।
तथा विकृतिमापन्नं प्रथमाद्यं परित्यजेत् ॥४४००॥

भक्तिमद्भि र्हीनवर्णैरपि संसाधितं च यत् ।
द्वितीयाद्यं पूजनार्थमुपादेयं भवेत्तु तत् ॥४४०१॥

अनिमित्तं तु पूजायाः प्रथमाद्यं तु न स्पृशेत् ।
पूजानिमित्तमानीतं यज्ञीयं तत् पवित्रकम् ॥४४०२॥

शंका तत्र न कर्तव्या तत् स्पृष्ट्वा तु शुचिर्भवेत् ।
पूजामध्ये समानीतं विप्रेणान्येन वापि च ॥४४०३॥

द्वितीयाद्यं मुख्यमपि यत् किंचित् तं निवेदयेत् ।
संस्कृतैः प्राक् समायोज्य मुख्यैस्तैस्तै र्न चान्यथा ॥४४०४॥

पूर्वानुकल्पेन पर मुख्यं मुद्रां विना भवेत् ।
नारिकेलोदकादौ तु न द्वितीयतृतीयके ॥४४०५॥

अनुकल्पेष्वपि तथा कुसुमेनैव तर्पयेत् ।
आत्मार्चनेऽक्षताद्यैस्तु पूजयेद् गुरुमुख्यकान् ॥४४०६॥

मंत्रमावर्तयन् स्वात्मीकारं बोधं च भावयेत् ।
अत्र पूजा गुरोर्नास्ति कुमार्यादेस्तथैव च ॥४४०७॥

नैमित्तिके पूजनं तु कुर्याद् गुरुमुखस्य हि ।
मंत्रं पठन् भावनीयं पात्रदानादिकं क्रमात् ॥४४०८॥

घटिकापूजने त्वार्द्रमूलकेनैव नेतरत् ।
द्वितीयाद्यनुकल्प तु स्थापयेदेकपात्रके ॥४४०९॥

तृतीयमात्रानुकल्पेऽप्येवं शुद्धचा सह न्यसेत् ।
नारिकेलोदकादौ तु यथाशक्त्या समर्चयेत् ॥४४१०॥

शक्त्या वापि समष्ट्योपचारैरावृतिमर्चयेत् ।
अन्यत्र तु यथोक्तं स्यान्नालस्येनान्यथा चरेत् ॥४४११॥

नारिकेलजलादौ तु विशेषार्घ्यं समाचरेत् ।
स्वादिष्टयेत्यादिशापमोचनं तदनंतरम् ॥४४१२॥

इंदोः कलादि सर्वं च हेतुपात्रादितत्क्रियाम् ।
अत्राशक्तस्तु सामान्यं कलशं चार्घ्यमेव च ॥४४१३॥

स्थापयेत् तत्र तु कलाः समष्ट्या वापि पूजयेत् ।
पीठं समष्ट्या संपूज्य पीठशक्ती र्यजेत् क्रमात् ॥४४१४॥

ऽपचर्य यथाशक्त्या त्रिर्मूलेन प्रपूजयेत् ।
एवं पूजां ततः स्तोत्रं कवचं प्रपठेत् क्रमात् ॥४४१५॥

सहस्रनामपाठश्च तत् तन्न्यासादिपूर्वकम् ।
मंत्रस्य मानसं श्रेष्ठं स्तोत्रादेर्वाचिको जपः ।
इत्येवं नित्यपूजादिविधानं प्रविवेचितम् ।।४४१६।।

इति श्रीमदागमरहस्ये सत्संग्रहे भावाद्यनुकल्पातकथन नामैकोनविंशः पटलः ।। १६ ।। आदितः सप्तचत्वारिंशत् ।

—

## अथ विंशः पटलः ।

अथ प्रायश्चितम्, त्रिशक्तिरत्ने—

निषिद्धाचरणात् पुंसां विहिताकरणात् तथा ।
प्रायश्चित्तोपपातः स्यादिति सत्यं न संशयः ।।४४१७।।

नित्यकृत्यातिक्रमे तु शांत्यै विद्यां शतं जपेत् ।
नैमित्तिकातिक्रमे तु सहस्रं प्रजपेन् मनुम् ।।४४१८।।

लिंगागमे—

शृणु देवि प्रवक्ष्यामि प्रायश्चित्तविधिं तव ।
गुरुत्यागकरः शिष्यः प्रायश्चित्तीभवेद् ध्रुवम् ।।४४१६।।

लक्षं श्रीपादुकां जप्त्वा तस्मात् पापाद् विशुद्धयति ।
मंत्रत्यागकरो यस्तु तत् संगं वर्जयेत् प्रिये ।
लक्षमेकं जपेन् मंत्रं होमतर्पणतः शुचिः ।।४४२०।।

श्रीपादुकां गुरुपादुकाम् । त्यागे तु कौलिकस्यैव गुरो कौलिकाना निषेधः । नत्वकौलिकस्य । तथा च यामले—

मधुलुब्धो यथा भृंगः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरो गुर्वन्तरं व्रजेत् ।।४४२१।।

गुरो. पशो. गुर्वन्तर कुलीनम् । एतच्च—

यदि दैवात् पशोः विद्या लभ्यते कुलजैर्जनैः ।
द्विजं तु कौलिकं प्राप्य पुनर्विद्यामुपाश्रयेत् ।।४४२२।।

इति वचनेन सुव्यक्तमेव। एव पशूनामपि पशुगुरुत्यागे दोषो ज्ञेय । लक्षजपस्तन्मंत्रस्यैव तद्दशांशेन होमादिरपि ।

अदुष्टमंत्रत्यागेऽपि प्रायश्चित्तं तथैव हि ।
कृत्वा क्षमापयेत् देवीमंतेश्लोकमिमं पठन् ॥४४२३॥

क्षमस्व मातस्तत् पापं हरदेवि कृपां कुरु ।
इति क्षमाप्य तामेव गृह्णीयात् पापनाशिनीम् ॥४४२४॥

ता पूर्वप्राप्ता विद्याम् । दुष्टमंत्रस्तु त्याज्य एव ।

तथा च यामले—

सकलो बीजहीनस्तु संदिग्धो निंदितस्तथा ।
मनवस्तु न सिध्यन्ति गुरुः स्याद् ब्रह्मघातकः ।
तदा तं सहसा ज्ञात्वा मंत्रं देवं गुरुं त्यजेत् ॥४४२५॥

सकलादिदोषस्तूपलक्षणमात्रम् । अन्येऽपि तत् तत् प्रकरणतो बोध्या ।

अनेकधा पशोरन्नं भुंजते ये च कौलिकाः ।
लक्षत्रयं जपेद् विद्यां लक्षं चाप्यजपां जपेत् ।
होमयेत् हविषान्नेन निष्पापः स्यात् तदा ध्रुवम् ॥४४२६॥

अनेकधा वर्षपर्यंतम् । पशो वीरवैष्णवादे । अत्रापि दशांशमेव होमादिः ।

एकपात्रे पिबेत् द्रव्यं वीरो माहेश्वरो यदि ।
श्वानोच्छिष्टसमं पानं प्रायश्चित्तं सकौलिके ॥४४२७॥

गायत्र्यास्तु सहस्रेण चोपवासत्रयेण वा ।
सम्यक् शोधितचित्तस्तु सुवर्णं गुरवे ददेत् ॥४४२८॥

गायत्री स्वदेवगायत्री ।

बलात् स्वरसतो वापि यो रमेत् मंत्रमातरम् ।
दशलक्षं मनुं जप्त्वा तुषानलं समाचरेत् ॥४४२९॥

मंत्रमातरं गुरुपत्नीम् ।

मंत्रपुत्र्याः स्वपुत्र्याश्च भगिन्याश्च कुलस्त्रियः ।
स्मरणाल्लक्षजापेन पूतो भवति कौलिकः ॥४४३०॥

मन्त्रपुत्री पुत्रीत्वेन कृतोपदेशायाः। न भोग्याया शुद्धयर्थं तस्या अप्युपदेशविधानात्। कुलस्त्री वीरपत्नी तद्गमनं भर्तु रनुज्ञयैव दोषायेति।

अन्यच्च वीरयामले—

**कृत्वा वीरवधं मंत्री वृथापानं गुरोः स्नुषाम्।**
**मंत्रपुत्रीं वीरपत्नीं रमित्वा लक्षमाजपेत् ॥४४३१॥**

इद वामाचाराकृष्टवीरविषयम्। एव 'त्रयोदशसहस्रं तु दिव्यवीरवधे जपेदिति। अकामकृतवधविषय वधानुकूलव्यापारमात्रविषयं वा। आततायिविषयं वा।

तथा च—

**पंचलक्षजपात् पापशांति र्गुरुवधोद्यमे।**
**यावज्जीवं तु हनने तथा जन्मांतरेष्वपि ॥४४३२॥**

**अनस्थिप्राणिसंघातं जलौकादिस्त्रियं तथा।**
**हत्वा चैकादशशतं जप्त्वा पापाद् विमुच्यते ॥४४३३॥**

**सर्पमार्जारनकुलमूषकोष्ट्रखरान् हयम्।**
**गजाद्यांश्च मृगान् सर्वान् हत्वा चाष्टशतं जपेत्।**
**जपेदष्टसहस्रं तु क्षुद्रजंतुवधे कृते ॥४४३४॥**

अष्टशतमष्टोत्तरशत अष्टसहस्रमष्टोत्तरसहस्रम्। क्षुद्रजतव उक्तभिन्नाग्छागादय। यत्तु 'छागादिहनने जप्यात् त्रिसहस्रमिति तत्रान्तरेपूक्त तदभ्यासकृतविषयम्।

अन्यथा त्रिशक्तिरत्ने—

**वलिदानं विना मंत्री घातयेन् न पशून् क्वचित्।**
**अन्यथा स्मार्त्तमुदितं प्रायश्चित्तं मनीषिभिः ॥४४३५॥**

**गोवधे दशभिर्लक्षैर्मुच्यते नरकार्णवात्।**
**लक्षै द्वादशभिर्मंत्री वृषं हत्वा विमुच्यते ॥४४३६॥**
**गुरुं हत्वा प्रमादेन पंचलक्षैर्भवेत् शुचिः।**

गुरुं ब्राह्मणम्।

**क्षत्रादयो यथोक्तेन मुच्यन्ते किल्विषादतः ॥४४३७॥**

यथोक्तेन ब्राह्मणापेक्षया यथाक्रमम्। द्वैगुण्याद्याधिक्येन। तत्र तन्त्रे—

यद् ब्राह्मण्यवधे लक्षं क्षत्रिये द्विगुणं स्मृतम्।
वैश्ये त्रिगुणमुद्दिष्टं पादजे स्याच्चतुर्गुणम् ॥४४३८॥

अत्र लक्ष वध इत्युभयमप्युपलक्षणम्। यद् विप्रकर्तृक प्रायश्चित्तम् तत् क्षत्रियेण ब्राह्मणाद् द्विगुणम्। वैश्येण त्रिगुणम्। शूद्रेण चतुर्गुणम्।

अर्हत्बौद्धवधे मंत्री खाब्धिलक्षं मनुं जपेत्।

खाब्धिलक्षं चत्वारिंशल्लक्षम्।

बभ्रोश्च शूकराणां च वधे पंचसहस्रकम् ॥४४३९॥

जपेदिति शेष। बभ्रुर्नकुल।

पक्षिणां हनने मंत्री द्विसहस्रेण शुद्धयति।
देवद्रोहाद् गुरुद्रोहाद् त्रिशत्कोटिं मनुं जपेत् ॥४४४०॥
सर्पमार्जारमत्स्यानां वधे वेदसहस्रकम्।

द्रोहो मरणानुकूलव्यापार.। सर्पादीनामकामकृतवधे प्रायश्चित्तम्।

देवद्रव्यं गुरुद्रव्यं भुक्त्वा तावन् मनुं जपेत् ॥४४४१॥

तदनुज्ञया भुक्त्वा तावन् मनुं त्रिंशत्कोटिम्। श्रीगुरोर्विप्लवे पंचदशकोटि जपेन् मनुम्। विप्लवे उद्वेगे।

निंदने समयानां च योगिनोवीरयोस्तथा।
शास्त्राणां मंत्रिणां चैव सहस्रं जपमाचरेत् ॥४४४२॥

वामदक्षिणसिद्धान्तशैवव्रतधरे हते।
चतुष्कोटिमितं मंत्री जपन् शुद्धयति किल्विषात् ॥४४४३॥

आद्यादिनिंदने मंत्री दशावर्तेन शुद्धयति।
अर्घ्यामृतं पिबेत् पूर्वं देवीमुत्थापयेत् ततः ॥४४४४॥
पशुपानं भवेत् तस्य तत्क्षयो लक्षतो भवेत्।

अर्घ्यामृत विशेषार्घ्यामृतम्। लक्षतो लक्षजपात्।

अनिवेद्य तु यो भुंक्ते प्रजपेत् स शताष्टकम् ॥४४४५॥

अनिवेद्य देव्यनुज्ञामगृहीत्वा ।

वीरहत्या वृथापानं वीरपत्नीनिषेवणम् ।
प्रायश्चित्तं चरेन् मंत्री दिव्यवीरार्चनादिकम् ॥४४४६॥

दीपनाशे पात्रनाशे पात्रप्रस्खलने तथा ।
पूजयित्वा महादेवीं जपेदष्टोत्तरं शतम् ।
अज्ञाने च यदुद्दिष्टं ज्ञानतो द्विगुणं भवेत् ॥४४४७॥

इदं कामतो द्वैगुण्य सर्वत्र वोध्यम् ।

भूतभैरवे—

भग्नं च स्फुटितं यंत्रं कृतं चौरेण वा प्रिये ।
उपवासं प्रकुर्वीत दिनमेकमतंद्रितः ॥४४४८॥

लक्षमात्रं जपेद् विद्यां मोहतर्पणपूर्विकाम् ।
स भक्त्या च गुरुं तोष्य ब्राह्मणानपि तोषयेत् ॥४४४९॥

कदाचिल्लुप्तचिन्हं वा स्फुटितादिविदूषितम् ।
भग्नं यजति यो मर्त्यो मृत्युस्तस्य भवेद् ध्रुवम् ॥४४५०॥

तस्मात् स तीर्थराजे वा गंगादिसरितांतरे ।
समुद्रे प्रक्षिपेद् देवि अन्यथा दुःखमाप्नुयात् ॥४४५१॥

अन्यच्च श्रीकुले चोर्ध्वाम्नाये—

अथ प्रातःस्मृतिमुखे प्रायश्चित्तं विविच्यते ।
प्रातःकर्मादि स्नानांतस्वासनादिक्रमस्य च ॥४४५२॥

लोपे युक्त्या तु सामान्यं प्रायश्चित्तं समाचरेत् ।
संध्यायां मूलदेव्यर्घतर्पणे जप एव च ॥४४५३॥

प्रधानमन्यदंगस्य तयो र्लोपे क्रमेण च ।
अष्टोत्तरशतं मूलं दशसंख्यं तथा जपेत् ।
क्षुद्रचांगलोपे सर्वत्र प्रायश्चित्तं प्रधानवत् ॥४४५४॥

प्रायश्चित्तं तु सामान्यमुक्तमज्ञानपूर्वकम् ।
विशेषानुपलब्धौ तु ज्ञाने तद्द्विगुणं भवेत् ॥४४५५॥

तथाज्ञानात् तदभ्यासे त्रिगुणं ज्ञानपूर्वकात् ।
अभ्यासे वेदगुणितं शक्ताशक्तविभेदतः ॥४४५६॥

प्रायश्चित्तं चरेदुक्तं युक्त्या सामान्यमेव वा ।
संपूर्णसंध्यालोपे तु मुख्यलोपवदिष्यते ॥४४५७॥

द्वितीयकालस्याप्राप्तौ संध्यां भूयः समाचरेत् ।
प्रधानलोपे कालातिक्रमनिष्कृतिमाचरेत् ॥४४५८॥

बुद्ध्या संध्यापरित्यागे सहस्रं प्रजपेन् मनुम् ।
त्रिरात्रं संध्यया हीनो बुद्ध्या जपसहस्रकम् ॥४४५९॥

उपवासमहोरात्रं कृत्वा शुद्धिमवाप्नुयात् ।
एवं दिनाष्टकेऽतीते त्रिरात्रोपोषणं चरेत् ॥४४६०॥

सहस्रसंख्यं च जपं कृत्वा शुद्धिमवाप्नुयात् ।
मासातीते तु पतितो भवेन् मंडलबाह्यगः ॥४४६१॥

अज्ञानात् तु त्रिरात्रादौ प्रायश्चित्तं समभ्यसेत् ।
एवमेव नित्यजपलोपेऽपि स्याद् विनिष्कृतिः ॥४४६२॥

आपत्कालेष्वंगलोपे न दोषः सर्वकर्मसु ।
सर्वकर्मविहीनस्तु दिनैकं सूक्तकं श्रियः ॥४४६३॥

पठेत् षोडशवारं तु तद्दोषस्यापनुत्तये ।
त्रिरात्रमेवं चेत् सूक्तपाठो जपसहस्रकम् ॥४४६४॥

त्रिरात्रोर्ध्वं निराहारो जपेद् दशसहस्रकम् ।
बुद्धिपूर्वं प्रतिदिनं जपेत् पंचसहस्रकम् ॥४४६५॥

दिनत्रयानन्तरं तु निराहारस्त्रिरात्रकम् ।
मूलं जप्त्वायुतं सम्यक् चक्रराजं समर्चयेत् ।
संध्याया मुख्यकालस्याप्यत्यये प्रजपेद् दश ॥४४६६॥

दशेति दशवारमिति ।

मध्यकालस्य तत्कालगायत्रीं प्रजपेत् शतम् ।
सपर्यायां महाविघ्नः संकल्पानंतरं यदा ॥४४६७॥

पात्रस्थापनतः पूर्वं शक्त्यर्चा मानसीं चरेत् ।
विघ्नात्यये कृताच्छेषां पूजां कुर्यात् यथाविधि ॥४४६८॥

कृते पात्रस्थापने तु विसृष्टव्यं तु तत्र यत् ।
विसृज्य पात्रादिकं तत् मनसाराध्य वै ततः ॥४४६९॥

निवृत्तविघ्नः शांत्यर्थं शतमष्टोत्तरं जपेत् ।
पूर्ववत् पूजयेच्चापि विघ्नस्याथानतिक्रमे ॥४४७०॥

संभवेऽन्येन कर्तव्या पूजोक्तवदनन्तरम् ।
निवृत्तविघ्नः प्रजपेत् सहस्र तदसंभवे ॥४४७१॥

निराहारस्तद्दिने तु द्वितीयदिवसेऽर्चयेत् ।
संकल्पं द्वारपूजादि भूयः सर्वं समाचरेत् ॥४४७२॥

पूजांगहोमतः पश्चादतीतगुणसंख्यया ।
त्रिस्त्रिः प्रत्येकतो हुत्वा हुनेदष्टोत्तरं शतम् ॥४४७३॥

ततस्तु प्रणमेद् देवीमथ बल्यर्चनं ततः ।
विघ्ने तूद्वास्य श्रीदेवीं पात्राद्यं विसृजेत् ततः ॥४४७४॥

सहस्रं प्रजपेद् विघ्नशांत्यन्ते दोषशांतये ।
आवाहिता या देव्याश्च यदि विघ्नाद् विसर्जनम् ॥४४७५॥

तदा विघ्ननिवृत्यंते संकल्पादि विना पुनः ।
विसृष्टमर्घ्यादि सर्वं संस्थाप्य पीठपूजनात् ॥४४७६॥

कृत्वावाहनपर्यन्तं कुर्यात् शेषार्चनं क्रमात् ।
समाप्य संस्कृते वह्नौ शतमष्टोत्तरं हुनेत् ॥४४७७॥

पायसेन सामयिकानभ्यर्च्य देवतां गुरुम् ।
संप्रार्थ्य दोषान् मुच्येत दिनातिक्रमसंभवात् ॥४४७८॥

दिनसंख्या समावृत्त्या पायसेनाहुतिं चरेत् ।
अष्टोत्तरशताद्धोमात् पूर्वदोषाद् विमुच्यते ॥४४७९॥

दीक्षादावप्येवमेव विघ्ने सति समाचरेत् ।
सर्वेषु विघ्नपक्षेषु मानसं पूजनं चरेत् ॥४४८०॥

व्रतदीक्षास्थापनासु पूजनेषु पुरस्कृतौ ।
न सूतकं वै संकल्पानंतरं कर्तृ ऋत्विजाम् ॥४४८१॥

प्रविश्य तु मृताशौची देवतामुख्यमंडले ।
कुर्यात् मंडलपूजां वै तद्दोषस्य प्रशांतये ॥४४८२॥

कुमार्या वटुकेनापि सुवासिन्या द्वयेन च ।
पचसामयिकैश्चैव युक्तं मंडलपूजनम् ॥४४८३॥

देवतोद्वासनात् पूर्वात् तत् प्रवेशे तु पूजने ।
दुग्धेन देवीं संस्नाप्य मालामंत्रोक्तदेवताः ॥४४८४॥

क्रमात् तत् तत् पात्रतस्तु संकल्प्य हवनं घृतैः ।
होमांते पंचधा कुर्यात् होमेऽतीते पुनस्तथा ॥४४८५॥

अग्नि संस्थाप्य होतव्यं ब्राह्मणान् भोजयेत् ततः ।
कुर्यादेवं निष्कृतिं तु देवताकोपशांतये ॥४४८६॥

बुद्धिपूर्वप्रवेशे तु जपेद् दशसहस्रकम् ।
उपोष्य तु त्रिरात्रं वै ब्राह्मणान् भोजयेत् ततः ॥४४८७॥

एतच्चाप्युभयोस्तुल्यं ज्ञातत्वस्याविशेषके ।
एवं क्षतांगयुवतानां निषिद्धानां प्रवेशने ॥४४८८॥

पुनर्मंडलपूजा तु कर्तव्या दोषशांतये ।
आवृत्तिर्गुरुनित्या च समयाम्नायपूजनम् ॥४४८९॥

पूजात्रयं समश्चेति प्रधानं पूजयेत् ततः ।
पात्रसंस्थापनं पीठवल्ल्यर्चे होम एव च ॥४४९०॥

समर्पणं च मुख्यांगगुरुशक्त्यादि पूजनम् ।
द्वारपूजादिकं चापि गौणांगमिति कथ्यते ॥४४९१॥

गौणांगलोपेऽष्टवारं तर्पयेन् मूलदेवताम् ।
तर्पयेच्छतमष्टौ च मुख्यांगस्य च विप्लवे ॥४४९२॥

प्रधानं च शतं तर्प्य जपेत् तत्र सहस्रकम् ।
प्रसंगस्यातिक्रमे तु चैवं कृत्वा न दोषभाक् ॥४४९३॥

तर्पयित्वाष्टवारं तु कुर्यात्लुप्तं यथोक्तवत् ।
प्रसंगस्त्वावाहनान्तं नैवेद्योद्वासनान्तकम् ।
पूर्वक्रियाणां तु भवेन् नैवेद्यं द्विविधं स्थितम् ॥४४९४॥

विशेषार्घ्यस्य देव्याश्चेदुद्वासोऽपि द्विधा स्मृतः ।
तत् तत् पूर्वक्रियायां तु तत् तदन्तं प्रसंगकः ॥५४९५॥

प्रधानाद्येकदेशस्य तत् तदंतं प्रसंगकः ।
योग्यत्वात् तत्र सामान्यं प्रायश्चित्तं प्रकल्पयेत् ॥४४९६॥

एव देव्या ह्य् उद्वासान्ते पूजान्ते वापि तर्पणम् ।
असंभाव्यमतः कुर्याद् युक्त्या सामान्यनिष्कृतिम् ॥४४९७॥

मूलदेवी गुरुर्नित्याथावृतिश्चेति वै क्रमात् ।
एतेषां तर्पणे पूर्वपूर्वस्मात् गौणमुत्तमम् ॥४४९८॥

मुख्यपात्रात् कृते गौणतर्पणे मूलमष्टधा ।
प्रतर्प्य तर्पयेद् भूयो गौणान् मुख्यप्रतर्पणे ॥४४९९॥

कृते देवीं शंखतोयैर्मूलेन प्रोक्ष्य वै ततः ।
पुष्पांजलिं समर्प्याथ प्रजपेन् मूलमष्टधा ॥४५००॥

यथोक्तं तर्पयेद् भूयो देवतोद्वासने सति ।
प्रायश्चित्तं तु युक्तयैव सामान्योक्तं समाचरेत् ॥४५०१॥

एवं गुरुकुमार्यादेस्तर्पणव्यत्यये सति ।
प्रायश्चित्तं तु सामान्य यज्ञयुक्त्या विचक्षणैः ॥४५०२॥

हेतुपात्रस्थद्रव्ये तु कृमिर्वा मक्षिका पतेत् ।
अन्यद्वा च तदुद्धृत्य जपेन् मूलं तदष्टधा ॥४५०३॥

तेषां मृतानां संपर्के छिन्नकेशनखस्य च ।
द्रव्यं विसृज्य तत् पात्रं पुनः संस्थापयेत् क्रमात् ॥४५०४॥

रक्ताद्यमेध्यसंपर्के स्वस्थानाद् भ्रंशितेऽपि च ।
देवतापात्रयोरेवमुपघातेऽशुभं भवेत् ॥४५०५॥

हेतुश्चोपात्रयोर्देव्याश्चोपघातो मृतिप्रदः ।
पात्रोपघाते तद्भूयः संस्थाप्य पूजयेत् क्रमात् ॥४५०६॥

पश्चात् त्र्यहमनश्नन् वै जपेद् दशसहस्रकम् ।
आधारपीठविश्लेषः पात्रादेर्भ्रंश उच्यते ।
पात्रभ्रंशे सूर्यकलादिकां संस्कृतिमाचरेत् ॥४५०७॥

यंत्रमूर्त्याद्युपघाते चान्तःपूजादिकं क्रमात् ।
कृत्वा बाह्योपचारं च शेषं चैव समापयेत् ॥४५०८॥

उपचारे तु दुग्धेन स्नापयेत् तदनन्तरम् ।
होमं मूलेन वै कुर्यादष्टोत्तरशतं पुनः ॥४५०९॥

पूजयेच्च गुरुं शक्त्या तद्दोषविनिवृत्तये ।
असंभवे तुर्यदिने वाप्येवं पूजयेत् क्रमात् ॥४५१०॥

अमेध्यस्य तु संपर्के संशोध्यैव तु स्थापयेत् ।
पात्रादिकं यंत्रमूर्त्यादिकं चापि प्रयत्नतः ॥४५११॥

प्रतिष्ठाया अकरणे प्रोक्तयंत्रादिशोधने ।
असंभवेऽन्ययंत्रादौ पूजयेद् देवतां क्रमात् ॥४५१२॥

यंत्रादिभंगे भ्रंशे वा महासांतपनं चरेत् ।
संकल्पानंतरं देव्यावाहनात् पूर्वमेव च ॥४५१३॥

देवतोद्वासनात् पश्चात् समाप्तेः पूर्वमेव च ।
यंत्रादेरपघाते तु जपेन् मूलं सहस्रकम् ॥४५१४॥

भंगे तु युक्त्या सामान्यं प्रायश्चित्तं समाचरेत् ।
वलिगुर्वात्मशंखादिपात्राणामुपघातके ॥४५१५॥

अष्टोत्तरसहस्रं तु जपित्वा स्थापयेत् पुनः ।
उपघाते स्वपात्रस्य मूलमष्टशतं जपेत् ॥४५१६॥

दीपनाशे तु कर्तव्यं मंडलाख्यं प्रपूजनम् ।
दीपान्तरस्य सत्त्वे तु न दोषस्तत्र विद्यते ॥४५१७॥

दीक्षायां मध्यकुम्भस्य चोपघाते च देववत् ।
हेतुपात्रवदेव स्यादन्यकुम्भोपघातके ॥४६१८॥

अथवा मूलमंत्रं च जपेद् दशसहस्रकम् ।
देवतावाहनात् पूर्व कलशे विघ्न आगते ॥४५१६॥

कालांतरे एव कुर्यात् संकल्पादि विधानतः ।
गुरोर्वरणतः पश्चाद् विघ्ने कालान्तरे तदा ।
यदा दीक्षा तु संकल्पादिकं न तु पुनश्चरेत् ॥४५२०॥

दीक्षांतरे तु संकल्पादिकं भूयः समाचरेत् ।
आवाहनानंतरे तु विघ्नेनोद्वासनं ततः ॥४५२१॥

प्रत्यहं पूजनं कार्यं स्वेन वान्येन वा तथा ।
विघ्नादिक्रमपर्यन्तमतीतदिनसम्मितम् ॥४५२२॥

सहस्रं प्रजपेत् वापि शतमाज्येन वा हुनेत् ।
पुनर्दीक्षा विघ्नशांत्यानंतर्येण समाचरेत् ॥४५२३॥

न कालशोधनं कुर्याद् विलंबप्रतिषेधनात् ।
असमर्थो जपादीश्च ब्राह्मणेनैव कारयेत् ॥४५२४॥

विघ्नाधिक्ये देवतां चोद्वासयेदेव वै ततः ।
पूजायां देवतोद्वासनिष्कृतिं च समाचरेत् ॥४५२५॥

तथा यत्रान्यकलशानां चापि तु विसर्जने ।
प्रायश्चित्तं तु सामान्यमपि किंचित् समाचरेत् ॥४५२६॥

देवतानुद्वासनेऽपि चार्घ्यपात्रविसर्जने ।
पूजनस्यासंभवेऽपि पूर्वोक्ता निष्कृति र्भवेत् ॥४५२७॥

उपदेशोत्तरं विघ्ने गुरो र्गुरुसमेन च ।
अन्येन वापि कर्तव्यं शेषं कर्म यथाविधि ॥४५२८॥

ततः पूर्वं गुरो विघ्ने महत्यन्यगुरोः पुनः ।
सलक्षणाद्वाप्यन्यस्मात् वृतात् संकल्पयेत् पुनः ॥४५२९॥

उपदेशादिकं ग्राह्यं शेषकर्मपुरःसरम् ।
अत्राचार्यस्य पूजायां प्रायश्चित्तमपीष्यते ॥४५३०॥

शिष्योऽपि विघ्नशांत्यर्थं सहस्रं जपमाचरेत् ।
अन्यालाभे मृतावन्यतरस्योपवसेत् तथा ॥४५३१॥

त्रिदिनं दशसाहस्रं जपं कुर्यात् समाहितः ।
वृतौ विघ्ने च ब्रह्मादेरन्यं वृत्वा समापयेत् ॥४५३२॥

कर्मविघ्नप्रशांत्यर्थं सहस्रजपमाचरेत् ।
कर्मान्तरेष्वप्याचार्यादौ सहस्रं जपं भवेत् ।
मंडलस्योपघाते तु मलमूत्रासृगश्रुभिः ॥४५३३॥

तत्पापस्य प्रशान्त्यर्थं सहस्रं जपमाचरेत् ।
मंडले रुधिरं कृत्वा क्रोधाच्चांद्रायणं चरेत् ॥४५३४॥

अज्ञानात् कृच्छ्रमेव स्याज्ज्येष्ठे सांतपनं चरेत् ।
द्रव्यबिन्दोः प्रस्खलने तत्र दत्वा जलं भुवि ॥४५३५॥

वाराह्यै नम इत्येवं प्रणमेद् दंडनायिकाम् ।
बलाद् धृत्वा स्त्रियं चैव कुर्याच्चांद्रायणव्रतम् ॥४५३६॥

ज्येष्ठांगत्वात् सांतपनं कृत्वा दोषात् प्रमुच्यते ।
न्यूनवर्णस्य पूजायां स्वात्मीकृत्यायुतं जपेत् ॥४५३७॥

अप्राप्तषोडशोकस्य न्यूनदीक्षावतस्तथा ।
एतत् सामयिकत्वेन स्वात्मीकारं प्रकीर्तितम् ॥४५३८॥

तद्दोषो गुरुशक्त्यादिपूजने विद्यते क्वचित् ।
विप्रस्य वीरपाने तु सहस्रजप इष्यते ॥४५३९॥

तथा वैश्यक्षत्रिययोः पशुपाने प्रकीर्तितम् ।
चांद्रायणेन संशुद्धिः पशौ विप्रस्य वै भवेत् ॥४५४०॥

असंस्कृतपशौ कृच्छ्रं चांद्रायणमपीष्यते ।
प्राश्योच्छिष्टमयोग्यस्य सहस्रजपतः शुचिः ॥४५४१॥

अयोग्यस्य दातुरपि तुल्य एष विधिः स्मृतः ।
न्यूनवर्णाश्रमाणां तु त्रिरात्रापोषणं जपः ॥४५४२॥

अप्रक्षाल्य समष्टिं वा पूर्णपात्रमथापि वा ।
हुत्वानुक्तसुवासिन्यै दत्वा चापि स्वशेषकम् ॥४५४३॥

प्रजप्य मुच्यते दोषादष्टोत्तरसहस्रकम् ।
प्राकट्यमभ्युपगतः संशुद्धौ बाह्यनिष्कृतिम् ॥४५४४॥

चांद्रायणं तथा कृच्छ्रं महासांतपनं चरेत् ।
गुरुद्रोहश्च तत्पत्नीगमनं समयक्षतिः ॥४५४५॥

आचारस्य परित्यागः पशुप्रकटनं तथा ।
महापातकमेतत्तु पंचकं परिकीर्तितम् ॥४५४६॥

गुरोर्वित्तादिहरणं भर्त्सनं शास्तिलङ्घनम् ।
आद्यं त्रिधैवं संप्रोक्तं गुरुस्तत् समयोषितोः ॥४५४७॥

गमं द्वितीयं द्विविधं पूजा देवादिमध्ययोः ।
विघ्नात् तृतीयं द्विविधं त्यागादाचारमंत्रयोः ॥४५४८॥

तुर्यं द्विधार्चनादेस्तु कथनं च प्रदर्शनम् ।
पशुस्य एवं द्विविध पंचमं ज्ञानपूर्वकम् ॥४५४९॥

नास्त्येषु निष्कृतिश्चाज्ञाते महायागमाचरेत् ।
ज्ञाताज्ञातान्यपापेषु पादुकायाश्च त्रिर्जपः ॥४५५०॥

मूलस्य दशजापो वा शतं साहस्रमेव वा ।
पादुकायाः शतं चापि सहस्रं वा जपस्तथा ॥४५५१॥

जपो वा मूलगायत्र्या ह्ययुतं सर्वनिष्कृतौ ।
निराहारस्त्रिरात्रं तु मूलायुतजपात् तथा ॥४५५२॥

सामर्थ्यात् तारतम्येन पापानां तारतम्यतः ।
युक्त्या प्रोक्तेषु पक्षेषु कांचिन् निष्कृतिमाचरेत् ॥४५५३॥

सुवासिनीनां सामान्ये पापे वापि विशेषके ।
प्रोक्तार्द्धं वापि पादं वा प्रायश्चित्तं विशुद्धिकृत् ॥४५५४॥

बालवृद्धातुराणां वाप्येवमेव हि निष्कृतिः ।
अथ सांतपनाख्यं तु व्रतं सर्वाघनाशनम् ॥४५५५॥

प्रोक्तपापे तु तप्तस्य भक्तस्य विहितं हि तत् ।
अस्तादिदोषरहिते सिताष्टम्यामथोषसि ॥४५५६॥

मौनेन कुर्यात् संध्यांतमथाज्ञां प्रार्थ्य वै गुरोः ।
ज्येष्ठाद् वा योग्यतोऽन्यस्मादनुज्ञातः समाचरेत् ॥४५५७॥

प्राणायामत्रयं कृत्वा जन्मादि तत्क्षणावधि ।
कृतानामपराधानामघानां क्षयहेतवे ॥४५५८॥

अन्यत्र तत् तत् पापस्य क्षयद्वारेति कीर्तयेत् ।
परदेवताप्रीत्यर्थं महासांतपनाभिधम् ॥४५५९॥

करिष्ये त्वेवं संकल्प्य व्रतं पश्चात् शिवालये ।
पुण्यतीर्थतटे चैकान्ते जपेत् तिथिसंख्यकम् ।
शतं शतं सिद्धवह्नौ दीक्षावन्नित्यवत् तु वा ॥४५६०॥

घृताक्तैः बिल्वपत्रैर्वा दशांशं जुहुयात् क्रमात् ।
रात्रावर्चा कारयेद् वै गुर्वादिद्वारतः क्रमात् ॥४५६१॥

तद्गृहे नैव संकल्पं कुर्यात् पूजां गुरुस्तथा ।
अंते सामयिकाचार्यास्त्रिचतुःपंचसंख्यकम् ॥४५६२॥

यथायोग्यं तु स्वीकुर्यात् पात्रं प्रोक्तविधानतः ।
प्रतिपात्रं ग्रासमेकमोष्ठासस्पर्शि भक्षयेत् ॥४५६३॥

शुद्धयौदनादिकं मिश्रं सर्वान्ते तु पिबेज्जलम् ।
पात्रस्य समसंख्यं च चुलुकेन ततो जपेत् ॥४५६४॥

शतत्रयं तु तत् पश्चात् शक्त्या संभोजयेद् द्विजान् ।
रात्रौ स्थंडिलशायी च ब्रह्मचर्ययुतस्तथा ॥४५६५॥

कुर्याज्जपादिकं त्वेवं त्रिदिनं प्रातरेव हि ।
संध्यानंतरमारभ्य चतुर्थेऽह्नि विशेषतः ॥४५६६॥

साधकानां च पूजान्ते गुरुमाचार्यमुख्यकान् ।
शक्त्या संपूज्य गुर्वाज्ञापूर्वकं तद् व्रतं कृतम् ॥४५६७॥

निवेदयेद् देवतायै विप्रादीन् भोजयेत् ततः ।
इति व्रतं सांतपनं सर्वपापप्रणाशनम् ॥४५६८॥

सर्वनिष्कृतिनाम्नैतत् कथितं व्रतमुत्तमम् ।
मरणोन्मुखकाले तु चैतदन्येन कारितम् ॥४५६९॥

कृतं वा प्रोच्यते साक्षी निष्कृतित्वेन चाथवा ।
कालाद्यसंभवे चान्यद्वारा कर्तुं तदुन्मितम् ॥४५७०॥

संकल्प्य विसृजेद् द्रव्यमेतत् स्यात् साक्षिनिष्कृतिः ।
चांद्रायणे तु शुक्ले वै पक्षे शुक्राख्यवासरे ॥४५७१॥

नित्यक्रियान्ते गुर्वादेराज्ञया तन्निमित्ततः ।
संकल्प्य प्रजपेदुक्तवत् सहस्रत्रयं ततः ॥४५७२॥

रात्रौ सपर्या संपाद्य समाराध्य सुवासिनीम् ।
ऐक्षवं लवणं त्यक्त्वा भुक्त्वा जप्त्वा सहस्रकम् ॥४५७३॥

प्रोक्तवत् शयनाद्यं स्यात् स्नानं त्रैकालिकं तथा ।
एवं कृत्वा सप्तरात्रमष्टमे होममाचरेत् ॥४५७४॥

प्रोक्तवद् बिल्वपत्रैस्तु पायसेनावृत्ति ततः ।
हुत्वा रात्रौ सपर्यान्ते प्रतिपात्रं तु केनचित् ॥४५७५॥

स्वीकुर्याद् ग्रासमेकैकं ततो नान्यत्तु भक्षयेत् ।
नवमे प्रोक्तवद् वीरादीन् संभोज्य समापयेत् ॥४५७६॥

इदं चांद्रायणं ज्ञेयं कृच्छ्रे किंचिद् विशिष्यते ।
जप्त्वा त्रिरात्रमेवं तु हुत्वा तुर्येऽह्नि पूर्ववत् ॥४५७७॥

समाप्य पंचमदिने व्रतं स्यात् कृच्छ्रसंज्ञकम् ।
सर्वैरपि त्रयं चैतत् कर्तव्यं प्रतिवत्सरम् ॥४५७८॥

एकं व्रतं वा शक्तेन चात्यशक्तः समाचरेत् ।
एकस्मिन् दिवसे वापि तत्र सांतपनं तु वै ॥४५७९॥

समापयेद् द्वितीयेऽह्नि चान्यद् युग्मं तृतीयके ।
अज्ञानेन महापापे कृतेऽप्येवं विशुद्ध्यति ॥४५८०॥

अथान्त्येष्टिः यामले—

आंबिकेयो यदा मंत्री देहधर्ममुपाश्रितः ।
अंत्येष्टिस्तत्र कर्तव्या तत् शिष्याद्यै विधानतः ॥४५८१॥

कर्ता नित्यक्रियां कृत्वा पंचरत्नै विशोधयेत् ।
पंचरत्नानि तु ग्लूं स्लूं प्लूं स्लूं न्लूमिति च क्रमात् ॥४५८२॥

प्रेतं नेत्रादिना येनाध्वना लोकांतरं गतम् ।
आकृष्य स्थापयेत् तेन जीवात्मानं च प्राणतः ॥४५८३॥

प्राणत प्राणमत्रेण।

नेत्रप्राणवियोगेन वियद्वह्न्यनिलात्मभिः ।
मोक्षदे पदमुच्चार्य वदेदावाहयामि च ॥४५४८॥

अनेनावाहयेत् प्रेतं तत्र प्राणांश्च विन्यसेत् ।
अंगप्रकल्पनं कुर्यात् मायया दीर्घयुक्तया ॥४५८५॥

प्रतिष्ठाप्य घटं मंत्री स्नापयेत् तज्जलेन तम् ।
पंचगव्यैरघोरेण वह्निन्या त्वभिषिच्य तम् ।
शुद्धतोयेन संस्नाप्य भस्मना स्नापयेत् पुनः ॥४५८६॥

प्रेतं दक्षिणमूर्द्धानं न्यस्य दर्भास्तरे सुधीः ।
ववस्त्रस्रगालेपैरलंकृत्य विभूषणैः ॥४५८७॥

अभ्यर्चेद् गंधपुष्पाद्यैं मूलमंत्रेण साधकः ।
सम्यग् विमानं संकल्प्य मृतकं तत्र विन्यसेत् ॥४५८८॥

ग्रामं प्रदक्षिणीकुर्वन् शंखभेर्यादिनिस्वनैः ।
प्रेतस्थानं समाविश्य दक्षिणोत्तरमायतम् ॥४५८९॥

उपलिप्य समां भूमिं तत्र लाजातिलाक्षतान् ।
वकिरेत् सर्षपोपेतान् विमानमथ त्रिन्यसेत् ॥४५९०॥

संस्थाप्य तत्र चितयग्नि परिस्तीर्य विलोमतः ।
पात्राण्यासादयेत् मंत्री दक्षिणे विष्णुदैवतम् ॥४५९१॥

प्रणीतापात्रमासाद्य संपूज्य कुसुमादिभिः ।
दर्भैराच्छादिते मंत्री वह्निकोणे प्रविन्यसेत् ॥४५९२॥

दक्षभागे यजेद् देवं भैरवं मंडले क्रमात् ।
उक्तेन विधिना कृत्वा वह्नेर्जिह्वाविकल्पनम् ॥४५९३॥

तिलतंडुलसंमिश्रं श्रपयेच्चरुमुत्तमम् ।
मृत्युञ्जयेन मंत्रेण शतमष्टोत्तरं सुधीः ॥४५९४॥

साज्येन चरुणा हुत्वा पंचरत्नैर्विशेषतः ।
जुहुयात् मूलमंत्रेण क्रमादावरणान्तकम् ॥४५९५॥

एवं विलोमतो होमात् सर्वमंत्रांस्तु तत् तनौ ।
क्रमेण विलयं नीत्वा जुहुयाद् वाग्भवेन च ॥४५९६॥

हुत्वाथ मूलमंत्रेण प्रेतदेहे विलोमतः ।
तत्त्वानि विलयं नीत्वा सर्वमात्मनि योजयेत् ॥४५९७॥

तत्त्वानि शैवागमे यथा—

निवृत्तिश्च प्रतिष्ठा च विद्या शांतिरनंतरम् ।
शान्त्यतीता तथा बिन्दुः कलान्ते नाद एव च ॥४५९८॥

शक्तिः सदाशिवश्चेति तत्त्वानि दश च क्रमात् ।
सदाशिवमथारभ्य निवृत्यन्तं विलोमतः ।
सर्वमात्मनि संयोज्य, ध्यात्वेष्टं गुरुमात्मनः ॥४५९९॥

पुण्यपापे परेतस्य जुहुयात् मंत्रमुच्चरन् ।
अमुकस्य पुण्य जुहोमि ।
ततः पूर्णाहुतिं दत्वा योजयेत् परमे पदे ॥४६००॥

शिवशक्त्यात्मके शुद्धे पुनरावृत्तिवर्जिते ।
सच्चित्सुखमये साक्षात् तत्त्वातीते निराकुले ॥४६०१॥

इति संयोजितः प्रेतः शिष्येण परमे पदे ।
संत्यज्य मलकालुष्यं शंभुभावाय कल्प्यते ॥४६०२॥

आज्येन जुहुयाद् वह्नावघोरास्त्रेण मूलतः ।
अनुलोमविधानेन प्रायश्चित्ताय साधकः ॥४६०३॥

परेतदेहमानेन शयनं परिकल्पयेत् ।
वह्ने र्दक्षिणदिग्भागे कुलवृक्षसमुद्भवैः ॥४६०४॥

शंकुभि र्दक्षिणाग्रैस्तु बिल्वजै र्वाकुलैस्तथा ।
आस्तीर्य शयनं मंत्री त्रिगुणीकृततंतुना ॥४६०५॥

संवेष्ट्य पूजयेद् गंधपुष्पाद्यैरुपचारकैः ।
आच्छाद्य नववस्त्रेण तत्र यंत्रं लिखेत् सुधीः ॥४६०६॥

पद्मं त्रिकोणं षट्कोणकर्णिकं साष्टपत्रकम् ।
सोर्ध्वरेखं ततस्तत्र पुष्पाण्याकीर्य सर्वतः ॥४६०७॥

प्रतं दक्षिणमूर्द्धानं विन्यसेदिह साधकः ।
रक्षामंत्रेण संरक्ष्य ज्वालामालिनिविद्यया ॥४६०८॥

प्रज्वाल्याघोरमंत्रेण दहेत् पादादितो बुधः ।
अघोरास्त्रेण मंत्रेण मंत्री पाशुपतेन वा ॥४६०९॥

यावद् भस्मीभवत्येव तावद् होमं समाचरेत् ।
स्तोत्रमंत्रजपं कुर्युः समयज्ञाः समागताः ॥४६१०॥

भस्मीभूते परेतेऽस्मिन् देवान् सम्यक् प्रपूजयेत् ।
चित्यग्नि रक्षयेन् मंत्री संप्राप्ते सप्तमेऽहनि ॥४६११॥

निर्वाप्य पयसास्थीनि वेष्टयेन् नववाससा ।
तद् भस्म निक्षिपेत् क्वापि विशुद्धे सलिलाशये ।
अस्थिकूटं खनेन् मंत्री देवमातृगृहेऽथवा ॥४६१२॥

स्वगृहे वा निखन्यैतत् त्रिसंध्यं पूजयेदिदम् ।
पर्वपूजां मृतदिने प्रतिमासं प्रकल्पयेत् ॥४६१३॥

संपूर्णे वत्सरे कुर्यात् महोत्सवमतंद्रितः ।
ततोऽस्थिकूटमुद्धृत्य नद्यां वारिनिधिस्पृशि ॥४६१४॥

निक्षिपेत् निखनेत् क्वापि विशुद्धे धरणीतले ।
केनापि कोकसेनाद्य प्रतिमां पादुकेऽथवा ॥४६१५॥

कृत्वा संपूजयेत् मंत्री गुरुभक्तिपरायणः ।
देशांतरमृतानां च जीवतामपि साधकः ॥४६१६॥

दर्भपुञ्जैः पलाशैर्वा शालिपिष्टेन वा पुनः ।
देहं कृत्वा यथापूर्वं शेषं कुर्याद् विचक्षणः ॥४६१७॥

अथवा मनसा कुर्यादेकांते स्वयमास्थितः ।
वाग्भवं दीपिनि ज्वालामालिनीति पदं ततः ॥४६१८॥

क्रोधहंसे द्रुहेत् पर्णान् संपुटत्वेन योजयेत् ।
एतानि तत्र बीजानि प्रणवो बीजकेशवे ॥४६१९॥

हसेन्द्वगांतकुटिले वह्निबिंदून् भगाश्रितान् ।
शिवशक्तिक्षमेन्द्रांबु वह्निवाताधिसंचयम् ।
ज्वालामालिनिमन्त्रोऽयं कथितो मंत्रकोविदैः ॥४६२०॥

ॐ ह्रीं ह्रैं ह् स् ख्फ्रें श्रं ह स क्ष म ल व र यूं ऐं दीपिनि ज्वालामालिनि
हुं हं सः फट् ह्रीं ह स क्ष म ल व र यूं श्रं ह् स् ख् फ्रें ह्रैं ह्रीं ॐ ।

मायाबीजं स्फुरद्वन्द्वं प्रस्फुरद्वितयं ततः ।
घोरे घोरतरेऽत्यंते तनुरूपपदं ततः ॥४६२१॥

चटयुग्मं तदंते स्यात् प्रचटद्वितयं ततः ।
कहयुग्मं वमद्वन्द्वं ततो बंधयुगं ततः ॥४६२२॥

घातय द्वितयं वर्म फडंतः समुदाहृतः ।
एकपंचाशदर्णोऽयमघोरास्त्रमहामनुः ॥४६२३॥

तारः श्लीं पशुवर्णांते कवचास्त्राक्षर वदेत् ।
मनुः पाशुपतास्त्रोऽयं सर्वरक्षाकरः स्मृतः ।
पचांतकेन्दुपार्श्वार्णान् समधांतसमन्वितान् ॥४६२४॥

इंद्रारूढान् सुधीः कुर्याद् वामकर्णेन्दुसंयुतान् ।
पंचरत्नमिदं प्रोक्तं मनोऽभिलषितप्रदम् ॥४६२५॥

अंत्येष्टिरेतत् कथिता मंडलावाप्तिकारिणी ।
आद्ये मासे तथा वर्षे सपिंडीकरणात् ततः ॥४६२६॥

सपिंडनात्तु वर्षान्ते तदनंतरमेव वा ।
मंडलस्थितिसिद्ध्यर्थं श्राद्धस्यार्हत्वसिद्धये ॥४६२७॥

दीक्षाफलप्राप्तये च कुर्यादेतद् यतेरपि ।
यस्य न क्रियते चैतत् तस्य दीक्षाफलं न हि ॥४४२८॥

अंत्येष्टिविधिना हीनो मंडलस्थो न जायते ।
तस्मात् पुत्रादिभिः पित्रादीनां कर्तव्य एव हि ॥४६२९॥

अज्ञानात् साधनाभावात् यस्यान्त्येष्टि र्न वै कृता ।
जपेत् श्राद्धाधिकारार्थमयुतं तस्य नामतः ॥४६३०॥

तदुपास्यमूलमिति शेष. ।

उपासको वा तद् वंश्यो ह्येतत् संस्कारसंस्कृतः ।
प्रेतभावविनिर्मुक्तो वीरत्वमधिगच्छति ॥४६३१॥

अंत्येष्टिसंस्कारयोगाद् गुरुमंडलगो भवेत् ।
दीक्षानाम्नो ह्यप्रसिद्धौ गगनेति समीरयेत् ॥४६३२॥

संप्राप्तेऽपरपक्षादौ कौलश्राद्ध समाचरेत् ।
यस्य श्राद्धं तत् कनिष्ठो गुर्वर्चायां यदार्चितः ॥४६३३॥

प्रतीक्षेत् श्राद्धविप्राणां स्वात्मीकारं तु सर्वथा ।
श्राद्धमेतत् कृतांत्येष्टेः कुर्यान् नान्यस्य कुत्रचित् ॥४६३४॥

कौलश्राद्धमकृत्वा तु चान्यैः श्राद्धसहस्रकैः ।
नैव तृप्ति. कदाचित् स्यात् पित्रादीनां तु सर्वथा ॥४६३५॥

कर्तुः पितृणां चैतेन भवेत् फलमनंतकम् ।
पशोरपि कृते श्राद्धे तस्य दीक्षाफलं भवेत् ॥४६३६॥

कृतनित्यक्रियः कर्ता द्वौ वाथ चतुरो द्विजान् ।
निमंत्र्यामुक्तानंदनाथनाम्नोऽम्बा वा पदात् ततः ।
प्रत्यब्दिकं कौलश्राद्धं तंत्रोक्तविधिना चरेत् ॥४६३७॥

इति संकल्प्य च पुनः श्राद्धेऽस्मिन् कौलसंज्ञके ।
करिष्ये पूजनं देव्याः श्रीसुन्दर्या यथाविधि ॥४६३८॥

संकल्प्य वरिवस्यां तु कलशांतं समाप्य वै ।
आत्मपात्राद् दक्षिणे तु स्थापयेद् वैश्वदेवकम् ॥४६३९॥

पैत्रं पात्रं च संस्थाप्य यजेत् क्रमसमन्वितः ।
सुवासिन्यंतगां पूजां कृत्वान्ते पूजयेद् द्विजान् ॥४६४०॥

चर्यानाथस्वरूपांश्च विश्वान् देवान् समर्चयेत् ।
मित्रीशषष्ठोशोड्डीशरूपान् पितृमुखान् यजेत् ॥४६४१॥

कृतपुष्पाञ्जलीन् पूर्वमुखान् स्यात् वैश्वदेविकान् ।
तथैवोदङ्मुखान् विप्रान् संवेश्य प्रणतोऽर्चयेत् ॥४६४२॥

विश्वेषां चैव देवानामिदमासनमुत्तमम् ।
चर्यानाथस्वरूपाणामर्पये चास्यतामिह ॥४६४३॥

श्रीचर्यानाथरूपान् विश्वान् देवान् भवत्सु च ।
आवाहयामि चावाह्य पुष्पाक्षतकृतांजलिः ॥४६४४॥

विश्वेदेवा स्वागतं वो यज्ञेऽस्मिन् स्थीयतां क्षणम् ।
सावधानेन मनसा स्वीकुर्वंतु समाजनम् ॥४६४५॥

इति प्रार्थ्याग्रतस्तस्य मण्डलं चतुरस्रकम् ।
मत्स्यमुद्रितहस्तेन कृत्वा संपूजयेत् ततः ॥४६४६॥

विश्वेषां चैव देवानां पाद्यमंडलङेन्तकः ।
पूजामंत्रो नमोऽन्तोऽयं मण्डलक्रमपूजने ॥४६४७॥

सामान्यार्घजलेनैव पाद्यं पादौ समर्पयेत् ।
चर्यानाथस्वरूपाश्च देवाः [illegible]मिदं च वः ॥४६४८॥

समर्घ्य पादौ प्रक्षाल्य सामान्यार्घोदकेन च ।
पुष्पाक्षतफलेनैव युक्तमर्घ्यं निवेदयेत् ॥४६४९॥

देवाश्चर्यानाथरूपा इदमर्घ्यं च वो नमः ।
सामान्यार्घोदकेन त्रि र्दद्यादाचमनीयकम् ॥४६५०॥

देवाश्चर्यानाथरूपा इदमाचमनं च वः ।
एवं च गंधपुष्पादिधूपदीपमहार्हणैः ॥४६५१॥

वस्त्रैराभरणैश्चैव वैश्वदेवं यजेद् द्विजम् ।
चतुष्के ब्राह्मणे तत्र पितरं च पितामहम् ॥४६५२॥

पितामहं च वृद्धादिं क्रमशस्त्रिषु पूजयेत् ।
तत् तन्नाम्ना युग्मपक्षे ह्येकं दैवं च पैतृकम् ॥४६५३॥

पूजयेत् परया भक्त्या श्रीचर्यानाथनामकम् ।
वैश्वदेवेऽथ मित्रीशषष्ठीशोड्डीशनामभिः ॥४६५४॥

पैत्र्येऽतो पितृदेवाश्च स्वागतं वो नमस्तथा ।
भोजनं चेति संप्रार्थ्य वृत्ताकारे तु मण्डले ॥४६५५॥

दीपान्तं पूजनं कृत्वा विश्वेदेवस्य पात्रतः ।
गृहीत्वा कारणं किंचित् कृत्वा पात्रान्तरे च तत् ॥४६५६॥

विश्वेदेवद्विजकरे दद्यान् मंत्रमिमं पठन् ।
श्रीचर्यानाथरूपेभ्यो विश्वेभ्यश्च ततः परम् ॥४६५७॥

देवेभ्यश्च ततः स्वाहा इति तस्मै निवेदयेत् ।
सद्वितीयं तथा पितृपात्रादन्यच्च पूर्ववत् ॥४६५८॥

पठेन् मित्रीशरूपाय पित्रेऽमुकाय ठद्वयम् ।
षष्ठीशरूपाय पितामहो ङेऽन्तोऽमुकाय च ॥४६५९॥

स्वाहा ततोड्डीशरूपायान्ते प्रादिः पितामहः ।
ङेऽन्तोऽमुकाय स्वाहेति प्रत्येकं वै समर्पयेत् ॥४६६०॥

ते गृहीत्वा यथाम्नायं स्वीकुर्यादुक्तमार्गतः ।
क्रमात् भोजनपात्राधः कुर्याच्च चतुरस्रकम् ॥४६६१॥

सवृत्तं पूजयेत् तत् तन्नाम्ना मंडलङेयुजा ।
नमोऽन्तेन च संपूज्य स्वन्नं तत्र चतुर्विधम् ॥४६६२॥

पात्रे संस्थाप्य मूलेन प्रोक्ष्य मंत्रानिमान् पठेत् ।
संविन्मये महापात्रे आनंदमयभोज्यकम् ॥४६६३॥

भोक्ता त्वं पुरुषः साक्षी महाशक्ति र्महेश्वरः ।
सर्वमंत्रशक्तिमयो भोक्ता साक्षात् परः स्वयम् ॥४६६४॥

तस्मात् सर्वं शिवः साक्षाद् भोक्ता दाता च भोज्यकम् ।
विश्वे देवा देवता नो भुञ्जन्त्वत्र मखे मम ॥४६६५॥

यावच्छक्यं तावदिह भोक्तव्यं स्वस्थमानसैः ।
पेयं खाद्यं भक्ष्यभोज्यौ सर्वं वः सुसमर्पितम् ॥४६६६॥

पितॄणां परमानंदहेतवे तद्भवेत् शिवम् ।
पठित्वैतान् क्षिपेत् तोयं देवपितृस्थले तदा ॥४६६७॥

आपोशानं समर्प्याथ प्रार्थयेच्च ततो द्विजान् ।
यथासंभवपाकाद्यैस्तृप्ता यूयं भविष्यथ ॥४६६८॥

कुलद्रव्यैश्चर्वणैश्च पितॄणां शांतिहेतवे ।
विश्वेदेवाश्च पितरस्तृप्ता स्थास्मिन् महामखे ॥४६६९॥

सर्वं सुमिष्टं संपन्नं भवत्वत्र यथेप्सितम् ।
आपोशानं चोत्तरं च दत्वा तेभ्योऽतिभक्तितः ॥४६७०॥

तांबूलं दक्षिणां पश्चात् तेभ्यश्च विनिवेदयेत् ।
प्रदक्षिणानमस्कारौ कुर्यान् मंत्रद्वयं पठन् ॥४६७१॥

विश्वान् देवांस्तथा पितॄन् देवतारूपमास्थितान् ।
नमः पुरस्तात् पश्चाच्च पार्श्वयोरपि वो नमः ॥४६७२॥

अनेन कौलश्राद्धेन विधिना पितृमुख्यकाः ।
परमानंदमास्थाय भवंत्वेते सुनिर्वृताः ॥४६७३॥

ततो विसर्जयेद् विप्रानक्षतक्षेपणादिभिः ।
यथागतं तु पितरो गच्छन्त्वस्मान् महामखात् ॥४६७४॥

विश्वै र्देवैश्च सहिताः प्रसन्नाः सन्तु मे चिरम् ।
एवं विसृज्य तत् शेषं सहवीरैश्च शक्तिभिः ॥४६७५॥

चक्रपूजाविधानेन स्वीकृत्यैवं समापयेत् ।
दक्षिणां वीरशक्तिभ्यो दत्वा तांबूलपूर्वकम् ॥४६७६॥

संप्रार्थ्य विसृजेत् तांश्च परमानंदनिर्भरः ।

इति श्रीमदागमरहस्ये सतमग्रहे प्रायश्चित्तान्त्येष्टिकौलश्राद्धादिकथन नाम विंशतितम. पटल ॥२०॥ आदितश्चाष्टचत्वारिंशत् ।

## अथ एकविंशः पटलः ।

कौलयोगमथो वक्ष्ये स्वात्मसंविद्विमर्शकम् ।
शैवागमेषु यत् प्रोक्तं तथा वै यामलादिषु ॥४६७७॥

कुलार्णवे च यत् प्रोक्तं तथा विज्ञानभैरवे ।
तत्रत्यं मूलवाक्यं यद् युक्त्या संग्रथ्य लिख्यते ॥४६७८॥

च विज्ञानभैरवादिषु देवीवाक्यम्—

श्रुतं देव मया पूर्वं रुद्रयामलसंभवम् ।
त्रिकभेदमशेषेण सारात् सारं विभागशः ॥४६७९॥

त्रिकभेदं आत्मविद्याशिवात्मकमिच्छाज्ञानक्रियात्मक वा ।

अद्यापि न निवृत्तो मे संशयः परमेश्वर ।
किं रूपं तत्त्वतो देव शब्दराशिकलामयम् ॥४६८०॥

स हि वर्णविभेदेन देहभेदेन वा भवेत् ।
परत्व निष्कलत्वेन सकलत्वेन वा भवेत् ॥४६८१॥

प्रसादं कुरु मे नाथ निःशेषं छिन्धि संशयम् ।
शृणु देवि प्रवक्ष्यामि यन् मां त्वं परिपृच्छसि ॥४६८२॥

तस्य श्रवणमात्रेण योगः साक्षात् प्रकाशते ।
स्वरूपं त्रिविधं प्रोक्तं स्थूलसूक्ष्मपरत्वतः ॥४६८३॥

साकारं स्थूलमित्युक्तं तदेव सकलं भवेत् ।
निराकारं तु सूक्ष्मं स्यात् शब्दब्रह्ममयं वपुः ॥४६८४॥

परं केवलचिद्रूपं यद् ज्ञात्वात्रैव मुच्यते ।
स्थिरार्थं मनसः केचित् स्थूलध्यानं प्रकुर्वते ॥४६८५॥

स्थूले चेत् निश्चलं चेतो भवेत् सूक्ष्मेऽपि सुस्थिरम् ।
करपादोदरांगादिरहितं परमेश्वरम् ॥४६८६॥

सर्वतेजोमयं ध्यायेत् सच्चिदानंदलक्षणम् ।
नोदेति नास्तमभ्येति न वृद्धिं याति न क्षयम् ॥४६८७॥

स्वयं विभात्यथान्यानि भासयेत् साधनं विना ।
अनस्तमितभारूपं सत्तामात्रमगोचरम् ॥४६८८॥

वचसामत्र संवेद्यं मंत्रमूर्तिमकल्मषम् ।
यद् देवि सकलं रूपं भैरवस्य प्रकीर्तितम् ।
तदसारतया देवि विज्ञेयमिन्द्रजालवत् ॥४६८९॥

माया स्वप्नोपमं चैव गंधर्वनगरभ्रमम् ।
ध्यानार्थं भ्रांतबुद्धीनां क्रियाडंबरवर्तिनाम् ॥४६९०॥

केवलं विहितं पुंसां विकल्पविहतात्मनाम् ।
अप्रबुद्धमतीनां हि एषा बालविभीषिका ॥४६९१॥

मातृमोदकवत् सर्वं प्रवृत्त्यर्थमुदाहृतम् ।
तत्र पूजादिमार्गं नु स्थूलज्ञानमुदाहृतम् ॥४६९२॥

सूक्ष्मं मंत्रमयं चैव तद्ध्यानं बहुधा स्थितम् ।
मातृकात्मतया कामकलात्मत्वेन वै तथा ॥४६९३॥

तत्त्वचक्रात्मकेनापि सूक्ष्मभावेन संस्थितिः ।
मातृकात्मत्वमेवादौ वक्तव्यमिति हेतुतः ॥४६९४॥

प्रसंगात् मातृकोत्पत्तिक्रममेव विविच्यते ।
संविदेषा या विभाति पदार्थक्रमगोचरा ॥४६९५॥

सर्वेषां सर्वदा सा हि स्वप्रकाशस्वरूपिणी ।
क्रमः स तु पदार्थस्थो न हि संवित्प्रतिष्ठितः ॥४६९६॥

पदार्थोऽपि न संवित् स्यात् संवित् तस्य प्रकाशिका ।
प्रकाश एव तद्रूपं सर्वत्र सर्वदापि च ॥४६९७॥

तस्मादेकैव संवित् स्यात् तस्या भेदो न विद्यते ।
एष एव परशिवः प्रोक्तः सर्वस्य कारणम् ॥४६९८॥

न तस्यादि र्नापि चांतस्तयोः सिद्धेरभावतः ।
सर्वसाधकसंवित्तेराद्यन्तौ केन सिद्धयतः ॥४६९९॥

स्वप्रकाशत्वमस्त्यस्मिन् सर्वथा हि प्रकाशते ।
दीपादिजडवन्नायं प्रकाशितुमिहार्हति ॥४७००॥

ततो विलक्षणत्वेन प्रकाशेताजडत्वतः ।
दीपादि र्नाहमित्येवं प्रकाशे स्वात्मनि क्वचित् ॥४७०१॥

योग्यत्वादहमित्येवं प्रकाशेतैष हीश्वरः ।
अहंभावः सोऽपि नैष स्थूलवर्णमयो भवेत् ॥४७०२॥

किंतु संवित् प्रकाशैकरूपोऽन्तः सुप्रतिष्ठितः ।
घटादिज्ञानकालादौ यथास्माकं हि संस्थितः ॥४७०३॥

स्थितेन येन नास्मीति कदाचित् नैव भासते ।
सोऽहंभावस्तथाभूतः सूक्ष्मः संस्कारवत् स्थितः ॥४७०४॥

अखंडैकरसोऽप्येष व्यवहारे विभज्यते ।
स एष प्रोच्यते शक्तिः शिवाभिन्नतया शुभे ॥४७०५॥

पूर्णाहंताविमर्शश्च स्फुरत्ता च प्रकीर्तिता ।
शिवात्मके जगद्बीजे संस्थितांकुरशक्तिवत् ॥ ४७०६॥

जगदंकुरशक्तित्वाज्जगद्व्याप्त्री शिवे स्थिता ।
यथांकुरदलद्वन्द्वमध्याद् वृक्षस्य संभवः ॥४७०७॥

वृक्षव्याप्त्री हि सा शक्तिरेवमेव परे शिवे ।
वाच्यात्मका वाचकाः स्युरविनाभावभासवत् ॥४७०८॥

ते वाचकाणवरूपा आदिहांतात्मकाः स्मृताः ।
अहमे मध्यमास्ते स्युः प्रत्याहारसुनीतितः ॥४७०९॥

एवं युक्त्या जगद्व्याप्त्री पराहंता शिवे स्थिता ।
यथा लोके तदीयस्य किरणै र्भास्करस्य च ॥४७१०॥

ज्ञायते दिग्विभागादि तद्वत् शक्त्या शिवः प्रिये ।
न वह्ने र्दाहिकाशक्ति र्व्यतिरिक्ता विभाव्यते ॥४७११॥

केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने ।
शिवस्य कलयन्ती सा स्वांगरूपं तु तज्जगत् ॥४७१२॥

यदा स्वातंत्र्यवशतः शिवः पूर्णं निजं वपुः ।
ऐच्छदाच्छादितुं लीलाहेतवेऽणुरभूत् तदा ॥४७१३॥

मलत्रयसमाविष्टस्तत्राद्यो मल आणवः ।
शुद्धपूर्णचित्स्वरूपोऽहं भावे तु तदा स्थितः ॥४७१४॥

तथाभूतोऽप्येकदेशाऽहंभावेनाभिसंयुतः ।
स एकदेशाहंभावोऽपूर्णख्यातिरुदाहृतः ॥४७१५॥

आणवो मल एव स्यात् पूर्णाहंभाववर्जनात् ।
अज्ञानमिति च प्रोक्त संसारस्यादिकारणम् ॥४७१६॥

एकस्यैवापरं रूपं देहाहंतादिकं भवेत् ।
एवं स्वस्य परिच्छेदाभासनाद् भिन्नदर्शनम् ।
मायीयमल इत्युक्तं तस्मादन्याभिलाषया ॥४७१७॥

करोति सदसद्वाऽन्यत् यत् तत् संस्कार एव तु ।
कार्मो मलस्तु संप्रोक्त एवं स त्रिविधो मलः ॥४७१८॥

मलत्रयैरभियुतः शिव एव महेश्वरः ।
अनेकधा समभवत् पुरुषास्ते हि कीर्तिताः ॥४७१९॥

विभासते वहुविधं वाह्याभ्यन्तरभेदितम् ।
व्राह्यं नीलपटाद्यं स्यात् सुखदुःखाद्यमान्तरम् ॥४७२०॥

सुखाद्यनुभवो भोगः सविकल्पैकहेतुकः ।
सुषुप्त्यादौ न भोगोस्ति विकल्पाभावतो यतः ॥४७२१॥

निर्विकल्पो ज्ञानमात्रं ज्ञेयोल्लेखविवर्जितम् ।
ज्ञेयोल्लेखसमायुक्तो विकल्पः समुदाहृतः ॥४७२२॥

ज्ञेयोल्लेखः शब्दरूपः सोऽयमित्यादिरूपकः ।
अतः शब्दानुविद्धस्तु विकल्पः प्रोच्यते बुधैः ॥४७२३॥

ऋते शब्दानुबधे तु ज्ञानस्य न विकल्पता ।
स शब्दो ज्ञानवपुषि निविष्टः सूक्ष्मरूपतः ॥४७२४॥

अत एव तिरश्चां च प्रवृत्ति. स्याद् विकल्पतः ।
भोक्तृभोगाय सा शक्ति र्ह्रीयं विविधरूपतः ॥४७२५॥

विकल्पयितुमेवेह जाता वर्णस्वरूपिणी ।
सुषुप्तिप्रलयादौ च ग्राह्याभासविवर्जनात् ॥४७२६॥

संविदेकस्वरूपापि तद्भोगाय द्विधाऽभवत् ।
अहंकारात्मना त्वाद्य उल्लासः प्रथमो हि सः ॥४७२७॥

एषोङ्कुरात्मको ज्ञेयः पूर्वस्माद् व्यक्तरूपकः ।
अकारस्तु शिवस्तत्र हकारः शक्तिरुच्यते ॥४७२८॥

इमौ वर्णावंकुरस्य दलयुग्मवदास्थितौ ।
तयोरैक्यं गमयितुमनुस्वारः तदूर्ध्वगः ॥४७२९॥

एवं द्विरूपा सा संविज्जगदंकुररूपिणी ।
पत्रपुष्पादिकं बीजादंकुरद्वारतो यथा ॥४७३०॥

एवं विकल्पाभावात् सा प्रपंचः सर्व एव तु ।
अहंकारद्वारतः स्यात् स्पष्टः संवित् समुद्भवः ॥४७३१॥

ततः शक्तिर्हंकारात्मा प्रविष्टानुत्तरे शिवे ।
स्वरषोडशरूपाऽभूत् तत्प्रकारः प्रदर्श्यते ॥४७३२॥

वाक् चतुर्धा परा पश्यन्ती मध्यमा वैखरीति च ।
पूर्णाहंतैव सूक्ष्माहंभावरूपा परा स्मृता ॥४७३३॥

सैव देहे देहिनां तु मूलाधारे स्थितोच्यते ।
आत्मशक्तिः कुण्डलिनीत्यादिशब्दै र्बुधोत्तमैः ॥४७३४॥

तस्या एव स्थूलरूपं सार्धत्रिवलयाकृतिः ।
विकल्पनोन्मुखी सा हि निविश्य प्राणमारुतम् ॥४७३५॥

मूलाधारान् नाभिदेशं प्राप्य भावं मनोगतम् ।
पश्यन्ती प्रोच्यते तज्ज्ञैः पश्यन्तीत्येव सा परा ॥४७३६॥

हृदयं प्राप्य मनसा वाच्यभावेन संयुता ।
पश्यंतीव न सा सूक्ष्मा भिन्ना नादेन संगता ॥४७३७॥

वैखरीव न च स्थूला करणागोचरत्वतः ।
मध्यमेति समाख्याता ततो वक्त्रे हि वैखरी॥४७३८॥

बीजं परा स्यात् पश्यंती सूक्ष्मा खंडांकुरात्मिका ।
उच्छूनद्विदलांकूररूपिणी मध्यमा भवेत् ॥४७३९॥

काण्डशाखावृतं पत्रपुष्परूपा हि वैखरी ।
फलं विकल्पानुभवो रसो भोग उदीरितः ॥४७४०॥

अनादिकालादित्येतत् वाग्वृक्षगहने द्विजाः ।
जीवाश्चरंति सुचिरं सविदाकाशसंश्रये ॥४७४१॥

मध्यमारूपिणी सैव कंठताल्वोष्ठमूर्द्धसु ।
दंते च मूर्च्छयंती तं प्राणं वै पंचधाऽभवत् ॥४७४२॥

अ इ उ ऋ लृ इत्येवं प्रत्येकं च द्विधा पुनः ।
एकमात्रानेकमात्रा कालांशकलिता सती ॥४७४३॥

संजातैवं तु दशधा भूयः सानुत्तरांबिका ।
ताल्वोष्ठविकृति र्युक्ता द्विधा ए ओ इतीरिता ॥४७४४॥

पुनराभ्यां च संयुक्ता ए औ इत्यपि चाभवत् ।
विकृतानेकधा चैवं वस्तुतोऽविकृतात्मना ॥४७४५॥

आत्मानं विख्यापयितुं तत्परा शून्यरूपिणी ।
अनुस्वार इति ख्यातः सर्वान्ते सर्गरूपिणी ॥४७४६॥

अनुत्तरं स्वस्वरूपं विभेदेनापि भाषितम् ।
पूर्णात्मतां न त्यजतीत्येवं बोधयितुं परा ।।४७४७।।

शून्यद्वयात्मना साक्षान् निजरूपेण संस्थिता ।
निजरूपं हकारः स्यात् सर्गस्तस्यापरं वपुः ।।४७४८।।

तयोरभेदः सुस्पष्टोऽनुत्तराद्यंतयोगतः ।
एवं षोडशरूपेण नित्या षोडशकात्मिका ।।४७४९।।

वाच्यवाचकयोरैक्यात् नित्यात्मान इतीरिताः ।
उदात्तत्वाद्याश्रयतः स्वरात्मानः प्रकीर्तिताः ।।४७५०।।

तत्राकारः शिवस्त्वाद्यो विसर्गः शक्तिरन्त्यगः ।
शिवशक्तिमयं सर्वं वक्तुमेवं हि संस्थितिः ।।४७५१।।

अथ स्वस्यां निविष्टेन शिवेन सहिता परा ।
षट्त्रिंशद्रूपतां प्राप्ता व्यंजनात्मतयोच्यते ।।४७५२।।

कंठादिदंतस्थानांतयोगाद्या पंचरूपिणी ।
तस्याः पल्लवरूपाश्च शक्तयः संति पंच वै ।।४७५३।।

चिदानंदेच्छाज्ञानक्रियाख्या तासां तु वै भवेत् ।
प्रत्येकं पंचधा जाता पंचपंचकरूपिणी ।।४७५४।।

पंचसु प्रोक्तस्थानेषु जिह्वासंस्पर्शनेन वै ।
अभिव्यक्ता यतस्तस्मादेते स्पर्शसमाह्वयाः ।।४७५५।।

पंचवर्गाः कचटतपाद्याः पंचात्मकाः पृथक् ।
ओष्ठस्य सर्वबाह्यत्वात् कंठादिस्थानमंडले ।।४७५६।।

उकारप्रभवो वर्गो याद्यः सर्वान्तसंस्थितः ।
अथैतत् क्रमतस्तालुमुखवर्णचतुष्टये ।।४७५७।।

पृथग्युतोऽनुत्तरस्तु संजातो हि चतुर्विधः ।
य र ल व इत्यन्तस्था अंतेऽनुत्तरसंस्थितेः ।।४७५८।।

चतुर्णां पुनरेतेषां वह्नेरूष्मेव शक्तयः ।
चत्वारस्ते शषसहा ह्यूष्माणः संप्रकीर्तिताः ।।४७५९।।

हृस्यौष्ठवर्णशक्तित्वेऽप्येषा मुख्या यतः परा।
अनुत्तराभिन्नरूपापीति कंठैकसंश्रया ॥४७६०॥

एतत् त्रयस्त्रिंशदादौ च स्थितोऽनुत्तरः स्वयम् ।
अकारोऽन्तेऽपि शक्तिः सा हकारस्फुटरूपिणी ॥४७६१॥

एतदन्ते लक्षयुग्मं मिथुनद्वितयं स्थितम् ।
शिवशक्त्यात्मतां वक्तुं स्वरस्य व्यंजनस्य च ॥४७६२॥

लसकारमयं त्वाद्यं कषकारमयं परम् ।
शाक्तमाद्यं परं शैवमेवं मियुनयुग्मकम् ॥४७६३॥

शक्तिरूपस्वरौघस्य शिवात्मव्यजनस्य च ।
प्रतिबिंबात्मकं तत्र रूपं लः स तु मारुतः ॥४७६४॥

परप्रकाश्यं रूपं तु परोक्षात् मारुतो भवेत् ।
अशिवात्मत्वमेतस्माज्जाड्यात् शाक्तयुगं हि लः ॥४७६५॥

कः शुद्धशक्ति· पो व्योम शुद्धशक्तिस्तु चिन्मयी ।
आकाशोऽप्यपरिच्छिन्न इत्येवं शिवधर्मयुक् ॥४७६६॥

यतस्तस्मात् तन्मिथुनं क्षः शिवात्मकमुच्यते ।
तत् तदाधिक्यतस्तत् तन्मिथुनं परिकीर्तितम् ॥४७६७॥

षट्त्रिंशत्तत्त्वरूपं वै षट्त्रिंशद्व्यंजनं क्रमात् ।
स्वराद्यं व्यंजनाद्यं च यस्मात् सदृशरूपकम् ॥४७६८॥

एवमेव भवेत् तस्मादेकपंचाशदात्मना ।
मातृका सा पराहंता पुंसां भोगैकहेतवे ॥४७६९॥

विकल्पयितुमात्मानं भासते प्रोक्तरीतितः ।
अनुत्तराद्या वर्णानां शक्तयस्तु पृथक्स्थिताः ४७७०॥

एकपंचाशदन्याश्च ब्राह्म्याद्या वर्णशक्तयः ।
पंचभूतात्मना चैते त्रिलिंगक्रमभेदतः ॥४७७१॥

वर्णाः सर्वे देवमया शक्त्या च परया युताः ।
अकारादित्रयो व्योम ईकारादित्रयोऽनिलः ।
ऋकारादित्रिवर्णानि चाग्निरित्युच्यते बुधैः ॥४७७२॥

लृकारादित्रयो ह्याप ओकारादित्रयो मही ।
प्रकृतिस्तत्त्वभेदः स्याद् विकृति मूर्तिरुच्यते ॥४७७३॥

ङ ञ ण न म स हा वै नाभसाः संप्रकीर्तिताः ।
क च ट प य षाश्च मारुता वर्णितास्त्विमे ॥४७७४॥

आग्नेयाश्चैव ख छ ठ थ फ र क्षाः प्रकीर्तिताः ।
वारुणा घ झ ढ ध भ व शाः संकीर्तिता बुधैः ॥४७७५॥

ग ज ड द ब ल लेति पार्थिवाः सम्यगीरिताः ।
सोमसूर्याग्निसंभिन्नाः स्वरस्पर्शाविशिष्टकाः ॥४७७६॥

पुंस्त्रीनपुंसकास्तद्वत् तद्भेदमधुनोच्यते ।
स्वराणां ये च चत्वार ऋ ॠ लृ ॡ नपुंसकाः ॥४७७७॥

शिष्टा द्वादश पुंल्लिगा व्यंजनाश्च नपुंसकाः ।
विश्वतैजसप्राज्ञानां मूर्तिभेदेन संस्थिताः ॥४७७८॥

अधिदैवं फलं त्वेषां क्रमेणात्र प्रकीर्त्यते ।
विश्वं वितत्य यद्रूपा संविदेषा च संस्थिता ॥४७७९॥

अकारं सर्वदैवत्यं रक्तं सर्ववशीकरम् ।
आकारः स्यात् परा शक्तिः श्वेतमाकर्षणं भवेत् ॥४७८०॥

इकारं विष्णुदैवत्यं श्यामं रक्षाकरं भवेत् ।
मायाशक्तिरितीकारः पीतं स्त्रीणां वशीकरम् ॥४७८१॥

उकारं शिवदैवत्यं कृष्णं राजवशीकरम् ।
ऊकारं भूमिदैवत्यं श्यामं लोकवशीकरम् ॥४७८२॥

ऋकारं ब्रह्मणो ज्ञेयं पीतं ग्रहविनाशनम् ।
शिखंडिरूपं ॠकारमजं च ज्वरनाशनम् ॥४७८३॥

अश्विनीसंज्ञकं लृ लॄ श्वेतरक्तं ज्वरापहे ।
एकारं वीरभद्रं स्यात् पीतं सर्वार्थसिद्धिदम् ॥४७८४॥

ऐकारं वाग्भवं विद्यात् स्फाटिकं ज्ञानसिद्धिदम् ।
ओकारं च स्वरं विद्यात् ज्योति सर्वफलप्रदम् ॥४७८५॥

औकारमादिशक्तिः स्यात् शुक्लं सर्वार्थसिद्धिदम् ।
अंकारं तु महेशं स्याद् रक्तवर्णं सुखप्रदम् ॥४७८६॥

अः कारं कालरुद्रं स्यात् रक्तं पापनिकृंतनम् ।
प्राजापत्यं ककारं स्यात् पीतं पुष्टिकरं भवेत् ॥४७८७॥

खकारं जाह्नवीबीजं क्षीराभं पापनाशनम् ।
गकारं गणरूपं स्यात् रक्ताभं विघ्ननाशनम् ॥४७८८॥

घकारं भैरवं ज्ञेयं मुक्ताभं शत्रुनाशनम् ।
ङकारं कालबीजं स्यात् श्यामं सर्वजयंकरम् ॥४७८९॥

चकार चंडरुद्रं स्यादंजनं रिपुभीतिहृत् ।
छकारं भद्रकाली स्याद् राजावर्त्तं जयप्रदम् ॥४७९०॥

जकारं जंभहा ज्ञेयं रक्ताभं च जयावहम् ।
झकारं त्वर्धनारी स्यात् श्यामरक्तं जयावहम् ॥४७९१॥

ञकारं कोटिविज्ञेयं पीतं रोगविनाशनम् ।
भृङ्गीशं स्याट्टकारं तु रक्तं सर्वसुखावहम् ॥४७९२॥

ठकारं चन्द्रबीजं स्यात् पीतं मृत्युविनाशनम् ।
डकारं चैव नेत्रं स्यात् पीतं कालजयप्रदम् ॥४७९३॥

ढकारं यमबीजं स्यान्नीलं मृत्युविनाशनम् ।
णकारं वंदिबीजं स्याद् रक्ताभं चार्थसिद्धिदम् ॥४७९४॥

तकारं वायुदैवत्यं श्वेतं सर्वजयप्रदम् ।
थकारं धर्मदैवत्यं मंदाभं स्याज्जयप्रदम् ॥४७९५॥

दुर्गाबीजं दकारं स्यात् श्यामं सर्वार्थसिद्धिदम्।
धकारं धनदं ज्ञेयं पीताभं चार्थसिद्धिदम् ॥४७९६॥

नकारं चैव सावित्रं स्फाटिक पापनाशनम् ।
पर्जन्य स्यात् पकारं तु शुक्लाभं पुष्टिसिद्धिदम् ॥४७९७॥

फकारं पाशुपत्यं स्याद् ज्ञानदं पापनाशनम् ।
बकारं तु त्रिमूर्तिः स्यात् पीतं सर्वार्थसिद्धिदम् ॥४७९८॥

भकारं भार्गवं विद्याद् रक्ताभ सर्वसिद्धिदम् ।
मकारं मदनं विद्यात् श्यामं सर्वजयप्रदम् ।
यकारं वायुदैवत्यं कृष्णमुच्चाटनं भवेत् ॥४७९९॥

रकारं वह्निदैवत्यं रक्ताभं संहृति र्भवेत् ।
लकारं भूमिदैवत्यं स्यात् पीतं स्तंभनं भवेत् ॥४८००॥

वारुणं स्याद् वकारं तु शुक्लाभं रोगनाशनम् ।
लक्ष्मीबीजं शकारं स्याद् हेमाभं श्रीकरं भवेत् ॥४८०१॥

षकारं सूर्यबीजं स्यात् रक्ताभं सर्वसिद्धिदम् ।
सकारं शक्तिरूपं स्यात् रक्तं सिद्धिकरं भवेत् ॥४८०२॥

हकारं शिवबीजं स्यात् शुद्धस्फटिकसन्निभम् ।
भुक्तिमुक्तिप्रदं पुंसां महापातकनाशनम् ॥४८०३॥

लकारं त्वष्टसिद्धीनां बीजं सिद्धिप्रदायकम् ।
क्षकारमात्मतत्त्वं स्याद् रक्ताभं सर्वसिद्धिदम् ॥४८०४॥

इत्येते अधिदेवास्तु फलवर्णक्रमेण च ।
अकारादिक्षकारान्तवर्णानां कीर्तिताः शिवे ॥४८०५॥

मूलशक्तिस्तु सा संवित् सर्ववर्णात्मरूपिणी ।
एवं वहुविधा भूत्वा संविदेव जगन्मयी ॥४८०६॥

उद्भाव्य भोगरागाद्यैः पाशयित्वा भयंकरे ।
दुरुत्तारे गभीरेऽज्ञान् संसारे पातयत्यलम् ॥४८०७॥

विदितात्मस्वसाम्राज्यप्रदा सैव महेश्वरी ।
अतः सा सर्वथा ज्ञेया संसारभयनाशिनी ॥४८०८॥

एवंविधा मातृका सा संविद्रूपेण संस्थिता ।
मोहयत्यखिलं विश्वं फललुब्धं खगं शिवम् ॥४८०९॥

अथ कामकलारूपं संविदः प्रोच्यते स्फुटम् ।
यद्रूपं ध्यायते योगी संवित् तादात्म्यसिद्धये ॥४८१०॥

द्विधा कामकला प्रोक्ता स्थूलसूक्ष्मविभेदतः ।
त्रिविन्द्वात्मक ईकारः पूर्वं स्थूलो निरूपितः ॥४८११॥

सूक्ष्मं निरूप्यते सद्यो ध्यातुं विद्यां तदात्मिकाम् ।
प्रोक्तस्य शुद्धसंवित्तिमात्ररूपशिवस्य तु ॥४८१२॥

या स्वस्वरूपविश्रांतिः सोऽहंभाव उदाहृतः ।
जडाश्चिदात्मविश्रान्ताः स्वरूपानवभासनात् ॥४८१३॥

चिदात्मा स्वात्मविश्रांतः स्वस्वरूपेऽवभासनात् ।
चिदात्मानमृते क्वापि जडो नैव प्रकाशते ॥४८१४॥

अतः स्वस्मिन्न न विश्रांतः परतंत्रावभासनः ।
जडात्मानमृते संवित् सुप्तिसंधिसमाधिषु ॥४८१५॥

प्रकाशतोऽपि विश्रांता स्वस्वरूपे हि सर्वदा ।
एषा स्वरूपविश्रांतिरहंभाव उदाहृतः ॥४८१६॥

इदंभावो जडानां हि संविद्विश्रांतिरुच्यते ।
जडानामिदमित्येव प्रकाशात् संविदात्मना ॥४८१७॥

चेतनानामहमिति भासनात् संविदात्मनः ।
अहमित्येव विश्रांतिः स्वरूपे युज्यते स्फुटम् ॥४८१८॥

यद्यप्येवं स्वप्रकाशः स्थूलो वर्णमयो न हि ।
तथापि सद्योजनितशिशूनामिव संभवेत् ॥४८१९॥

अहमित्येव युक्तत्वादेतद् प्राक् प्रविवेचितम् ।
सोऽहंभावः समाख्यातः पूर्णाहंतादिनामभिः ॥४८२०॥

सैषैव देहिनां देहे परिच्छेदावभासिनी ।
अपूर्णाहंतया ख्याता संसाराङ्कुरकारणम् ॥४८२१॥

पूर्णाहंता समाधौ सा देहावच्छेदवर्जनात् ।
शुद्धसंवित्स्वभावस्य पूर्णाहंतेव सा शिवा ॥४८२२॥

सूक्ष्मा कामकला प्रोक्ता भाविता बंधनाशिनी ।
स्वस्वरूपं विकल्पयितुं सोच्छूनाभवद् यदा ॥४८२३॥

बिंदुत्रितयरूपेण संजाता स्थूलरूपिणी ।
विन्दुबिन्दू चेति पाति सहकारौ क्रमेण तौ ॥४८२४॥

अनुत्तरविसर्गाख्यौ प्रकाशामर्शसंज्ञकौ ।
तद्वर्णद्वययोगेन विद्या कामकलात्मिका ॥४८२५॥

ईकारश्चापि तद्रूपं बिंदुबिंदुद्वयात्मकम् ।
तद् योगाच्चापि तद्रूपा विद्या प्रोक्तागमांतरे ॥४८२६॥

सूक्ष्मकामकलारूपं पूर्णाहंता निगद्यते ।
पूर्णाहन्तानवच्छिन्नस्वस्वरूपविमर्शनम् ॥४८२७॥

अव्यापृतं सर्वमेव स्वस्वरूपमिहोच्यते ।
ततश्चाहं सर्वमिति पूर्णाहंताहं ईरितः ॥४८२८॥

प्रकाशामर्शयुगलसंघट्टं शुद्धचिद् वपुः ।
तद् वाचकत्वे शास्त्रं स्याद् ह्लीकार उभयात्मकः ॥४८२९॥

एतस्यार्थोऽपि संप्रोक्तस्तंत्रराजे मया शिवे ।
व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ॥४८३०॥

तयो विमर्श ईकारो बिंदुना तन्निफालनम् ।
सृष्टिः प्रकाशः प्रलयो ग्रसनं पालनं ततः ॥४८३१॥

संहृतस्य च सृष्टस्य विमर्श इति वै क्रमात् ।
हादित्रयार्थः कथितो व्याप्तिरेतत् त्रयस्य तु ॥४८३२॥

विद्वर्थमेदं च सृष्टिस्थितिप्रलयव्याप्तिसत् ।
शुद्धसंवेदनं तुर्यं हृल्लेखार्थो निगद्यते ॥४८३३॥

वस्तुप्रकाशः सृष्टिः स्यात् प्रलयस्तन्निमीलनम् ।
स्थितिस्तयो विमर्शः स्यादुक्तावस्थात्रयाश्रयम् ।।४८३४।।

शुद्धसंवेदनं तुर्यमेवं स्वात्मा महेश्वरः ।
सृष्ट्यादि कुर्वन् सततं ह्रींकारेणाभिधीयते ।।४८३५।।

प्रोक्तं संवित् सर्वमिति पूर्णाहंतैव सुस्फुटा ।
एवमर्थकतातीययोगात् कामकला स्मृता ।।४८३६।।

एतदेव मंत्रवीर्यं मंत्रचैतन्यमेव वा ।
आदिसांत्यं चैतदेव पूर्णाहंतात्मदर्शनम् ।।४८३७।।

अकार आदिमोऽन्त्यस्तु हकारः सप्रकीर्तितः ।
आदिमान्त्यं तेन पूर्णाहंतैव प्रणिगद्यते ।।४८३८।।

देहाद्यहन्तारहितं शुद्धं संविद्विमर्शनम् ।
पूर्णाहंतेति कथितं यद् ज्ञानात् चैवमुच्यते ।
विज्ञानं प्रत्यभिज्ञानं समाधि निर्विकल्पकः ।।४८३९।।

पूर्णाहंतेति च प्रोक्तमेतदेव न चेतरत् ।
कामः शिव इति प्रोक्तः कला शक्ति निगद्यते ।।४८४०।।

शिवशक्तचर्णयोगेन विद्या कामकलात्मिका ।
एवं कामकलात्मत्वं संविदः सुनिरूपितम् ।।४८४१।।

संविदः प्रोच्यते तद्वत् तत्त्वात्मत्वं क्रमात् स्फुटम् ।
आ महाप्रलयस्थायी भुवनादिषु संततम् ।।४८४२।।

तत्त्वमित्युच्यते तच्च पृथिव्यादि शिवांतकम् ।
सक्षेपतस्त्रिधा तत् स्यादात्मविद्या शिवात्मना ।।४८४३।।

अशुद्धं मिश्रितं शुद्धमशुद्धं केवलं जलम् ।
शुद्धं तु चिन्मयं मिश्र चिज्जडोभयरूपकम् ।।४८४४।।

एवं स्थितं त्रिधा तत्त्वमेवं षट्त्रिंशदात्मकम् ।
पृथिव्यादि प्रकृत्यंतमात्मतत्त्वमुदाहृतम् ।।४८४५।।

विद्यातत्त्वं तु पुरुषात् मायापर्यन्तमीरितम् ।
शिवांत शुद्धविद्यादिशिवतत्त्वं प्रकीर्तितम् ॥४८४६॥

द्रष्टृदृश्यात्मकं विश्वं द्विधोक्तं मामके मते ।
कालाध्वा चापि देशाध्वा दृश्यमेतद् द्विधा त्रयम् ॥४८४७॥

तेन विश्वं षडध्वात्मरूपं मम विनिर्मितम् ।
वर्णः पदं मंत्र इति कालाध्वा तु त्रिधा स्थितः ॥४८४८॥

कलातत्त्वं च भुवनं देशाध्वेति त्रिधा भवेत् ।
एतत् शिवपदप्राप्तौ मार्ग इत्यध्वसंज्ञितम् ॥४८४९॥

वर्णादीनां क्रियात्मत्वात् कालाध्वत्वमुदीरितम् ।
मूर्त्यात्मत्वात् कलादीनां देशाध्वत्वं निरूपितम् ॥४८५०॥

मूर्तिवैचित्र्यतो देशक्रममाभासयेत् शिवः ।
क्रियावैचित्र्यनिर्भासात् कालत्रयमितीरितम् ॥४८५१॥

वाच्यवाचकवर्गोऽयं देशकालाध्वनो र्युगम् ।
तत्र वर्णास्तु संप्रोक्ता एकपंचाशदात्मकाः ॥४८५२॥

पदानि मंत्राश्चानंताः पदवर्णमयं भवेत् ।
मंत्रः पदमयश्चेति त्रयमेकात्मकं भवेत् ॥४८५३॥

कला पंचविधा प्रोक्ता तत्त्वं षट्त्रिंशदात्मकम् ।
चतुर्विंशत्युत्तरं तु द्विशतं भुवनानि वै ॥४८५४॥

निवृत्तिश्च प्रतिष्ठा च विद्या शांतिरनंतरम् ।
शांत्यतीतेति च कला पंच प्रोक्ता मया शिवे ॥४८५५॥

कालाग्न्यादि शिवाख्यांतमाश्रितं भुवनं भवेत् ।
एतद् विश्वं भवेदण्डचतुष्टयतया स्थितम् ॥४८५६॥

पृथिवी प्रकृति र्माया शक्तिश्चेत्यण्डमुच्यते ।
अनाश्रितः परशिवः शक्त्यण्डाधिपति र्भवेत् ॥४८५७॥

रुद्रो मायाण्डाधिपतिः प्रकृत्यण्डाधिपो हरिः ।
पृथिव्यण्डाधिपो ब्रह्मा व्यापकं चोत्तरोत्तरम् ॥४८५८॥

अनंतपार्थिवाण्डानि प्रकृत्यंडे स्थितानि वै ।
प्रकृत्यण्डान्यनन्तानि मायाण्डे संस्थितानि हि ॥४८५९॥

शक्त्यण्डं तु शिवस्यैकदेश एव प्रतिष्ठितम् ।
शतकोटियोजनं वै पृथ्वीतत्त्वमुदाहृतम् ॥४८६०॥

पार्थिवाण्डं चैतदेव निवृत्याख्यकलाऽपि च ।
भुवनानां पार्थिवाण्डे स्थितमष्टोत्तरं शतम् ॥४८६१॥

पार्थिवाण्डे गोलकाभं बहिरेतस्य वै क्रमात् ।
जलादितत्त्वमावृत्य पूर्वपूर्वं स्थितं परम् ॥४८६२॥

धरातत्त्वाद् दशगुणं जलतत्त्वमुदीरितम् ।
तेजस्तत्त्वं समारभ्य जलतत्त्वावधि क्रमात् ॥४८६३॥

पूर्वपूर्वाद् दशगुणं तत्त्वं स्यादुत्तरोत्तरम् ।
बुद्धितत्त्वात् शतगुणमहंकाराख्यतत्त्वकम् ॥४८६४॥

अहंकारात्तु प्रकृतिः सहस्रगुणिता भवेत् ।
एतावत्तु प्रकृत्यण्डं प्रतिष्ठाख्य कलापि च ॥४८६५॥

भुवनांतं स्थितं चात्र षट्पंचाशदुदाहृतम् ।
प्रकृतेरयुतगुणं पुंतत्त्वं लक्षधा ततः ॥४८६६॥

नियतिस्तु ततः पश्चात् कालात्तं चोत्तरोत्तरम् ।
दशलक्षगुणं प्रोक्तं ततो माया तु कोटिधा ॥४८६७॥

मायाण्डमेतावदुक्तं विद्याख्या च कला भवेत् ।
भुवनानां स्थितिश्चात्र सप्तविंशतिरीरिता ॥४८६८॥

मायातत्त्वात् शुद्धविद्या दशकोटिगुणा भवेत् ।
विद्यातत्त्वादैश्वरं तु शतकोटिगुणं भवेत् ॥४८६९॥

सदाख्यमैश्वरात् तत्त्वात् सहस्रकोटिधा स्थितम् ।
एतावदुक्तं शान्त्याख्यकलेति शिवशासने ॥४८७०॥

भुवनानां स्थितं त्वष्टादशकं प्रोच्यते बुधैः ।
सदाख्याद् वृंदगुणितं शक्तितत्त्वं प्रचक्षते ॥४८७१॥

विद्यातत्त्वादेतदंतं शक्तचण्डं संप्रकीर्तितम् ।
शक्तितत्त्वानंतरं यत् शिवतत्त्वं प्रचक्षते ॥४८७२॥

तदप्रमेयसख्याद्यैरवच्छेदैर्विवर्जितम् ।
एतावत् शांत्यतीताख्या कलेति सुनिगद्यते ॥४८७३॥

भुवनानि स्थितान्यत्र प्रोक्तानि दश पंच च ।
तत्त्वात्मकं तु भुवनं तत्त्वं स्यात्तु कलात्मकम् ॥४८७४॥

वाच्यवाचकयोरैक्यात् कला वर्णमयी भवेत् ।
यतो वर्णात्मिका विद्या ततश्चाध्वस्वरूपिणी ॥४८७५॥

कलारूपा तत्त्वरूपा तथा भुवनरूपिणी ।
भुवनादेस्तु विस्तारः स्वच्छन्दे सन्निरूपितः ॥४८७६॥

इति श्रीमदागमरहस्ये सत्सग्रहे कौलयोगे स्थूलसूक्ष्मस्वरूपकथनं नामैक-
विंशतितमः पटलः ॥२१॥ आदितश्चैकोनचत्वारिंशत् ।

## अथ द्वाविंशः पटलः ।

पररूपानुसंधिस्तु प्रोच्यतेऽथ समासतः ।
देवतायाः परं रूपं प्रोक्तं सामान्यतः शिवे ॥४८७७॥

तस्यानुसंधिः सैवाहमस्मीति प्रविभावयेत् ।
देहप्राणमनोबुद्धिप्रमुखं न भवाम्यहम् ॥४८७८॥

यतो ममैतद् भवति ह्यहं न ममताश्रयः ।
सदा प्रकाशमानोऽहं चित्प्रकाशैकरूपकः ॥४८७९॥

अहं नास्मीति नो भाति यतः कस्यापि कुत्रचित् ।
देहादिः सर्वदा नैव प्रकाशत इति स्फुटम् ॥४८८०॥

नमद्रूपं तु देहादौ रवोऽहं संविदात्मकः ।
यथा भाति वहिः सर्वं घटाद्यं विविधं जगत् ॥४८८१॥

देहाद्यं वा सुखाद्यं वाप्यन्तरं सर्वमेव हि ।
सैवाहं शुद्धसंवित्ति: कालदेशैरनावृतः ॥४८८२॥

न चादिर्मे प्रभवति यतो भोगः सहेतुकः ।
सुखादेः प्राक् कृताद् भोगो न हि किंचिदकारणम् ॥४८८३॥

अतः प्राक्कर्मणैवात्र देहे भोगो हितो हितः ।
पूर्वदेहेष्वेवमेव तस्मादादि र्न विद्यते ॥४८८४॥

नान्तोऽपि मम चैतस्मिन् देहे संचितकर्मणाम् ।
अवश्यं भोगहेतुत्वाद्देहः तद्भोगसाधनः ॥४८८५॥

सदा भवेदुत्तरत इति मेऽनंतता स्थिता ।
न च क्षणविभेदेन भेदो मे संविदात्मन ॥४८८६॥

क्षणयोरन्तरालस्य प्रकाशानुपपत्तितः ।
स्मरणानुपपत्तेश्चाप्यैक्यस्यानुस्मृतेरपि ॥४८८७॥

संवित्सु रममाणो यो भेदः स विषयोद्भवः ।
दर्पणस्थविवक्तो भेदवत् प्रतिभावितः ॥४८८८॥

ततः संविदहंसृष्टेः पूर्व स प्रलयात् परः ।
अखंडः शुद्धसंवित्तिमात्ररूपो ह्यजोऽव्ययः ॥४८८९॥

तथैव सर्वदेहेषु भेदलेशविवर्जितः ।
घटादिनाकाश इव भाति भेद उपाधितः ॥४८९०॥

अतः कालेन देशेनाप्यनावृततनूरहम् ।
शास्त्रोक्त एव परमादेवताऽस्मि नचेतरः ॥४८९१॥

एवं परां देवतां तां चिन्मयीं परमेश्वरीम् ।
सदानुसंदधानोऽसौ साधको मुच्यते भयात् ॥४८९२॥

भयं भेदविभासेन भेदाभासो हि मायिकः ।
माया तस्याः पराशक्तेः स्वातंत्र्यं पूर्णमुच्यते ॥४८९३॥

सा स्वस्वातन्त्र्यवशात. स्वस्मिन्नेव सुधांबुधौ ।
प्रमातृलहरीभेदानाभास्य तेषु वै पुनः ॥४८९४॥

चिद्दर्पणेषु दृश्यानि प्रतिबिंबात्मकानि वै ।
स्वातंत्र्यैकनिमित्तेन बिंबापेक्षणवर्जनात् ॥४८९५॥

अवभासयंती परमा सदा क्रीडापरायणा ।
तस्मात् प्रमाता मेयं च तां विना न हि किंचन ॥४८९६॥

विनाम्भोधिं यथा भंगाः समासास्तद्वदुच्यते ।
एतावदविदित्वा हि बंधो ज्ञात्वा विमुच्यते ॥४८९७॥

एवंविधे परे तत्त्वे ज्ञातेऽवस्था च या भवेत् ।
योगिनः संविदात्मानस्तल्लक्ष्यं किंचिदुच्यते ॥४८९८॥

यावस्था भरिताकारा तत्त्वसंविद्विमर्शिनः ।
सा परापररूपेण परादेवी प्रकीर्तिता ॥४८९९॥

शक्तिशक्तिमतो यस्मादभेदः सर्वदा स्थितः ।
अतस्तद्धर्मधर्मित्वात् पराशक्तिः परात्मनः ॥४९००॥

कपालान्तर्मनो न्यस्य तिष्ठेन् मीलितलोचनः ।
ध्यातोऽन्तर्व्योम या देव्या तया देवः प्रकाशते ॥४९०१॥

प्रणवादिसमुच्चारात् प्लुतान्ते शून्यभावनात् ।
शून्यया परया शक्त्या शून्यतामेति योगिराट् ॥४९०२॥

प्रणष्टे वायुसंचारे पाषाण इव निश्चलः ।
परजीवैककर्मज्ञो योगी योगवदुच्यते ॥४९०३॥

यदर्थमात्रनिर्भासं स्तिमितो दधिवत् स्थितम् ।
स्वरूपशून्यं ध्यानं यत् तत् समाधि विधीयते ॥४९०४॥

न किंचिच्चिंतनादेव स्वयं तत्त्वं प्रकाशते ।
स्वयं प्रकाशिते तत्त्वे तत् क्षणात् तन्मयो भवेत् ॥४९०५॥

स्वप्नजाग्रदवस्थायां स्वप्नवद् योऽवतिष्ठते ।
निश्वासोच्छ्वासहीनस्तु निश्चितं मुक्त एव सः ॥४९०६॥

निष्पंदकरणग्रामः स्वात्मलीनमनोनिलः ।
य आस्ते मृतवत् साक्षाज्जीवन्मुक्तः स उच्यते ॥४९०७॥

न शृणोति न चाघ्राति न त्रस्यति न पश्यति ।
एवं शिवे विलीनात्मा समाधिस्थ इहोच्यते ॥४६०८॥

यथा जलं जले क्षिप्तं क्षीरं क्षीरे घृते घृतम् ।
अविशेषो भवेत् तद्वत् जीवात्मपरमात्मनोः ॥४६०६॥

यथा ध्यानस्य सामर्थ्यात् कीटोऽपि भ्रमरायते ।
तथा समाधिसामर्थ्याद् ब्रह्मभूतो भवेन् नरः ॥४६१०॥

क्षीरोद्भूतं घृतं यत् तत् तन्निक्षिप्त न पूर्ववत् ।
पृथक्कृतो गुणाभ्यासात् आत्मा तद्वदिहापि च ॥४६११॥

यथा गाढांधकारस्थो न किंचिदिह पश्यति ।
अमनस्कः तथा योगी प्रपंचं नैव पश्यति ॥४६१२॥

यथा निमीलने काले प्रपंचो नैव दृश्यते ।
तथैवोन्मीलने स्याच्चेदेतद् ध्यानस्य लक्षणम् ॥४६१३॥

जनः स्वदेहकण्डूति विजानाति यथा तथा ।
परब्रह्मस्वरूपी च वेत्ति विश्वविचेष्टितम् ॥४६१४॥

विदिते तु परे तत्त्वे वर्णातीते ह्यविक्रिये ।
किंकरत्वं हि गच्छन्ति मंत्रा मंत्राधिपैः सह ॥४६१५॥

आत्मैकभावनिष्ठस्य या या चेष्टा तदर्चनम् ।
यो यो जल्पः स स मंत्रः तद्ध्यानं यन्निरीक्षणम् ॥४६१६॥

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥४६१७॥

भिद्यते हृदयग्रंथि श्छिद्यंते सर्वशंसयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥४६१८॥

योगीन्द्रेण यदा प्राप्तं निर्मलं परमं पदम् ।
तदा देवेश्वरपदं प्राप्तं चापि न गृह्यते ॥४६१६॥

य. पश्येत् सर्वगं शांतमानंदात्मानमद्वयम् ।
न तस्य किंचिदाप्तव्यं ज्ञातव्यं चावशिष्यते ॥४६२०॥

संप्राप्ते ज्ञानविज्ञाते ज्ञेये च हृदि संस्थिते ।
लब्धे शांतपदे देवि न योगो नैव धारणा ॥४६२१॥

परब्रह्मणि विज्ञाते समस्तै र्नियमैरलम् ।
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥४६२२॥

आसिका बंधनं नास्ति नासिका बंधनं न हि ।
न यमो नियमो नास्ति स्वयमोमिति पश्यताम् ॥४६२३॥

न पद्मासनतो योगो न नासाग्रनिरीक्षणम् ।
ऐक्यं जीवात्मनोराहुः योगं योगविशारदाः ॥४६२४॥

ध्यायेत क्षणमात्रं वा शुद्धया परमं महः ।
यद् भवेत् सुमहत् पुण्यं तस्यांतो नैव गण्यते ॥४६२५॥

क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिंतनम् ।
तत् सर्वं पातकं हन्यात् तमः सूर्योदये यथा ॥४६२६॥

व्रतक्रतुतपस्तीर्थदानदेवार्चनादिषु ।
यत् फलं कोटिगुणितं तदेवाप्नोति तत्त्ववित् ॥४६२७॥

उत्तमा सहजावस्था मध्यमा ध्यानधारणा ।
जपस्तुतिः स्यादधमा होमपूजाधमाधमा ॥४६२८॥

उत्तमा तत्त्वचिंता स्याज्जपचिंता तु मध्यमा ।
शास्त्रचिंताधमा ज्ञेया लोकचिंताधमाधमा ॥४६२९॥

पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ।
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥४६३०॥

न हि नादात् परो मंत्रो न देवः स्वात्मनः परः ।
नानुसंधेः परा पूजा नहि तृप्तेः परं फलम् ॥४६३१॥

मंत्रोदकैं विना संध्यां जपहोमैं विना तपः ।
उपचारैं विना पूजां योगी नित्यं समाचरेत् ॥४६३२॥

देहो देवालयो देवि जीवो देवः सदाशिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥४६३३॥

जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः ॥४६३४॥

तुषेण बद्धो व्रीहिः स्यात् तुषाभावे तु तंडुलः ।
कर्मबद्धः सदा जीवः कर्ममुक्तः शिवः प्रिये ॥४६३५॥

अग्नौ तिष्ठति विप्राणां हृदि देवो मनीषिणाम् ।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र विदितात्मनाम् ॥४६३६॥

यो निंदास्तुतिशीतोष्णसुखदुःखादिबंधुषु ।
समश्चेत् स तु योगीशो हर्षामर्षविवर्जितः ॥४६३७॥

निःस्पृहो नित्यसंतुष्टः समदर्शी जितेन्द्रियः ।
आस्ते देहप्रवासीव स योगी परतत्वविद् ॥४६३८॥

निःसंकल्पविकल्पश्च निलीनोपाधिवासनः ।
निजस्वरूपनिर्मग्नः स योगी परतत्त्ववित् ॥४६३९॥

यथा पंग्वंधबधिरक्लीबमूकजडादयः ।
निवसंति पराधीनास्तथा योगी च तत्ववित् ॥४६४०॥

पंचमुद्रासमुत्पन्नपरमानंदनिर्भरः ।
य आस्ते स तु योगीन्द्रः पश्यन्नात्मानमात्मनि ॥४६४१॥

जग्धिपानकृतोल्लासरसानंदविजृंभणात् ।
भावयेद् भरितावस्थां महानंदस्ततो भवेत् ॥४६४२॥

आनंदे महति प्राप्ते दृष्टे वा बांधवे चिरात् ।
आनंदमुद्गतं ध्यात्वा तल्लयस्तन्मना भवेत् ॥४६४३॥

अलिमांसांगनासंगे यत् सुखं जायते प्रिये ।
तदेव मोक्षो विदुषामबुधानां तु पातकम् ॥४६४४॥

सदा मांसासवोल्लासः सदाचरणचिंतकः ।
सदा संशयहीनो यः कुलयोगी स उच्यते ॥४६४५॥

पिबन् मद्यं पलं खादन् स्वेच्छाचारपरायणः ।
अहंतेदंतयोरैक्यं भावयन्निवसेत् सुखम् ॥४६४६॥

आमिषासवयोगेन शिवशक्त्यं क्यमुच्यते ।
यावदासवगंधः स्यात् पशुः पशुपतिस्वयम् ॥४६४७॥
विनालिमांसगंधेन साक्षात् पशुपतिः पशुः ।
लोके निकृष्टमुत्कृष्टं लोकोत्कृष्टं निकृष्टकम् ॥४६४८॥
कुलमार्गे समुद्दिष्टं भैरवेण महात्मना ।
अनाचारः सदाचारस्त्वकार्यं कार्यमुत्तमम् ॥४६४९॥
असत्यमपि सत्यं स्यात् कौलिकानां कुलेश्वरि ।
अपेयमपि पेयं स्यादभक्ष्यं भक्ष्यमेव च ॥४६५०॥
अगम्यमपि गम्यं स्यात् कौलिकानां कुलेश्वरि ।
न विधि र्न निषेधश्च न पुण्यं न च पातकम् ॥४६५१॥
न स्वर्गो नैव नरकः कौलिकानां कुलेश्वरि ।
शत्रवश्चापि मित्रंति साक्षाद् दासन्ति भूमिपाः ॥४६५२॥
बांधवंति जनाः सर्वे कौलिकानां कुलेश्वरि ।
दुर्मुखाः सुमुखाः सर्वे गर्विणः प्रणमंति च ॥४६५३॥
बांधवाः साधकायन्ते कौलिकानां कुलेश्वरि ।
दुर्गुणाः सुगुणायंते अकुलं स्वकुलायते ॥४६५४॥
अधर्माश्चापि धर्मन्ति कौलिकानां कुलेश्वरि ।
मृत्यु र्वैद्यायते देवि स्वर्गः साक्षाद् गृहायते ॥४६५५॥
पुण्यायतेऽङ्गनासंगः कौलिकानां कुलेश्वरि ।
वहुनात्र किमुक्तेन कुलयोगीश्वराः प्रिये ॥४६५६॥
सदा संकल्पसंसिद्धा नात्र कार्या विचारणा ।
येन केनापि वेषेण येन केनापि लक्षितः ॥४६५७॥
यत्र कुत्राश्रमे तिष्ठन् कुलयोगी प्रवर्तते ।
योगिनो विविधै र्वर्णै र्नराणामुपकारकैः ॥४६५८॥
भ्रमंति पृथिवीमेतामविज्ञातस्वरूपिणः ।
सकृन्नैवात्मविज्ञान स्थापयेत् कुलयोगवित् ।
उन्मत्तमूकजडवत् लोकमध्ये सदाचरेत् ॥४६५९॥

अलक्ष्या हि यथा लोके व्योम्नि चंद्रार्कयोर्गतिः ।
नक्षत्राणां ग्रहाणां च तथा वृत्तं तु योगिनः ॥४९६०॥

आकाशे पक्षिणां देवि जलेऽपि जलचारिणाम् ।
यथा गति र्न दृश्येत तथा वृत्ति र्महात्मनाम् ॥४९६१॥

असन्त इव भासन्ते चरन्त्यज्ञा इव प्रिये ।
पामरा इव दृश्यंते कुलयोगविशारदाः ॥४९६२॥

जना यथावमन्येरन् गच्छेयु र्नैव संगतिम् ।
न किंचिदपि माषेरन् तथा योगी प्रवर्तते ॥४९६३॥

मुक्तो बालकवत् क्रीडन् कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद् विद्वान् कुलयोगी कुलेश्वरि ॥४९६४॥

यथा हसति लोकोऽयं जुगुप्सति च कुप्यति ।
विलोक्य दूरतो याति तथा योगी प्रवर्तते ॥४९६५॥

क्वचित् शिष्टः क्वचिद् भ्रष्टः क्वचिद् भूतपिशाचवत् ।
नानावेषधरो योगी विचरेत महीतले ॥४९६६॥

योगी लोकोपकाराय भोगान् भुङ्क्ते न काङ्क्षया ।
जनानुग्रहमाकाङ्क्षन् क्रीडते जगतीतले ॥४९६७॥

सर्वदर्शी यथा सूर्यः सर्वभक्षी यथानलः ।
योगी भुक्त्वाखिलान् भोगान् तथा पापै र्न लिप्यते ॥४९६८॥

सर्वस्पर्शी यथा वायु र्यथाकाशश्च सर्वगः ।
सर्वैं र्यथा नदी स्नाता तथा योगी सदा शुचिः ॥४९६९॥

यथा ग्रामगतं तोयं नदीयुक्तं भवेत् शुचिः ।
तथा म्लेच्छगृहान्नादियोगिहस्तार्पितं शुचिः ॥४९७०॥

यदाचरति देवेशि कुलज्ञानपरायणः ।
तदेव विदुषां मान्यमात्मनो हितमिच्छताम् ॥४९७१॥

यस्मिन् चरति योगीशः स मार्गः परमो मतः ।
यस्यामुदेति सूर्यः सा पूर्वाशा ननु दृश्यते ॥४९७२॥

यत्र मत्तगजो याति तत्र मार्गो यथा भवेत् ।
कुलयोगी चरेद् यत्र स सन्मार्गः कुलेश्वरि ।
नदी वक्रामृजुं कर्तुं तत् प्रवाहं निवारितुम् ।।४६७३।।

स्वेच्छाविहारिणं सन्त को वा वारयितुं क्षमः ।
यद्वन् मंत्रबलोपेतः क्रीडन् सर्पैर्न दृश्यते ।।४६७४।।

तद्वन्न दश्यते ज्ञानी क्रीडन्निन्द्रियपन्नगैः ।
निवृत्तदुःखाः संतुष्टा निर्द्वन्द्वा गतमत्सराः ।।४६७५।।

कुलज्ञानरताः शांतास्त्वद्भक्तास्ते च कौलिकाः ।
अमदक्रोधदंभा साहंकाराः सत्यवादिनः ।।४६७६।।

कौलिकेन्द्रा ज्ञानपरा न चेन्द्रियवशानुगाः ।
कीर्त्यमाने कुले येषां रोमांचो गद्गदस्वरः ।।४६७७।।

आनंदाश्रूणि ते देवि कथिताः कौलिकेश्वराः ।
सर्वधर्माधिको लोके कुलधर्मः शिवोदितः ।।४६७८।।

इति ये निश्चितधियः प्रोक्तास्ते कौलिकोत्तमाः ।
यो भवेत् कुलतत्त्वज्ञः कुलमार्गविशारदः ।।४६७९।।

कुलार्चनपरः स स्यात् कौलिको दांभिकाः परे ।
कुलभक्तान् कुलज्ञांश्च कुलाचारान् कुलव्रतान् ।।४६८०।।

प्रीतो भवति यो दृष्ट्वा कौलिकः स तु मे प्रियः ।
तत्त्वत्रयश्रीचरणमूलमंत्रार्थतत्त्ववित् ।
देवतागुरुभक्तश्च कौलिकः स्यान्न दीक्षितः ।।४६८१।।

दुर्लभं सर्वलोकेषु कुलाचार्यस्य दर्शनम् ।
विपाकेनैव पुण्यानां लभ्यते नान्यथा प्रिये ।।४६८२।।

संस्मृतः कीर्तितो दृष्टो वंदितो भाषितोऽपि वा ।
पुनाति कुलधर्मिष्ठः चांडालमपि स्वेच्छया ।।४६८३।।

सर्वज्ञो वापि मूर्खो वाप्युत्तमो वाऽधमोऽपि वा ।
देवि यत्र कुलज्ञानी तत्राहं च त्वया सह ।।४६८४।।

नाहं वसामि कैलासे न मेरौ न च मंदरे ।
कुलज्ञा यत्र तिष्ठंति तत्र तिष्ठामि भामिनि ॥४९८५॥

सुदूरमपि गंतव्यं यत्र माहेश्वरो जनः ।
द्रष्टव्यश्च प्रयत्नेन तत्र सन्निहितस्त्वहम् ॥४९८६॥

अतिदूरे स्थितो वापि द्रष्टव्यं कुलदेशिकः ।
समीपे वर्तमानोऽपि न द्रष्टव्यः पशुः प्रिये ॥४९८७॥

कुलज्ञानी वसेद् यत्र स देशः पुण्यभाजनम् ।
दर्शनादर्च्चनात् तस्य त्रिःसप्तकुलमुद्धरेत् ॥४९८८॥

कुलज्ञानिनमालोक्य स्वसंतानगृहे स्थितम् ।
नृत्यंति पितरः सर्वे यास्यामः परमां गतिम् ॥४९८९॥

सदा शंसन्ति पितरः सुवृष्टिमिव कर्षकाः ।
अस्मत्कुलेषु पुत्रो वा पौत्रो वा कौलिको भवेत् ॥४९९०॥

स धन्यः खलु लोकेऽस्मिन् पुरुषः क्षीणकल्मषः ।
यत् समीपं समायाति कुलाचार्यो मुदा प्रिये ॥४९९१॥

कौलिकेन्द्रः समायाति कौलिकावसथं प्रति ।
समायांति सुराः देवि योगिन्यो योगिभिः सह ॥४९९२॥

प्रविश्य कुलयोगीशं भुंजते पितृदेवताः ।
तस्मात् संपूजयेद् भक्त्या कुलज्ञानेव नापरान् ॥४९९३॥

अभ्यर्चयित्वा त्वां देवि त्वद्भक्तान्नार्चयन्ति ये ।
पापिष्ठास्त्वत्प्रसादस्य भाजन न भवंति ते ॥४९९४॥

नैवेद्यं पुरतो न्यस्तं दर्शनात् स्वीकृतं त्वया ।
रसान् भक्तस्य जिह्वाग्रादश्नामि कमलेक्षणे ॥४९९५॥

त्वद्भक्तपूजनाद् देवि पूजितोऽहं न संशयः ।
तस्मात् मम प्रियाकांक्षी त्वद्भक्तानेव पूजयेत् ॥४९९६॥

यत् कृतं कुलनिष्ठानां तद्देवानां कृतं भवेत् ।
देवाः कुलप्रियाः सर्वे तस्मात् कौलिकमर्चयेत् ॥४९९७॥

न तुष्याम्यहमन्यत्र तथा भक्त्या सुपूजितः ।
कौलिकेन्द्रार्चने सम्यक् यथा तुष्यामि पार्वति ॥४९९८॥

यत् फलं कौलिकेन्द्राणां पूजनाल्लभते प्रिये ।
तत् फल नाप्नुयात् तीर्थतपोदानमखव्रतैः ॥४९९९॥

दत्तमिष्ट हुतं तप्तं पूजित जप्तमंबिके ।
कौलिकस्य भवेद् व्यर्थं कौलिकं योऽवमानयेत् ॥५०००॥

श्मशानं तद्गृहं देवि स पापी श्वपचाधमः ।
यः प्रविश्य कुलं धर्म कुलाचारं न पालयेत् ॥५००१॥

कुलनिष्ठान् परित्यज्य यच्चान्यस्मै प्रदीयते ।
तद्दानं निष्फलं देवि कौलिकस्य न संशयः ॥५००२॥

भिन्नभाण्डजलं यद्वदुप्तं बीजं शिलास्विव ।
भस्मनीव हुतं द्रव्यं तद्वद्दानमकौलिके ॥५००३॥

यथाशक्त्या तु यत् किंचित् यो दद्यात् कुलयोगिने ।
विशेषतिथिषु प्रीत्या तत् फलं नैव गण्यते ॥५००४॥

यो देवि स्वयमाहूय कुलज्ञांश्च शुभे दिने ।
अभ्यर्च्य देवताबुद्ध्या गंधपुष्पाक्षतादिभिः ॥५००५॥

मादिभिः पंचमुद्राभिः सद्भक्त्या परितोषयेत् ।
तेषु तुष्टेष्वहं तुष्टस्तुष्टाः स्युः सर्वदेवताः ॥५००६॥

अनिखातमनिक्षिप्तमप्रयत्नेन वर्धितम् ।
परलोकस्य पाथेयं वीरवक्त्रार्पितं मधु ॥५००७॥

पापाचारसमायुक्तं सर्वलोकबहिष्कृतम् ।
त्रायते हि कुलद्रव्यं कुलयोगीश्वरार्पितम् ॥५००८॥

यस्मिन् देशे वसेद् वीरः कुलपूजारतः प्रिये ।
सोऽपि देशो भवेत् पूतः किं पुनस्तत्पुरस्थिताः ॥५००९॥

तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलधर्मरतो भूयात् कुलज्ञानिनमर्चयेत् ॥५०१०॥

ज्ञानिनोऽज्ञानिनो वापि यावद् देहस्य धारणा ।
तावद्वर्णाश्रमाचारः कर्तव्यः कर्ममुक्तये ॥५०११॥

कर्मणोदीरितं ज्ञानं ज्ञानेन शिवतां व्रजेत् ।
शिवैक्यमेव मुक्तिः स्यादतः कर्म समाचरेत् ॥५०१२॥

कुर्यादनिद्यकर्माणि निंद्यकर्माणि नाचरेत् ।
इहामुत्रफलाकांक्षी कंठस्थासुरपि प्रिये ॥५०१३॥

सर्वकर्माणि संत्यक्तु न शक्यानीह मानवैः ।
त्यजेत् कर्मफलं यो वा स त्यागीत्यभिधीयते ॥५०१४॥

स्वकार्येषु प्रवर्तन्ते करणानीति चिंतयेत् ।
अहंभावमपास्यैव यः कुर्यात् स न लिप्यते ।
क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनंतरम् ॥५०१५॥

न सस्पृशंति तत्त्वज्ञं जलं पद्मदलं यथा ।
तन्निष्ठस्य न कर्माणि पुण्यापुण्यानि संक्षयम् ॥५०१६॥

प्रयांति नैव लिप्यन्ते क्रियमाणानि साधुना ।
उत्पन्नसहजानंदतत्त्वज्ञानरतः प्रिये ॥५०१७॥

सर्वसंकल्पसंत्यक्तो न विद्वान् कर्म संत्यजेत् ।
वृथैव यैः परित्यक्तं कर्मकांडमपंडितैः ॥५०१८॥

पाखंडाः पंडितंमन्यास्ते यांति नरकं प्रिये ।
ऋतुं प्राप्य यथा वृक्षः पत्रं त्यजति निस्पृहः ॥५०१९॥

तत्त्वं प्राप्य तथा योगी त्यजेत् कर्मपरिग्रहम् ।
अश्वमेधायुतेनापि ब्रह्महत्यायुतेन वा ॥५०२०॥

पुण्यपापै र्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ।
पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्तकम् ॥५०२१॥

जिह्वोपस्थपरित्यागी कर्मणा किं करिष्यति ।
इति ते कथितं देवि पररूपानुसंधिकम् ॥५०२२॥

योगीशलक्षणं चैव कालज्ञानमथो शृणु ।
अज्ञात्वा कालपुरुषज्ञानं योगी कथं भवेत् ॥५०२३॥

यथा शकरगीतायाम्—

यत् सदा कालकलनां प्राप्नुयात्तु पुनः पुनः ।
भूत्वा भूत्वाथ तस्मिन् वै योगी कालं परीक्षयेत् ॥५०२४॥

स्वशरीरं कालरूपं शुभाशुभनिधिं च यत् ।
युक्त्या शुभाशुभं कालं ज्ञात्वा योगं समभ्यसेत् ॥५०२५॥

अथातः संप्रवक्ष्यामि छायापुरुषलक्षणम् ।
यस्य विज्ञानमात्रेण, त्रिकालज्ञो भवेन् नरः ॥५०२६॥

कालो हरस्तथा चाद्यो येनोपायेन लक्ष्यते ।
तं वदाम्यप्रयासेन यथा ज्ञायेत योगिभिः ॥५०२७॥

एकान्तं विजनं गत्वा कृत्वादित्यं च पृष्ठतः ।
पश्येच्छायां निजां तत्र सावधानेन चेतसा ।
हृत्कंठप्रांतरे पश्येन्निर्निमेषतया चिरम् ॥५०२८॥

ततो द्रागंबरं पश्येच्छायापुरुषमात्मनः ।
तारं मायां परं ब्रह्म मंत्रमेनं जपन् सुधीः ॥५०२९॥

मनसैव यथाकामं तत. पश्येच्च शंकरम् ।
शुद्धस्फटिकसंकाशं नररूपवरं हरम् ॥५०३०॥

षण्मासाभ्यासयोगेन त्रिकालज्ञो न संशयः ।
सतताभ्यासयोगेन नास्ति किंचित् सुदुर्लभम् ॥५०३१॥

संपूर्णावयवं तं चेत् संमुखं श्वेतमीक्षते ।
यावदब्दं सुखं क्षेमं विजयं प्राप्नुयात् तदा ॥५०३२॥

दृष्टे तस्मिन् शिरोहीने मासषट्कं न जीवति ।
विकर्णे हायनं चैकं व्यंसे वै सप्तमासकम् ।
सरन्ध्रहृदये सप्त दशमासान् विहस्तके ॥५०३३॥

विपार्श्वे त्रीन् व्युरस्के द्वौ व्यास्ये मासं हि जीवति ।
द्विदेहदर्शने मृत्युः सद्य एव न संशयः ॥५०३४॥

मित्रनाशो विपादे च बंधुनाशो विहस्तके ।
विनष्टे दक्षिणे बाहौ बंधो वामे स्त्रियो मृतिः ॥५०३५॥

आत्मनाशो विशीर्षे स्यात् सर्वाभावे कुलक्षयः ।
अदृष्टे दक्षिणे पार्श्वे मातुर्दक्षे पितुर्मृतिः ॥५०३६॥

दुर्भिक्षं दारुणं देशे कर्बुरे च पराङ्मुखे ।
विवर्णे धूमके रुक्षे छिन्ने भिन्नेऽभिघातनम् ॥५०३७॥

पीतेऽरुजोऽरुणे हानिः कृष्णे मृत्युर्न संशयः ।
न च भ्रुवः सप्तघोषं पंचत्वं त्रिदिनात्मकम् ॥५०३८॥

जिह्वामेकदिनं प्रोक्तं म्रियते मानवो ध्रुवम् ।
कोणमष्टांगबिंबं तु संपीड्याक्षि निरीक्षयेत् ॥५०३९॥

यदा न दृश्यते बिंबं दशाहाज्जायते मृतिः ।
यस्य न दृश्यते ज्योतिर्नेत्रयोः पीडिते तथा ॥५०४०॥

मरणं तस्य निर्दिष्टं चतुर्थे मासि निश्चितम् ।
अरुंधतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च ।
आयुर्हीना न पश्यंति चतुर्थं मातृमण्डलम् ॥५०४१॥

अरुंधती भवेज्जिह्वा ध्रुवो नासाग्र एव च ।
भ्रुवोर्मध्ये विष्णुपदं तारका मातृमंडलम् ॥५०४२॥

इति श्रीमदागमरहस्ये सत्संग्रहे कौलावधूतकालज्ञानान्तकथनं नाम
द्वाविंशतितमः पटलः ॥२२॥ आदितः पंचाशत्तमः ॥

# अथ त्रयोविंशः पटलः ।

अथ तत् तत् प्रकरणोपयोगि कतिचित् स्तोत्राणि लिख्यन्ते । तत्रादौ श्रीगुरुस्तुति.—

ॐ नमस्तुभ्यं महामंत्रदायिने शिवरूपिणे ।
ब्रह्मज्ञानप्रकाशाय संसारदुःखहारिणे ॥१॥

अतिसौम्याय दिव्याय वीरायाज्ञानहारिणे ।
नमस्ते कुलनाथाय कुलकौलीन्यदायिने ॥२॥

शिवतत्त्वप्रबोधाय ब्रह्मतत्त्वप्रकाशिने ।
नमस्ते गुरवे तुभ्यं साधकाभयदायिने ॥३॥

अनाचाराचारभावबोधाय भावहेतवे ।
भावाभावविनिर्मुक्तमुक्तये गुरवे नमः ॥४॥

नमस्ते शंभवे नित्यं दिव्यभावप्रकाशिने ।
ज्ञानानंदस्वरूपाय विभवाय नमो नमः ॥५॥

शिवाय शक्तिनाथाय विद्यानाथाय सच्चिदे ।
कामरूपाय कामाय कामकेलिकलात्मने ॥६॥

कुलपूजोपदेशाय कुलार्णवस्वरूपिणे ।
अव्यक्तनिजतच्छक्तिसमभावविभूतये ।

नमस्तेऽस्तु महेशाय नमस्तेऽस्तु नमो नमः ॥७॥
इदं स्तोत्रं पठेन् नित्यं साधको गुरुदिङ्मुखः ।
प्रातरुत्थाय देवेशि ततो विद्या प्रसीदति ॥८॥

इति श्रीकुब्जिकातत्रे गुरुस्तोत्रम् ।

अथ सर्वकर्मारंभे शक्तिस्तोत्रम्—

ॐ मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥१॥

माहेशि वरदे देवि परमानंदरूपिणि ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥२॥

कौमारि सर्वविघ्नेशि कुमारक्रीडने वरे ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥३॥

विष्णुरूपधरे देवि विनतासुतवाहिनि ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥४॥

बाराहि वरदे देवि दंष्ट्रोद्धृतवसुंधरे ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥५॥

शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥६॥

चामुंडे मुंडमालासृक्चर्चिते विघ्ननाशिनि ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥७॥

महालक्ष्मि महामोक्षे क्षोभसंतापहारिणि ।
कृपया हर मे विघ्नं मंत्रसिद्धिं प्रयच्छ च ॥८॥

मितिमातृमये देवि मितिमातृबहिष्कृते ।
एके वहुविधे देवि विश्वरूपे नमोऽस्तु ते ॥९॥

एतत् स्तोत्रं पठेद् यस्तु मंत्रारंभेषु संयतः ।
विदग्धां वा समालोक्य विघ्नस्तस्य न जायते ॥१०॥

इति श्रीयामले शक्तिस्तोत्रम् ।

अथ पात्रप्रशंसास्तोत्रम्—

पात्रं कृत्वा करे मंत्री सर्वकर्म लभेत् सुखी ।
इह लोके श्रियं भुक्त्वा देहान्ते भैरवो भवेत् ॥१॥

देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो वटुकाश्च यक्षपितरो भूताः पिशाचाः ग्रहाः ।
अन्ये भूचरखेचराजलचरावेतालकाश्चेटकाः
तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं सदीपं चरुम् ॥२॥

वामे रामारमणकुशला दक्षिणे चालिपात्र-
मग्रे मुद्राश्रणकवटकाः शूकरस्योष्णशुद्धिः ।
तंत्रीवीणासरसमधुरा सद्गुरोः सत्कथायां
कौलो मार्गः परमगहनो योगिनामप्यगम्यः ॥३॥

अलिपिशितपुरंध्रीभोगपूजापरोऽहं
बहुविधकुलमार्गारंभसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीमाश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥४॥

सकलविकलदीक्षामंत्रशुद्धात्मकोऽहं
विविधविबुधवर्यैः प्रार्थ्यमार्गोन्मुखोऽहम् ।
विमलतरतरोऽहं सुन्दरीतत्परोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥५॥

शिवोऽहं शक्तिरूपोऽहं दैवोऽहं दनुजोऽप्यहम् ।
यज्ञोऽहं मनुजश्चाहं सर्वोऽहं सर्वदास्म्यहम् ॥६॥

मंत्रोऽहं मंत्रकल्पोऽहं मंत्रजाप्यहमेव च ।
मंत्रकृत् मंत्रविच्चाहं मंत्रानंदात्मकोऽप्यहम् ॥७॥

पूज्योऽहं पूजनीयोऽहं पूजकोऽप्यहमेव च ।
पूजाकृत् पूजाविच्चाहं पूजारसमयोऽस्म्यहम् ॥८॥

करे पात्रं मुखे स्तोत्रसानंदो हृदयान्तरे ।
भक्ति र्गुरुपदांभोजे शरणं किमतः परम् ॥९॥

एकेन शुष्कचणकेन घटं पिबामि
वापीं पिबामि सहसा लवणार्द्रकेन ।
आस्वाद्य मांसमलिरोहितमत्स्यखंडं
गंगां पिबामि यमुनां सह सागरेण ॥१०॥

वामे चन्द्रमुखी मुखे च मदिरा पात्र करांभोरुहे
मूर्ध्नि श्रीगुरुर्चितनं भगवतीध्यानास्पदं मानसम् ।
जिह्वायां जपसाधनं परिणतिः कौलक्रमाभ्यासने
ये सन्तो नियतं पिबंति सुरसं ते भुक्तिमुक्ति गताः ॥११॥

पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥१२॥

यावन्न चलते दृष्टि र्यावन्न चलते मनः ।
तावत् पानं प्रकर्तव्यं पशुपानमतः परम् ॥१॥

इति श्रीपरारहस्ये पात्रप्रशसास्तोत्रम् ।

अथ शांतिस्तोत्रम्—

देवि वक्ष्यामि पूजान्ते शांतिस्तोत्रमनुत्तमम् ।
वीरा येन परानंदपदं प्राप्स्यंति निर्भयाः ॥१॥

जयन्तु देव्यो हरपादपंकजं प्रसन्नधामामृतमोक्षदायकम् ।
अनंतसिद्धान्तमतिप्रबोधनं नमामि चाष्टाष्टकयोगिनीगणम् ॥२॥

योगिनीचक्रमध्यस्थं मातृमंडलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥३॥

अनादिघोरसंसारव्याधिध्वंसैकहेतवे ।
नमः श्रीनाथवैद्याय कुलौषधविधायिने ॥४॥

यस्यार्चनेन विधिना कमपीह लोके
कर्मप्रसादमपि नामफलं प्रसूते ।
तं संततं सकलसाधकचित्तवृत्ति-
चिंतामणिं कुलगणाधिपतिं नमामि ॥५॥

आपदो दुरितं रोगाः समयाचारलंघनात् ।
ये सर्वे ते व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥६॥

आयुरारोग्यमैश्वर्यं कीर्ति र्लाभसुखं जयः ।
कांति र्मनोरथश्चास्तु पांतु सर्वाश्च देवताः ॥७॥

संपूजकानां परिपालकानां यतीन्द्रयोगीन्द्रतपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः करोतु शांति भगवान् कुलेशः ॥८॥

नंदन्तु षड्विधकुलान्वयदर्शका ये
सिंहासनाध्युषितशाक्तमहान्वया ये ।
नंदंतु सर्वकुलकौलरताः परं ये-
ऽप्यन्ये विशेषपदभेदकशांभवा ये ॥९॥

नन्दन्तु सिद्धगुरवस्तदनुक्रमौघा
ज्येष्ठानुगाः समयिनो वटुकाः कुमार्यः ।
षड्योगिनीप्रवरवीरकुलप्रसूता
नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥१०॥

नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्या निरंजनरता गुरवो निरीहाः
शाक्ताश्च शांतमनसो हृतशोकशंकाः ॥११॥

नन्दन्तु योगनिरताः कुलयोगयुक्ता
आचार्यसामयिकसाधकपुंगवा ये ।
गावो द्विजा युवतयो यतयः कुमार्यो
धर्मे भवन्तु निरता गुरुभक्तियुक्ताः ॥१२॥

नन्दन्तु साधककुला ह्यणिमादिनिष्ठाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शांभवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपंकजमेव लभ्यम् ॥१३॥

याश्चक्रक्रमभूमिकावसतयो नाडीषु याः संस्थिता
याः कायद्रुमरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छ्वासोर्मिमरुत्तरंगनिलया निश्वासवासाश्च याः
ता देव्यो रिपुपक्षभक्षणपरास्तृप्यन्तु कौलार्चिताः ॥१४॥

या देव्यः कुलसंभवाः क्षितिगता या देवतास्तोयगा
या नित्यं प्रथितप्रभाः शिखिगता याः मातरिश्वाश्रयाः ।
या व्योमामृतमंडलामृतमया याः सर्वगाः सर्वदाः
ताः सर्वाः कुलमार्गपालनपराः शांति प्रयच्छन्तु मे ॥१५॥

ऊर्ध्वं ब्रह्मांडतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वा वने वा पवनसलिलयो यंत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपालिमांसैः
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवंद्याः ॥१६॥

ब्रह्माश्रीशेषदुर्गागुहवटुकगणा भैरवाः क्षेत्रपाला
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः ।
भूतागंधर्वविद्याधरऋषिपितृयक्षासुरा हि प्रभूता
योगीशाश्चरणाः किंपुरुषमुनिसुराश्चक्रगाः पान्तु सर्वे ॥१७॥

सत्यं चेद् गुरुवाक्यमेव पितृदेवाशेषविद्योगिनी-
प्रीतिश्चेत् परदेवता च यदि चेद् वेदाः प्रमाणं हि चेत् ।
शाक्तेयं यदि दर्शनं भवति चेदाज्ञेयमेषास्ति चेत्
सन्त्यत्रापि च कौलिकाश्च यदि चेत् स्यान् मे जयः सर्वदा ॥१८॥

तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥१९॥

शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तंबसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद् यज्ञेन तृप्यतु ॥२०॥

दूरस्था व्यसनस्थाश्च ये ये सामयिका जनाः ।
तेषां तु खेचरीपानममृतायोपकल्पताम् ॥२१॥

कामाः फलन्तु वीराणां योगिनां योगसिद्धयः ।
राजानो धार्मिकाः सन्तु काले वर्षन्तु वारिदाः ॥२२॥

इति श्रीपरारहस्ये कुलार्णवे च शांतिस्त्रोत्रम् ।

अथ वीरवदनस्तोत्रम्—

पठित्वेदं नमेद् वीरान् वीरवंदनमाचरेत् ।
स्तुवेद् वीरान् नमेद् वीरान् मंत्रसिद्धिः प्रजायते ॥१॥

ॐ जगत्त्रयाभ्यर्चितशासनेभ्यः परार्थसंपादनकोविदेभ्यः ।
समुद्धृतक्लेशमहोरगेभ्यो नमो नमः साधकनायकेभ्यः ॥२॥

प्रहीनसर्वाश्रयवासनेभ्यः सर्वार्थतत्त्वोदितसाधनेभ्यः ।
सर्वप्रजाभ्युद्धरणोदितेभ्यो नमो नमः साधकनायकेभ्यः ॥३॥

निस्तीर्णसंसारमहार्णवेभ्यस्तृष्णालतोन्मूलनतत्परेभ्यः ।
जरारुजामृत्युनिवारकेभ्यो नमो नमः साधकनायकेभ्यः ॥४॥

सद्धर्मरत्नाकरभाजनेभ्यो निर्वाणमार्गोत्तमदेशिकेभ्यः ।
सर्वत्र संपूर्णमनोरथेभ्यो नमो नमः साधकनायकेभ्यः ॥५॥

लोकानुकंपाभ्युदितादरेभ्यः कारुण्यमैत्रीपरिभाविलेभ्यः ।
सर्वार्थचर्यापरिपूरकेभ्यो नमो नमः साधकनायकेभ्यः ॥६॥

विध्वस्तनिःशेषकुवासनेभ्यो ज्ञानाग्निना दग्धमलेन्धनेभ्यः ।
प्रज्ञाप्रतिष्ठाप्रतिपूरकेभ्यो नमो नमः साधकनायकेभ्यः ॥७॥

सर्वार्थिताशापरिपूरकेभ्यो वैनेयपद्माकरबोधकेभ्यः ।
विस्तीर्णसर्वार्थगुणाकरेभ्यो नमो नमः साधकनायकेभ्यः ॥८॥

अनंतकर्मार्जितशासनेभ्यो ब्रह्मेन्द्ररुद्रादिनमस्कृतेभ्यः ।
परस्परानुग्रहकारकेभ्यो नमो नमः साधकनायकेभ्यः ॥९॥

विभग्नभूतादिमहाभयेभ्यो मपंचकाचारपरायणेभ्यः ।
समस्तसौभाग्यकलाकरेभ्यो नमो नमः शाम्भविशाम्भवेभ्यः ॥१०॥

विभग्नदुष्कर्मजवासनेभ्यः समंततो जुष्टमहायशोभ्यः ।
लभ्यामलज्ञानकृतास्पदेभ्यो नमो नमः शांभविशांभवेभ्यः ॥११॥

सर्वागमांभोधिमहाप्लवेभ्यः श्रीचक्रपूजार्थपरायणेभ्यः ।
श्रीवीरचर्याचरणक्षमेभ्यो नमो नमः शांभविशाम्भवेभ्यः ॥१२॥

श्रीमंत्रकोटिद्युतिभूषणेभ्यो द्वाविंशदुल्लासदशातिगेभ्यः ।
अद्वैततत्त्वामृतभाजनेभ्यो नमो नमः शांभविशाम्भवेभ्यः ॥१३॥

षट्त्रिंशता लक्षणभूषितेभ्यः प्रोत्फुल्लपद्माकरलोचनेभ्यः ।
प्रतप्तचामीकरविग्रहेभ्यो नमो नमः शांभविशाम्भवेभ्यः ॥१४॥

संबोधसंभारसुसंस्थितेभ्यः संसारनिर्वाणनिदर्शकेभ्यः ।
महाकृपावेष्टितमानसेभ्यो नमो नमः शांभविशाम्भवेभ्यः ॥१५॥

परैकविज्ञानरसाकुलेभ्यो वामाश्रिताचारभयानकेभ्यः ।
स्वातंत्र्यविध्वस्तजगन्मयेभ्यो नमो नमः शांभविशाम्भवेभ्य. ॥१६॥

श्मशानचर्याप्तमहाफलेभ्यो मोहांधकारापहृतिक्षमेभ्यः ।
परस्पराज्ञापरिपालकेभ्यो नमो नम शांभविशाम्भवेभ्यः ॥१७॥

विधूतकेशालिकपालकेभ्यः सुरासवारक्तविलोचनेभ्यः ।
नवीनकांतारतततत्परेभ्यो नमो नमो भैरविभैरवेभ्यः ॥१८॥

विभूतिलिप्तांगदिगंबरेभ्यो चिताग्निधूमालिभयानकेभ्यः ।
कपालपात्रामृतपानकेभ्यो नमो नमो भैरविभैरवेभ्यः ॥१९॥

सिद्धयष्टकादानमहामुनिभ्यः श्रीभैरवाचारकृतादरेभ्यः ।
स्वाधीनतान्यक्कृतनिर्जरेभ्यो नमो नमो भैरविभैरवेभ्यः ॥२०॥

प्रशांतशास्त्रार्थविचारकेभ्यो निवृत्तनानारसकाव्यकेभ्यः ।
निरस्तनिःशेषविकल्पनेभ्यो नमो नमो भैरविभैरवेभ्यः ॥२१॥

स्वात्मैक्यभावांतरिताशयेभ्यः सायुज्यसाम्राज्यसुखाकरेभ्यः ।
श्रीसच्चिदानंदितविग्रहेभ्यो नमो नमो भैरविभैरवेभ्य ॥२२॥

पराप्रसादास्पदमानसेभ्यो ब्रह्माद्वयज्ञानरसाकुलेभ्यः ।
शिवोऽहमित्याश्रितचेतनेभ्यो नमो नमो भैरविभैरवेभ्य ॥२३॥

सर्वथा सर्वदास्माकं सर्वं घटपटादिमत् ।
जगज्जनितविस्तारं ब्रह्मेदमिति वेद्म्यहम् ॥२४॥

अहमेव परो हंसः शिवः परमकारणम् ।
शिवाद्वयप्रकाशाढ्यं श्यामलं धाम धीमहि ॥२५॥

अनेन वीरस्तवकीर्तनेन समुद्धतक्लेशसुवासनोऽहम् ।
संसारकांतारमहार्णवेऽस्मिन् निमज्जमानं जगदुद्धरेयम् ॥२६॥

इति श्रीपरारहस्ये वीरवदनस्तोत्रम् ।

अथ स्वाचाराकरणव्यगतासागकर कुलस्तोत्रम्—

कुलस्तोत्रं पठित्वा तु कुलचक्रं विसर्जयेत् ।
कुलस्तोत्रस्य पाठेन व्यंगोऽपि सांगतामियात् ॥

श्रीदेव्युवाच—

त्रिपुरा त्रिपुरेशी च सुंदरी परसुंदरी ।
श्रीमालिनी च सिद्धांबा महात्रिपुरसुन्दरी ॥१॥

प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा ।
संप्रदायकुला कौला रहस्यातिरहस्यगा ॥२॥

परापररहस्या च तथा कामेश्वरी परा ।
भगमालिनि नित्यक्लिन्ना भेरुंडा वह्निवासिनी ॥३॥

महाविद्येश्वरी दूती त्वरिता कुलसुंदरी ।
नित्या नीलपताका च विजया सर्वमंगला ॥४॥

ज्वालांशुमालिनी चित्रा वशिनी सुभगाकुला ।
पूर्णाख्या च तथा वत्सा कामेशी मोदिनी तथा ॥५॥

विमला अरुणादेवी जयंती कुलभैरवी ।
सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी ॥६॥

सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्दिनी ।
स्वप्नावती शूलिनी च मातंगी सुरसुंदरी ॥७॥

महाकाली महोग्रा च चित्ररूपा महोदरी ।
प्राणविद्या तथैकाक्षी चैकपादा महांकुशा ॥८॥

वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी ।
त्रिखंडा त्रिशिरा गौरी विंध्याचलनिवासिनी ॥९॥

क्षोभिण्युन्मादिनी भद्रा ललिता बहुरूपिणी ।
सर्वसंपत्करी तारा भवानी विश्ववासिनी ॥१०॥

कूटेश्वरी महाविद्याः कथितास्तव भैरव ।
उपासकान् महादेव शृणु चैकमनाः स्वयम् ॥११॥

मनुश्चन्द्रः कुवेरश्च मन्मथस्तदनन्तरम् ।
लोपामुद्रा मुनिर्नंदी शक्रः स्कंदः शिवस्तथा ॥१२॥

क्रोधभट्टारकश्चैव पंचमी परिकीर्तितः ।
दुर्वासा व्याससूर्यौ च वसिष्ठश्च पराशरः ॥१३॥

और्वो वन्हिर्यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुर्विष्णुः स्वयंभूश्च भैरवो गालवस्तथा ॥१४॥

अनिरुद्धो भरद्वाजो दक्षिणामूर्तिरेव च ।
चटुको गणपश्चैव लक्ष्मीर्गंगा सरस्वती ॥१५॥

धात्रीशेषः प्रमत्तश्च उन्मत्तः कुलभैरवः ।
क्षेत्रपालो हनूमांश्च दक्षो गरुड एव च ॥१६॥

प्रह्लादः शुकदेवश्च रामो रावण एव च ।
काश्यपः कौत्सकुंभौ च यमदग्नि र्भृगुस्तथा ॥१७॥

बृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः ।
अर्जुनो भीमसेनश्च द्रोणाचार्यो वृषाकपिः ॥१८॥

दुर्योधनस्तथा कुंती सीता च रुक्मिणी तथा ।
सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा ॥१९॥

पुष्पदंतो महावुद्धो वाणः कालश्च मंदरः ।
कैलासः क्षीरसिंधुश्च उदधि हिमवांस्तथा ॥२०॥

नारदश्च महावीराः कथिता वीरसाधकाः ।
महाविद्याप्रसादेन स्वस्वकर्मसमन्विताः ॥२१॥

एतेषां वत्स नामानि नित्यं विद्योपसेविनाम् ।
प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतः सुधीः ॥२२॥

पूजायां वा महापीठे प्रसीदामि कुलप्रिय ।
अशुचिर्वा निरालंबः सालंबो वा कुलान्तिके ॥२३॥

नित्यपूजाफलं तस्य ददामि वरमीप्सितम् ।
चक्रसंकेतकं वत्स गुरुसंकेतकं तथा ॥२४॥

नामसंकेतकं चैव मंत्रसंकेतकं तथा ।
समयाचारसंकेतमज्ञात्वा यः प्रवर्तते ॥२५॥

जपपूजार्चनं होममभिचाराय कल्पते ।
इदं स्त्रोत्रं पठित्वा तु भवेत् संकेतवान् ध्रुवम् ॥२६॥

इति श्रीकुलचूडामणौ सकेतस्तवराज ।

अथारात्रिक स्तोत्र कुलाचारचद्रोदये—

अथ भैरवरागेण गायेदारात्रिकं शुभम् ।
येन तुष्टा भवेद् देवी दद्यात् कामान् यथेप्सितान् ॥१॥

यदि तालेन पुत्रेन्द्र संबद्धं गानमाचरेत् ।
परमानंदसंदोहदानकारणसुक्षमम् ॥२॥

शृणु पुत्रक वक्ष्यामि गानं साधकदुर्लभम् ।
वेदवाक्यसमं सर्वैरागमैरपि सेवितम् ॥३॥

आरात्रिकमयं पात्रं गंधपुष्पफलान्वितम् ।
आदाय यजमानस्तु कृत्वा वै मस्तकावधि ।४॥

उत्थाय चोत्थिताः सर्वे परमानंदसंयुताः ।
केचित् तालकराश्चान्ये मृदंगपणवोत्सुकाः ॥५॥

वीणावेणुकराश्चान्ये झल्लरीशब्दभाविताः ।
यथावकाशवादित्रचामराजिविराजिताः ॥६॥

गानं कुर्यु र्मुदा प्रीता द्रवीभूतांतराशयाः ।
येन कार्याणि सिध्यन्ति साधकानां महामते ॥७॥

मृगमदचन्द्रकवर्तिसमन्विततरलकुलाकुलदीपम् ।
मणिमयभाजनमध्यगतं कुसुमावलिनिर्जितनीपम् ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥१॥

निर्जितचंचलचारुशिखाचलनयनत्रपधरशोभम् ।
प्रकटितकोमलगंधविलुब्धमधुव्रतवर्द्धितलोभम् ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे । ॥२॥

कृपणजनेन कृतं करुणामयि निजशक्तेरनुसारम् ।
यदि न दधामि मनो निजतेजसि कथमिह भक्तिविचारम् ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥३॥

सुन्दरि सुरवंदितपदयुगले कुरु निजजनपरितोषम् ।
अतिकुटिलाशयलोकजनितमिह मा गणयस्व कुदोषम् ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकलपावननयनसुरंगे ॥४॥

वयमिह पापकरणकुटिला अपि तव चरणद्वयसगे ।
कथमपि बुद्धिमहो विनिधाय यम गणयाम न रंगे ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकलपावननयनसुरंगे ॥५॥

कुरु करुणां मयि कामकले कमलेव यमंब नवीनाः ।
अतिकुत्सितकरणैरतिलंपटचित्तचलितमतिहीनाः ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकलपावननयनसुरंगे ॥६॥

अलकावलिमंडितमुखिमृगसुतनिर्जितनयनसुरंगे ।
दलितमनोजधनुःसुभगभ्रुयुगे शिवदे शिवसंगे ।

आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥७॥

शुकनासाश्रितवरमुक्ताफलपरिहृतहिमकरशोभे ।
कुंडलमंडितगंडयुगे सुकपोलकलाहरलोभे ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥८॥

उदधिजदररेखावरकंठसुकोकिलकलरवनादे ।
सुरसरिदिव शुभ्रहारचलन्वलपरिहृतशंभुविषादे ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरगे ॥९॥

स्तनयुगलप्रभयाप्रतिपादितपूजनशिवयुतलिंगे ।
लोमावलिकलयाकलुषीकृतनाभिसरोवरभृ गे ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥१०॥

विषकोमलभुजवल्लिशिवे कदलीनवविरचितजंघे ।
चरणकमलसुरनरमुनिमधुकरगुंजनरामसुलंघे ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥११॥

द्वादशपदमिदमद्भुतगीतमतीव कुरुष्व सुवेदम् ।
सकलागमसारं सुखदं प्रहरति निजजनखेदम् ॥
आरात्रिकमिदमद्भुतमम्ब गृहाण शिवे शिवसंगे ।
कुटिलालकशोभितमुखपंकजपावननयनसुरंगे ॥१२॥

तत एव साधका वदेयुः—

मंगलानि जगन्मात मंगलानि शिवप्रिये ।
अधर्मिष्वपि भक्तेषु सर्वदा कुरु सूत्तमम् ॥

ततस्ततेजोहस्तैरादाय वारत्रयं मुखशुद्धि कुर्युः । तत. सर्वे नमस्कारान् कुर्युः । ततो यजमानः प्रदक्षिणा कृत्वा कस्मिञ्चित् पात्रे दक्षिणां निधाय ॐ ह्रीं उपचारसांगतासिध्यर्थमिद हिरण्यमग्निदैवतं तन्मूल्योपकल्पित द्रव्य मूलमत्रान्तेऽमुकदेवतार्पणमस्तु । एव समर्प्य कृताजलि नम्रगिरा भुजगमु दरं स्तोत्रं पठेत् ।

यथा श्रीदेव्युवाच—

ॐ षडाधारपंकेरुहान्तर्विराजत्
सुषुम्णान्तरालेति तेजोल्लसंतीम् ।
सुधामंडल श्रावयंतीं पिबंतीं
सुधामूर्तिमीडेऽहमानंदरूपाम् ॥१॥

ज्वलत्कोटिबालार्कभासारुणांगीं
सुलावण्यशृंगारशोभाभिरामाम् ।
महापद्मकिंजल्कमध्ये विराजत्
त्रिकोणे लसंतीं भजेऽहं भवानीम् ॥२॥

क्वणत्किंकिणीनूपुरोद्भासिरत्न—
प्रभालीढलाक्षार्द्रपादारविंदाम् ।
अजेशाच्युताद्यैः सुरैः सेव्यमानं
महादेव्यहं मूर्ध्नि तां भावयामि ॥३॥

सुशोणांबरा बद्धनीवीविराजत्
महारत्नकांचीकलापं नितम्बम् ।
स्फुरद् दक्षिणावर्तनाभिं च
तिस्रो वलीरंव ते रोमराजिं भजेऽहम् ॥४॥

लसद्वृत्तमुत्तुंगमाणिक्य-
कुंभोपमश्रीस्तनद्वन्द्वमम्बाम्बुजाक्षि ।
भजे दुग्धपूर्णाभिरामं तवेदं
महाहारदीपं सदा प्रस्नुतं सत् ॥५॥

शिरीषप्रसूनोल्लसद्वाहुदंडै
ज्वलद्बाणकोदंडपाशांकुशैश्च ।
चलत्कंकणै र्हारकेयूरभूषो-
ज्ज्वलद्भिः स्फुरंतीं भजे श्रीभवानीम् ॥६॥

शरत्पूर्णचन्द्रप्रभापूर्णबिंबा-
धरस्मेरवक्त्रारविन्दश्रियं ते ।
सुरत्नावलीहारताटंकशोभां
भजे सुप्रसन्नामजस्रं भवानीम् ॥७॥

सुनासापुटां पद्मपत्रायताक्षीं
नवेष्टां श्रियं दानदक्षं कटाक्षम् ।
ललाटोल्लसद्गंधकस्तूरिभूषो-
ज्ज्वलद्भिर्मुखाम्भोजमीडेऽहमम्बाम् ॥८॥

चलत्कुंतलांते भ्रमद्भृङ्गवृन्दं
घनस्निग्धधम्मिल्लभूषोज्ज्वलांगीम् ।
स्फुरन्मौलिमाणिक्यबद्धेन्दुरेखा-
विलासोद्भ्रमं दिव्यमूर्धानमीडे ॥९॥

स्फुरत्वंब डिंभस्य मे हृत्सरोजे
सदा वाङ्मयं सर्वतेजोमयं च ।
गणेशाणिमाद्याखिलाशक्तिवृन्दस्फुरत्-
श्रीमहाचक्रराजोल्लसन्तीम् ॥१०॥

इति श्रीभवानि स्वरूपं तवेदं
प्रपंचात्परं ज्योतिरूपं प्रसन्नम् ।
परां राजराजेश्वरीं त्रैपुरीं त्वां
शिवाङ्कोपविष्टां शिवां त्वां भजेऽहम् ॥११॥

त्वमर्कस्त्वमग्निस्त्वमापस्त्वमिन्दु-
स्त्वमाकाशभूर्वायवस्त्वं चिदात्मा ।

त्वदन्यो न कश्चित् प्रकाशोऽस्ति सर्वं
सदानंदसंवित्स्वरूपं भजेऽहम् ॥१२॥

गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव
त्वमेवासि माता पितासि त्वमेव ।
त्वमेवासि विद्या त्वमेवासि बुद्धि-
र्गति र्मे मतिर्देवि सर्वं त्वमेव ॥१३॥

स्तुतीनामगम्या सुवेदागमज्ञा
महिम्नो न जानंति पारं तवात्र ।
स्तुतिं कर्तुमिच्छामि तत्त्वां भवानीं
क्षमस्वेदमम्ब प्रमुग्धः किलाहम् ॥१४॥

अरण्ये शरण्ये सुकारुण्यमूर्ते
हिरण्योदयाद्यैरगण्यस्वरूपैः ।
भवारण्यभीतं च मां त्राहि भद्रे
नमस्ते नमस्ते नमस्ते भवानि ॥१५॥

इमामन्वहं श्रीभवानीभुजंग-
स्तुतिं यः पठेद् भक्तियुक्तश्च तस्मै ।
स्वकीयं पदं शाश्वतं वेदसारं
श्रियं चापि सिद्धिं भवानी ददाति ॥१६॥

भुजंगसुन्दरस्तोत्रमेतत् पुत्रक सत्तम ।
उपचारान्तमासाद्य पठितव्यं प्रयत्नतः ॥१७॥

ब्रह्महत्यासहस्राणि नारीहत्याशतानि च ।
भुजंगसुंदरस्तोत्रपाठान् नश्यन्ति तत् क्षणात् ॥१८॥

दीक्षातीर्थानियोगाद्याः सन्यासाद्यास्तथा क्रियाः ।
भुजंगसुंदरस्तुत्या कलां नार्हन्ति षोडशीम् ॥१९॥

इति श्रीकुलाचारचन्द्रोदये श्रीभगवतीभुजगसुंदरस्तोत्रम् ।

अथ श्रीपादुकापंचकस्तोत्रम्—

ॐ ब्रह्मरंध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुंडलीकनककांडमंडितं द्वादशांतसरसीरुहं भजे ॥१॥

तस्य कंदलितकर्णिकापुटे क्लृप्तपत्रमकथादिरेखया ।
कोणलक्षितहलक्षमंडलं भावलक्ष्यमनलालयं भजे ॥२॥

तत्पुटे पटुतडित्कडारिमस्पर्धमानपरिपाटलप्रभम् ।
चिंतयामि हृदि चिन्मयं सदा बिंदुनादमणिपीठमंडलम् ॥३॥

ऊर्ध्वमस्य हुतभुक्शिखारुणं चिद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहश्छटोत्कटं व्यामृशामि युगमादिहंसयोः ॥४॥

तत्र नाथचरणारविंदयोः संविदामृतझरीमरंदयोः ।
द्वन्द्वमिन्दुकरकंदशीतलं मानसं स्पृशतु मंगलास्पदम् ॥५॥

निषक्तमणिपादुकं नियमिताघकोलाहलं
स्फुरत्किसलयारुणं नखसमुन्मिषच्चन्द्रिकम् ।
परामृतसरोवरोदितसरोजरोचिष्णु तद्
भजामि शिरसि स्थितं गुरुपदारविंदद्वयम् ॥६॥

पादुकापंचकस्तोत्रं पंचवक्त्रमुखोद्गतम् ।
षडाम्नायक्रमप्राप्तिः प्रपंचे चातिदुर्लभम् ॥७॥

इति श्रीशिवप्रोक्तं श्रीनाथपादुकास्तोत्रम् ।

स्तोत्रानेतान् पठेद्यस्तु स्वे स्वे स्थानेऽर्चनक्रमे ।
स विधूयाखिलान् विघ्नानभीष्टं लभतेऽचिरात् ॥८॥

इति श्रीमदागमरहस्ये सत्सग्रहे स्तोत्रकथनं नाम त्रयोविंश पटल ।
आदितश्चैकपंचाशत्तमः ।

## अथ चतुर्विंशः पटलः ।

अथ कलिजाना क्षेमाय सुगमोपायो निर्वाणतंत्रे—
देवी वाक्यम्—

आयाते पापिनि कलौ सर्वधर्मविलोपिनि ।
दुराचारे दुःप्रपंचे दुष्टकर्मप्रवर्तके ॥५०४३॥

न वेदा प्रभवस्तत्र स्मृतीनां स्मरणं कुतः ।
नानेतिहासयुक्तानां नानामार्गप्रवर्तिनाम् ॥५०४४॥

बहुलानां पुराणानां विनाशो भविता विभो ।
तदा लोका भविष्यन्ति धर्मकर्मबहिर्मुखाः ॥५०४५॥

उच्छृंखला मदोन्मत्ताः पापकर्मरताः सदा ।
कामुकाः लोलुपाः क्रूराः दुर्मुखाः निष्ठुरा. शठाः ॥५०४६॥

स्वल्पायु मंदमतयो रोगशोकसमाकुलाः ।
निश्रीकाः निर्बलाः नीचाः नीचाचारपरायणाः ॥५०४७॥

नीचसंसर्गनिरताः परवित्तापहारकाः ।
परनिंदापरद्रोहपरीवादपराः खलाः ॥५०४८॥

परस्त्रीहरणे पापशंकाभयविवर्जिता ।
निर्धना मलिना दीना दरिद्राश्चिररोगिणः ॥५०४९॥

विप्राः शूद्रसमाचाराः संध्यावंदनवर्जिताः ।
अयाज्ययाजका लुब्धाः दुर्वृत्ताः पापकारिणः ॥५०५०॥

असत्यभाषिणो मूर्खा दांभिका दुष्प्रपंचका. ।
कन्याविक्रयिणो व्रात्यास्तपोव्रतपराङ्मुखाः ॥५०५१॥

लोकप्रतारणार्थाय जपपूजापरायणाः ।
पाखंडाः पंडितंमन्याः श्रद्धाभक्तिविवर्जिताः ॥५०५२॥

कदाहारा. कदाचाराः धृतकाः शूद्रसेवकाः ।
शूद्रान्नभोजिनः क्रूरा वृषलीरतिकार्मुकाः ॥५०५३॥

दास्यंति धनलोभेन स्वदारान् नीचजातिषु ।
ब्राह्मण्यचिह्नमेतावत् केवलं सूत्रधारणम् ॥५०५४॥
नैव पानादिनियमो भक्ष्याभक्ष्यविवेचनम् ।
धर्मशास्त्रे सदा निंदा साधुद्रोहो निरंतरम् ॥५०५५॥
सत्कथालापमात्रं च न तेषां मनसि क्वचित् ।
त्वया कृतानि तंत्राणि जीवोद्धारणहेतवे ॥५०५६॥
निगमागमजातानि भुक्तिमुक्तिकराणि च ।
देवीनां यत्र देवानां मंत्रयंत्रादिसाधनम् ॥५०५७॥
कथिता वहवो न्यासाः सृष्टिस्थित्यादिलक्षणाः ।
बद्धपद्मासनादीनि गदितान्यपि भूरिशः ॥५०५८॥
पशुवीरसिद्धिभावा देवतामंत्रसिद्धिदाः ।
शवासनं चितारोहो मुंडसाधनमेव च ॥५०५९॥
लतासाधनकर्माणि त्वयोक्तानि सहस्रशः ।
पशुभावदिव्यभावौ स्वयमेव निवारितौ ॥५०६०॥
कलौ न पशुभावोऽस्ति दिव्यभावः कुतो भवेत् ।
पत्रं पुष्पं फलं तोयं स्वयमेवाहरेत् पशुः ॥५०६१॥
न शूद्रदर्शनं कुर्यात् मनसा न स्त्रियं स्मरेत् ।
दिव्यश्च देवता प्रायः शुद्धान्तःकरणः सदा ॥५०६२॥
द्वन्द्वातीतो वीतरागः सर्वभूतसम· क्षमी ।
कलिकल्मषयुक्तानां सर्वदा स्थिरचेतसाम् ॥५०६३॥
निद्रालस्यप्रसक्तानां भावशुद्धिः कथं भवेत् ।
वीरसाधनकर्माणि पचतत्त्वोदितानि च ॥५०६४॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
एतानि पंचतत्त्वानि त्वया प्रोक्तानि शंकर ॥५०६५॥
कलिजा मानवा लुब्धाः शिश्नोदरपरायणाः ।
लोभात् तत्र पतिष्यन्ति न करिष्यन्ति साधनम् ॥५०६६॥

इन्द्रियाणां सुखार्थाय पीत्वा च बहुलं मधु ।
भविष्यन्ति मदोन्मत्ता हिताहितविवर्जिताः ॥५०६७॥

परस्त्रीधर्षकाः केचिद् दस्यवो बहवो भुवि ।
न करिष्यन्ति ते मत्ताः पापयोनिविचारणाम् ॥५०६८॥

अतिपानादिदोषेण रोगिणो बहवः क्षितौ ।
शक्तिहीना बुद्धिहीना भूत्वा च विकलेन्द्रियाः ॥५०६९॥

ह्रदे गर्ते प्रांतरे वा प्रासादात् पर्वतादपि ।
पतिष्यन्ति मरिष्यन्ति मनुजा मदविह्वलाः ॥५०७०॥

केचित् विवादयिष्यन्ति गुरुभिः स्वजनैरपि ।
केचिन् मौना मृतप्राया अपरे बहुजल्पकाः ॥५०७१॥

अकार्यकारिणः क्रूरा धर्ममार्गविलोपकाः ।
योगहीना ज्ञानहीना क्रियाहीनास्तथा प्रभो: ॥५०७२॥

हिताय यानि कर्माणि कथितानि त्वया प्रभो ।
मन्ये तानि महादेव विपरीतानि मानवे ॥५०७३॥

के वा योगं करिष्यन्ति न्यासजातानि केऽपि वा ।
स्तोत्रपाठं यंत्रलिपिं पुरश्चर्यां जगत्पतेः ॥५०७४॥

युगधर्मप्रभावेण स्वभावेन कलौ नराः ।
भविष्यन्त्यतिदुर्वृत्ताः सर्वथा पापकारिणः ॥५०७५॥

तेषामुपायं देवेश कृपया कथय प्रभो ।
आयुरारोग्यवर्चस्वं बलवीर्यविवर्धनम् ॥५०७६॥

विद्याबुद्धिप्रदं नृणामप्रयत्नं शुभंकरम् ।
येन लोका भविष्यन्ति महाबलपराक्रमाः ॥५०७७॥

शुद्धचित्ता. परहिता मातापित्रोः प्रियंकराः ।
स्वदारनिष्ठाः पुरुषाः परस्त्रीषु पराङ्मुखाः ॥५०७८॥

देवतागुरुभक्ताश्च पुत्रस्वजनपोषकाः ।
ब्रह्मज्ञा ब्रह्मविद्याज्ञा ब्रह्मचिंतनमानसाः ॥५०७९॥

सिद्ध्यर्थं लोकयात्रायाः कथयस्व हिताय तत् ।
सर्वथा येन क्षेमं स्याद् गतिर्वै पारलौकिकी ॥५०८०॥

विना त्वां सर्वलोकानां कस्त्राता भुवनत्रये ।
इति देव्या वचः श्रुत्वा शंकरो लोकशंकरः ॥५०८१॥

कथयामास तत्त्वेन महाकारुण्यवारिधिः ।
साधु पृष्टं महाभागे जगतां हितकारिणि ॥५०८२॥

एतादृशः शुभः प्रश्नो न केनापि कृतः पुरा ।
धन्यासि सुकृतज्ञासि हितासि कलिजन्मनाम् ॥५०८३॥

यद् यदुक्तं त्वया भद्रे सत्यं सत्यं यथार्थतः ।
सर्वज्ञा त्वं त्रिकालज्ञा धर्मज्ञा परमेश्वरि ॥५०८४॥

यथातत्त्वं यथान्यायं यथायोग्यं न संशयः ।
भूतं भवद् भविष्यं च धर्ममुक्तं त्वया प्रिये ॥५०८५॥

कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि ।
मेध्यामेध्यविचाराणां न शुद्धिः श्रौतकर्मणा ॥५०८६॥

न संहिताद्यैः स्मृतिभिरिष्टसिद्धि र्नृणां भवेत् ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते ॥५०८७॥

श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरानघे ।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥५०८८॥

विना ह्यागममार्गेण कलौ नास्ति गतिर्यतः ।
कलौ तंत्रोदिता मंत्राः सिद्धास्तूर्णफलप्रदाः ॥५०८९॥

शस्ता कर्मसु सर्वेषु जपयज्ञक्रियादिषु ।
निर्वीया श्रौतजातीया विषहीनोरगा इव ॥५०९०॥

सत्यादौ सफला आसन् कलौ ते मृतका इव ।
पांचालिका यथा भित्तौ सर्वेन्द्रियसमन्विताः ॥५०९१॥

असूरशक्ताः कार्येषु तथान्ये मंत्रराशयः ।
यथा तंत्रोदितो मार्गो मोक्षाय च सुखाय च ॥५०९२॥

नान्यः पंथामुक्तिहेतुरिहामुत्र सुखाप्तये ।
तंत्राणि बहुधोक्तानि नानाख्यानान्वितानि च ॥५०९३॥

सिद्धानां साधकानां च विधानानि च भूरिशः ।
अधिकारिविभेदेन पशुवाहुल्यतः प्रिये ॥५०९४॥

कुलाचारोदितं धर्मं गुप्त्यर्थं कथितं क्वचित् ।
जीवप्रवृत्तिकारीणि कानिचित् कथितान्यपि ॥५०९५॥

देवा नानाविधाः प्रोक्ता देव्योऽपि बहुधा प्रिये ।
भैरवाश्चैव वेताला वटुका नायिकागणाः ॥५०९६॥

शाक्ताः शैवा वैष्णवाश्च सौरा गाणपतादयः ।
नानामंत्राश्च यंत्राणि सिद्धोपायान्यनेकशः ॥५०९७॥

भूरिप्रयाससाध्यानि यथोक्तफलदानि च ।
यथा यथा कृता प्रश्ना येन येन यदा यदा ॥५०९८॥

तदा तस्योपकाराय तथैवोक्तं मया प्रिये ।
सर्वलोकोपकाराय सर्वप्राणिहिताय च ॥५०९९॥

युगधर्मानुसारेण याथातथ्येन पार्वति ।
त्वया यादृक् कृतः प्रश्नो न केनापि कृतः पुरा ॥५१००॥

तव स्नेहेन वक्ष्यामि सारात् सारं परात् परम् ।
वेदानामागमानां च तंत्राणां च विशेषतः ॥५१०१॥

सारमृद्धृत्य देवेशि तवाग्रे कथ्यते मया ।
किं वेदैः किं पुराणैश्च किं शास्त्रैर्बहुभिः शिवे ॥५१०२॥

विज्ञातेऽस्मिन् महामंत्रे सर्वसिद्धीश्वरो भवेत् ।
यतो जगन्मंगलाय त्वयाहं विनियोजितः ॥५१०३॥

अतस्ते कथयिष्यामि यद् विश्वहितकृद् भवेत् ।
कृते विश्वहिते देवि विश्वेशः परमेश्वरः ॥५१०४॥

प्रीतो भवति विश्वात्मा यतो विश्वं तदाश्रितम् ।
स एक एव सद्रूपः सत्योऽद्वैतः परात् परः ॥५१०५॥

स्वप्रकाशः सदा पूर्णः सच्चिदानंदलक्षण. ।
निर्विकारो निराधारो निर्विशेषो निराकुल ॥५१०६॥

गुणातीत सर्वसाक्षी सर्वात्मा सर्वदृग्विभुः ।
गूढ. सर्वेषु भूतेषु सर्वव्यापी सनातनः ॥५१०७॥

सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ।
लोकातीतो लोकहेतुरवाङ्मनसगोचर. ॥५१०८॥

स वेत्ति विश्व सर्वज्ञस्तं न जानाति कश्चन ।
तदधीनं जगत् सर्वं त्रैलोक्यं सचराचरम् ॥५१०९॥

तदालंबनतस्तिष्ठेदविज्ञेयमिदं जगत् ।
तत् सत्यतामु-श्रित्य सद्वद्भाति पृथक् पृथक् ॥५११०॥

तेनैव हेतुभूतेन वयं जाता महेश्वरि ।
कारणं सर्वभूतानां स एकः परमेश्वरः ॥५१११॥

लोकेषु सृष्टिकरणात् स्रष्टा ब्रह्मेति गीयते ।
विष्णुः पालयिता देवि संहर्ताहं तदिच्छया ॥५११२॥

इंद्रादयो लोकपालाः सर्वे तद्वशवर्तिनः ।
स्वे स्वेऽधिकारे निरतास्ते शासति तदाज्ञया ॥५११३॥

त्वं परा प्रकृतिस्तस्य पूज्यासि भुवनत्रये ।
तेनान्तर्यामिरूपेण तत्तद्विषययोजिताः ॥५११४॥

स्वस्वकर्म प्रकुर्वन्ति न स्वतंत्राः कदाचन ।
यद्भयात् वाति वातोऽपि सूर्यस्तपति यद्भयात् ॥५११५॥

वर्षन्ति तोयदाः काले पुष्यंति तरवो वने ।
कालं कालयते काले मृत्यो र्मृत्युर्भियो भयम् ॥५११६॥

वेदान्तवेद्यो भगवान् यत् तच्छब्दोपलक्षणः ।
सर्वे देवाश्च देव्यश्च तन्मया सुरवंदिते ॥५११७॥

आब्रह्मस्तंबपर्यन्तं तन्मयं सकलं जगत् ।
तस्मिँस्तुष्टे जगत् तुष्टं प्रीणिते प्रीणितं जगत् ॥५११८॥

तदाराधनतो देवि सर्वेषां प्रीणनं भवेत् ।
तरोर्मूलाभिषेकेण यथा तद्भुजपल्लवाः ॥५११९॥

तृप्यन्ति तदनुष्ठानात् तथा सर्वेऽमरादयः ।
यथा तवार्चनात् ध्यानात् पूजनाज्जपनात् प्रिये ॥५१२०॥

भवन्ति तुष्टा सुन्दर्यस्तथा जानीहि सुव्रते ।
यथा गच्छन्ति सरितोऽवशेनापि सरित्पतिम् ॥५१२१॥

तथार्चादीनि कर्माणि त्वदुद्देश्यानि पार्वति ।
यो यो यान् यान् यजेद् देवान् श्रद्धया यद्यदाप्तये ॥५१२२॥

तत् तद् ददाति सोऽध्यक्षस्तैस्तै र्देवगणैः शिवे ।
बहुनात्र किमुक्तेन तवाग्रे कथ्यते प्रिये ॥५१२३॥

ध्येय पूज्यः सुखाराध्यस्तं विना नास्ति मुक्तये ।
नायासो नोपवासश्च कायक्लेशो न विद्यते ॥५१२४॥

नैवाचारादिनियमो नोपचाराश्च भूरिशः ।
न दिक्कालविचारोऽस्ति न मुद्रान्यासंहतिः ॥५१२५॥

यत् साधने कुलेशानि तं विना कोऽन्यमाश्रयेत् ।
कलौ पापयुते घोरे तपोहीनेऽतिदुस्तरे ॥५१२६॥

निस्तारबीजमेतावन्नाममंत्रस्य साधनम् ।
साधनानि बहूक्तानि नानातंत्रागमादिषु ॥५१२७॥

कलौ दुर्बलजीवानामसाध्यानि महेश्वरि ।
अल्पायुष स्वल्पवित्ता अन्नाधीनासवः प्रिये ॥५१२८॥

लुब्धा धनार्जने व्यग्रा सदा चंचलमानसाः ।
समाधावस्थिरधियो योगक्लेशासहिष्णवः ॥५१२९॥

तेषां हिताय मोक्षाय ब्रह्ममार्गोऽयमीरितः ।
एवं श्रुत्वा तदा देवी परमानंदसंप्लुता ॥५१३०॥

प्रोवाच शंकरं हृष्टा वचनं संशयच्छिदम् ।
यत् त्वयोक्तं दयासिंधो ब्रह्मोपासनमुत्तमम् ॥५१३१॥

निराकार निरीहं यत् कथं तत् सेव्यते जनैः ।
ज्ञानिनां दुर्लभं यद्धि तत् कथं स्थूलबुद्धिभिः ॥५१३२॥

स्मृतः स्मृतिपथं याति सर्वव्यापी सनातनः ।
कृपया सुगमोपायेनैव तत् साधनं वद ॥५१३३॥

विधानं कीदृशं तस्य साधनं केन वर्त्मना ।
मंत्रः को वात्र विहितो ध्यानपूजादिकं च किम् ॥५१३४॥

सविशेषं सावशेषमामूलाद् वक्तुमर्हसि ।
मम प्रीतिकरं देवलोकानां हितकारकम् ॥५१३५॥

कोह्यन्यस्त्वामृते शंभो भवव्याधिभिषग्गुरुः ।
इति देव्या वचः श्रुत्वा देवदेवो महेश्वरः ॥५१३६॥

उवाच परया प्रीत्या पार्वतीं पार्वतीपतिः ।
शृणु देवि महाभागे तदाराधनकारणम् ॥५१३७॥

येन साधनमात्रेण भुक्ति मुक्ति लभेन् नरः ।
ब्रह्मणः सर्वगस्यास्य निरीहस्य चिदात्मनः ॥५१३८॥

त्वं पराप्रकृतिः साक्षात् तदिच्छावशवर्तिनी ।
त्वत्तो जातं जगत्सर्वं त्वं जगज्जननी शिवे ॥५१३९॥

महदाद्यणुपर्यन्तं यदेतत् सचराचरम् ।
त्वयैवोत्पादित भद्रे त्वदधीनमिदं जगत् ॥५१४०॥

त्वं सर्वरूपिणी देवि सर्वेषां जननी परा ।
तुष्टायां त्वयि देवेशि सर्वेषां तोषणं भवेत् ॥५१४१॥

सृष्टेरादौ त्वमेकासीस्तमोरूपमगोचरम् ।
त्वत्तो जातं जगत् सर्व परं ब्रह्म सिसृक्षया ॥५१४२॥

महत्तत्त्वादिभूतान्तं त्वया सृष्टमिदं जगत् ।
निमित्तमात्र तद्ब्रह्म सर्वकारणकारणम् ॥५१४३॥

सद्रूप सर्वतो व्यापि सर्वमावृत्य तिष्ठति ।
सदैकरूप चिन्मात्रं निर्लिप्त सर्ववस्तुषु ॥५१४४॥

न करोति न चाश्नाति न गच्छति न तिष्ठति ।
सत्यं ज्ञानमनाद्यंतमवाङ्मनसगोचरम् ॥५१४५॥

तस्येच्छामात्रमालम्ब्य त्व महायोगिनी परा ।
करोषि पासि हंस्यन्ते जगदेतच्चराचरम् ॥५१४६॥

तव रूपं महाकालो जगत्संहारकारकः ।
महासंहारसमये कालः सर्वं ग्रसिष्यति ॥५१४७॥

कलनात् सर्वभूतानां महाकालः प्रकीर्तितः ।
महाकालस्य कलनात् त्वमाद्या कालिका परा ॥५१४८॥

त्वमाद्या सर्वविद्यानामस्माकमपि जन्मभूः ।
त्वं जानासि जगत् सर्वं न त्वां जानाति कश्चन ॥५१४९॥

त्वं काली तारिणी दुर्गा षोडशी भुवनेश्वरी ।
धूमावती त्वं वगला भैरवी छिन्नमस्तका ॥५१५०॥

त्वमन्नपूर्णा वाग्देवी त्वं देवि कमलालया ।
सर्वशक्तिस्वरूपा त्वं सर्वदेवमयी तनुः ॥५१५१॥

त्वमेव सूक्ष्मा स्थूला त्व व्यक्ताव्यक्तस्वरूपिणी ।
निराकारापि साकारा कस्त्वां वेदितुमर्हति ॥५१५२॥

उपासकानां कार्यार्थं श्रेयसे जगतामपि ।
दानवानां विनाशाय धत्से नानाविधास्तनूः ॥५१५३॥

चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा तथा ।
त्वमेव विश्वरक्षार्थं नानाशस्त्रास्त्रधारिणी ॥५१५४॥

तत् तद्रूपविभेदेन नानानामविधारिणी ।
कलिदोषनिरासार्थं ध्यायेत् तव पदांबुजम् ॥५१५५॥

एष एव महेशानि तत्रोपायोऽस्ति नापरः ।
प्रायश्चित्त तु पापानां देवि ते नामसंस्मृतिः ॥५१५६॥

न संत्यघानि तावंति यावती शक्तिरस्ति हि ।
नाम्नि देव्याः पापदाहे तस्माद् भीतिः कुतोऽद्रिजे ॥५१५७॥

अवशेनापि यन्नाम लीलयोच्चारितं यदि ।
किं किं ददाति तद् ज्ञातुं समर्था नास्मदादयः ॥५१५८॥

तस्मात् कलिभयाद् देवि पुण्यक्षेत्रेऽथवा क्वचित् ।
निरंतरं पराम्बाया नामसंस्मरणं चरेत् ॥५१५९॥

छित्वा भित्वा च भूतानि हत्वा सर्वमिदं जगत् ।
यो त्वां नमति सद्भक्त्या स पापै नं विलिप्यते ॥५१६०॥

रहस्यं सर्वशास्त्राणां गुह्यमेतदुदीरितम् ।
कलौ नामैव नामैव नामैव मम जीवनम् ॥५१६१॥

अतः परं हि नास्त्येव नास्त्येव भवभेषजम् ।
तस्मान्नाम्नि रतिं कुर्यात् सदा तद्गतमानसः ॥५१६२॥

सा त्वं चितिरिति प्रोक्ता जीवनाज्जीवितैषिणाम् ।
प्रकृतित्वेन सर्गस्य स्वयं प्रकृतितां गता ॥५१६३॥

दृश्याभासानुभूतानां कारणात् त्वं क्रियोच्यते ।
वाडवाग्निशिखाकारात् शोष्या शुष्केति कथ्यते ॥५१६४॥

चंडित्वाच्चंडिका प्रोक्ता सोत्पलोत्पलवर्णतः ।
जया जयैकनिष्ठत्वात् सिद्धा सिद्धिसमाश्रयात् ॥४१६५॥

जयंती च जया प्रोक्ता विजया विजयाश्रयात् ।
ओंकारसारशक्तित्वादुमेति परिकीर्त्यसे ॥५१६६॥

गायत्री गायनात्मत्वात् सावित्री प्रसवस्थितेः ।
सरणात् सर्वदृष्टीनां कथिता त्वं सरस्वती ॥५१६७॥

गौरी गौरांगदेहत्वाद् भवदेहानुषंगिणी ।
सुप्तानामथ बुद्धानामनात्रोच्चारणाद् हृदि ॥५१६८॥

नित्यं त्रैलोक्यभूतानामुमेतीन्दुकलोच्यते ।
प्रोक्तापराजिता वीर्या दुर्गा दुर्ग्रहरूपतः ॥५१६९॥

मंगलासि च सर्वेषां तेन त्वं सर्वमंगला ।
वरदासि च मर्त्यानां वरदा तेन कीर्त्यसे ॥५१७०॥

भक्तानां शं करोषि त्वं शंकरी तेन गीयसे ।
अशेषान् जयसे दुर्गान् दुर्गा तेन निगद्यसे ॥५१७१॥

प्राणप्रयाणपाथेयं संसारव्याधिभेषजम् ।
दुर्गार्णवपरित्राणं दुर्गानामाक्षरद्वयम् ॥५१७२॥

संसारार्णवमग्नानां दुर्गैका परमं पदम् ।
दुर्गैव देवता सर्वा दुर्गैव कर्म वैदिकम् ॥५१७३॥

दुर्गैव परमं तत्वं दुर्गैव परमं बलम् ।
दुर्गैव परमं ज्ञानं दुर्गैव परमं तपः ॥५१७४॥

दुर्गैव विश्वमखिलं दुर्गैव परमागतिः ।
दुर्गैव परमं देवं दुर्गैव परमौषधम् ॥५१७५॥

दुर्गैव सुखमत्यन्तं दुर्गैका निर्वृतिः परा ।
दुर्गैका परमातुष्टि र्दुर्गैका परमं यशः ॥५१७६॥

दुर्गैका प्राणिसर्वस्वं दुर्गाभिन्नमिदं जगत् ।
न तया रहितं किंचिद् भूतं स्थावरजंगमम् ॥५१७७॥

दुर्गैका परमा देवी तदेव परमं पदम् ।
नामरत्नमिदं भद्रे तव सर्वेषु नामसु ॥५१७८॥

एतत् स्मरणसंतुष्टः किंचिन्नैवाभिवांछति ।
नासाध्यं विद्यते किंचिदिहलोके परत्र वा ।
नामनिष्ठस्य देवेशि तव भक्तस्य सर्वदा ॥५१७९॥ इति ॥

अन्यत्रापि—

दुर्गा जगदिदं सर्वं दुर्गा सर्वस्य कारणम् ।
अहं च दुर्गेत्येवं यत् तद् दुर्गास्मरणं विदुः ॥५१८०॥

श्रीदुर्गाशब्दनिरुक्तिः यथा मुण्डमालातन्त्रे—

दुर्गो दैत्ये महाविघ्ने भवबंधे कुकर्मणि ।
शोके दुःखे च नरके यमदंडे च जन्मनि ॥५१८१॥

महाभये च रोगे चाप्याशब्दो हंतृवाचकः ।
एतान् हन्त्येव या देवी सा दुर्गा परिकीर्तिता ॥५१८२॥

दैत्यनाशार्थवचनो दकारः परिकीर्तितः ।
उकारो विघ्ननाशस्य वाचको वेदसंमतः ॥५१८३॥

रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारः परिकीर्तितः ॥५१८४॥

स्मृत्युक्तिश्रवणाद्यस्या एते नश्यन्ति निश्चितम् ।
ततो दुर्गा हरेः शक्ति र्हरिणा परिकीर्तिता ॥५१८५॥

दुर्गेति दैत्यवचनोऽप्याकारो नाशवाचकः ।
दुर्गं नाशयति या नित्यं सा दुर्गा प्रकीर्तिता ॥५१८६॥

भूतानि दुर्गा भुवनानि दुर्गा नराः स्त्रियश्चापि सुरासुरादिकम् ।
यद् यद्धि दृश्यं खलु सैव दुर्गा दुर्गास्वरूपादपरं न किंचित् ॥५१८७॥

रुद्रयामले—

दुर्गानाम जपो यस्य किं तस्य कथयामि ते ।
अहं पंचाननः कांते तज्जपादेव सुव्रते ॥५१८८॥

धनी पुत्री तथा ज्ञानी चिरंजीवी भवेद् भुवि ।
प्रत्यहं यो जपेद् भक्त्या शतमष्टोत्तरं शुचिः ॥५१८९॥

अष्टोत्तरसहस्रं तु यो जपेद् भक्तिमान् नरः ।
प्रत्यहं परमेशानि तस्य पुण्यफलं शृणु ॥५१९०॥

धनार्थी धनमाप्नोति ज्ञानार्थी ज्ञानमेव च ।
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बंधनात् ॥५१९१॥

भीतो भयात् प्रमुच्येत पापान् मुच्येत पातकी ।
पुत्रार्थी लभते पुत्रं देवि सत्यं न संशय ॥५१९२॥

अयुतं यो जपेद् भक्त्या प्रत्यहं परमेश्वरि ।
निग्रहानुग्रहे शक्त स भवेत् कल्पपादपः ॥५१९३॥

तस्य क्रोधे वसेत् मृत्युः प्रसादे परिपूर्णता ।
एवं सत्यं विजानीहि समर्थः सर्वकर्मसु ॥५१९४॥

मासि मासि च यो लक्षं जपं कुर्याद् वरानने ।
न तस्य ग्रहपीडा स्यात् कदाचिदपि शांकरि ॥५१९५॥

न चैश्वर्यं क्षयं याति न च सर्पभयं भवेत् ।
नाग्निचोरभयं क्वापि न चारण्ये जले भयम् ॥५१९६॥

पर्वतारोहणेनापि सिंहव्याघ्रभयं तथा ।
भूतप्रेतपिशाचानां भयं नापि भवेत् क्वचित् ॥५१९७॥

न च वैरिभयं कांते नापि दुष्टभयं भवेत् ।
परलोके भवेत् स्वर्गी सत्यं त्वै वीरवंदिते ॥५१९८॥

चंद्रसूर्यसमो भूत्वा वसेत् कल्पायुतं दिवि ।
वाजपेयसहस्रस्य यत् फलं स्याद् वरानने ॥५१९९॥

तत् फलं समवाप्नोति दुर्गानामजपात् प्रिये ।
न दुर्गा नाम सदृशं नामास्ति जगतीतले ॥५२००॥

तस्मात् सर्वप्रयत्नेन स्मर्तव्यं साधकोत्तमैः ।
यस्य स्मरणमात्रेण पलायन्ते महापदः ॥५२०१॥इति।

अन्यच्च—

दुर्गा दुर्गेति वाणी प्रसरति सहसा यस्य वक्त्रात् कदाचित्
कृत्वांके पाति नित्यं सुतमिव कमला तं च नारायणोऽपि ।
किं ब्रूमस्तस्य भाग्यं प्रमथगणपतिः सावधानो यदर्थे
ब्रह्माशीर्वादमुच्चै निरवधि कुरुते स्वस्ति वाक्यं यमोऽपि ॥५२०२॥

शूलं शूली पाशमादाय पाशी चक्रं चक्री वज्रमादाय वज्री ।
धावत्यग्रे पृष्ठतः पार्श्वयोश्च दुर्गा दुर्गावादिनो रक्षणाय ॥५२०३॥

इत्थं भगवतीनाम कीर्तनं सर्वकामदम् ।
वर्ततां वाचि मेऽजस्रं येन स्यां तत्कृपास्पदम् ॥५२०४॥

एषैव जगतां धात्री नानाभेदविभूषिता ।
दिश्यान् मंगलमायुष्यं भक्तानां भक्तवत्सला ॥५२०५॥

नानाचारव्रतधरैः देवासुरनरादिभिः ।
यांचिता पूरयत्यर्थान् दुर्लभान् सा तनोतु शम् ॥५२०६॥

निगमैरागमै र्नित्यमेका चिद् या च कथ्यते ।
सिद्धिं कर्ममयीं दद्यात् भक्तेच्छोपात्तविग्रहा ॥५२०७॥

सत्संप्रदायत्रितयरहस्यं सारमद्भुतम् ।
भूयात् श्रीमद्गुरोः प्रीत्यै संप्रदायमहेशितुः ॥५२०८॥

श्रीमद्दुर्गानंदनाथः शंकरो भक्तवत्सलः ।
प्रीयतां करुणामूर्ति र्भवभीतिहरो गुरुः ॥५२०९॥

नानागमात् संगृहीतं सदागमरहस्यकम् ।
भूमौ भूयात् साधकानां सदा कल्पतरूपमम् ॥५२१०॥

संप्रदायविशुद्धस्य तितीर्षोरागमांबुधेः ।
निर्मत्सरस्य सुहृदः सुखायैषोऽस्तु सत्प्लवः ॥५२११॥

दृष्ट्वा नंदन्तु सुधियः क्षाम्यंतूल्लेखविभ्रमम् ।
नानावाक्यैक्यलिखने प्रायो मुह्यति लेखकः ॥५२१२॥

उद्घाटितं मूढबुद्ध्या ह्यनुद्घाट्यमपीह यत् ।
तत् क्षन्तव्यमशेषेशि रोषोऽज्ञे नोचितः सुते ॥५२१३॥

वाललौल्यमशेषं हि मातापित्रोः कृपास्पदम् ।
भवत्यपारकरुणे करुणा मयि धीयताम् ॥५२१४॥

द्विवेदिसंभवेनाथ कोशलप्रांतवासिना ।
रचितः सरयूदत्तेनायमागमसंग्रहः ॥५२१५॥

स्वरानलांकचन्द्रेऽब्दे चतुर्थ्यां फाल्गुनेऽसिते ।
संग्रहः क्षेमदः पूर्णो वर्वर्त्तु कुशलं क्षितौ ॥५२१६॥

रमंतु साधका देवीभक्तिनिर्भरितांतरा:
अंबाकटाक्षसंपातो भूयात् तेष्वनिशं शुभः ॥५२१७॥

इति श्रीमदागमरहस्ये सत्संग्रहे द्विवेदिवंशोद्भव साकेतप्रांतपुरस्थायि
सरयूप्रसादशर्मविरचिते श्रीपराम्बानाममाहात्म्यकथन नाम
चतुर्विशः पटल ॥२४॥ आदितो द्विपंचाशत्तम.।

समाप्तश्चायमुत्तरार्धः विक्रम सवत् १९३७ का लिखित
नानुराम ब्राह्मण दाधीचकुल उत्पन्न.। श वोमवीतु।

